क नु भवसि महात्मन् ! ब्रूहि कष्टासवोऽमी
त्वदनुसरणपान्थाः कण्ठ एव भ्रमन्ति ॥ १३ (ढ)

अत्र कविनिबद्धानुरागिवाला वक्त्री । अस्याः प्रौढ़ोक्तौ शब्दप्रत्यक्षानुभवरूपं प्रमाणत्रयं परस्परव्याहतमपि सर्व्वमेव प्रमाकरणम् । न क्कुत्राप्यप्रामाण्यमिति वस्तु, तेन च त्वं व्यापकोऽसीति वस्तु, तेनैकस्य सर्व्वानुगतत्वाद्विरोधे विरोधालङ्कारो व्यतिरेको वा । 'क नु भवसी'ति प्रश्नेन सन्देहालङ्कारः, तेन 'महात्मनि'ति कदाचिद्यदि न ब्रूषे, तदा कपटी त्वमिति हेत्वलङ्कारः । तेन 'कष्टासवोऽमी त्वदनुसरणपान्थाः कण्ठ एव भ्रमन्ती'ति, प्राणास्त्वदनुसरणे तव पश्चाद्गमने पान्थाः पथिकाः सन्तस्त्वदप्राप्तिमशप्य स्वस्थानन्यक्ता कण्ठ एव भ्रमन्ति । अत्र यद्यपि लोकव्यवहारदृष्ट्यैकव्यक्तेरेकस्मिन् क्षणे स्थलत्रयवर्त्तित्वस्यासम्भवेन तज्ज्ञानस्यासम्भवात् प्रौढ़ोक्तिस्तथाप्यचिन्त्यैश्वर्य्ये श्रीकृष्ण एकक्षणे स्थलत्रयवर्त्तित्वं नासम्भवमित्याह—अस्याः प्रौढ़ोक्ताविति । प्रमाणत्रयं परस्परव्याहतं, एकक्षणे स्थलत्रयवृत्तित्वस्य प्रमात्मकज्ञानजननेऽसमर्थमपि सर्व्वमेव प्रमाणत्रयं प्रमाकरणम् । त्वयि न कस्यापि वस्तुनोऽसम्भवः, अतो न क्कुत्राप्यप्रामाण्यमिति वस्तु व्यङ्ग्यं वस्तुरूपमेको भेदः । पुनस्तेन व्यापकत्वरूपवस्तुनैकस्य परिच्छिन्नस्य सर्व्वत्रानुगतत्वविरोधेन विरोधालङ्कारः । यद्यपि परमेश्वरत्वेन नायं विरोध (१) इत्याप्यते, तथापि व्यतिरेकालङ्कारस्तु भवत्येवेत्याह—व्यतिरेको वेति । एतादृशः पुरुषोऽन्यो नास्तीति पुरुषान्तराद्विलक्षणोऽयमिति व्यतिरेकालङ्कार इत्यर्थः । तथा [illegible] वस्तुव्यङ्ग्योऽलङ्कार इति द्वितीयो भेदः । तेन सन्देहालङ्कारेण—तथा च मत्संन्देहनिवर्त्तकं वाक्यं यदि न ब्रूषे तदा त्वं न महात्मा किन्तु कपटीति हेत्वलङ्कारः । तेनालङ्कारव्यङ्ग्योऽलङ्कार इति तृतीयो भेदः । तेन हेत्वलङ्कारेण मत्प्राणाः कण्ठ एव घूर्णन्ते, अतो निर्णीय कथ्यतामिति वस्तु व्यङ्ग्यम् ।

---

(ढ) पद्यमेतत् कविकर्णपूरगोस्वामिनो गुरोः सुगृहीतनाम्नः श्रीमदाचार्य्यश्रीनाथस्य । अयमेवावस्थाविनिवेशः प्रेमोन्माद इति वैष्णवैर्गीयते । श्रीराधाभावभावितानां श्रीकृष्णचैतन्यचरणानां नीलाचलवर्त्तिनामियमेवावस्था तच्चरितेषु प्रकटिता । एवमपि लोके नायकनायिकादयः स्वदयितामासदन्तादियच्छाशापरनिर्द्दिष्टदेशादिमार्गं तथा तदात्मीयतो संवादसङ्गावाद्याकाङ्क्षन्ते, पश्चात्त विरहव्याकुलाः 'प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा पर्य्यङ्के सा दिशि दिशि चा से'त्यादि जल्पितमालपयन्तः मनःसु, अन्विष्यन्तोऽपि नाप्नुवन्तः स्वभवने स्वन्धिमेव वा प्रतिनिवर्त्तन्ते ।

---

(१) 'यदि परमेश्वरत्वे नाय विरोधः' इति (क) पुस्तके, 'यद्यपि परमेश्वरत्वेन चायं विरोध' इति (ङ) पुस्तके पाठः ।

मध्वन्तकृत् सुमनसामामोदैर्घ्राणतर्पणः।
राधाद्यपरपर्य्यायो माधवः कस्य न प्रियः॥ १५

## वाक्येऽष्टादशधा त्विमे। ४६ का

इमेऽष्टादशधा ध्वनयो वाक्ये भवन्तीत्यर्थः। अष्टादशधात्व तु—अविवक्षितवाच्यस्य द्वौ भेदावर्थान्तरसंक्रमितमत्यन्ततिरस्कृतञ्चेति। विवक्षितवाच्यस्य षोडश—असंलक्ष्यक्रमव्यङ्ग्य एकः, संलक्ष्यक्रमव्यङ्ग्याश्च पञ्चदश। तत्र शब्दशक्त्युद्भवौ द्वौ, अर्थशक्त्युद्भवो द्वादश, उभयशक्त्युद्भव एकः।

## वाक्य एव द्विशक्त्युत्थः—४७ का

शब्दार्थोभयशक्त्युद्भवो ध्वनिर्वाक्य एव। 'इयं मुंदावणमणी' (२य किरणे ६ श्लोकः) इत्यादि तदुदाहरणम्।

काचिद्व्रजसुन्दरी गुरुजनशङ्कया श्लेषेण स्वसखीमाह—हे सखि! माधवो वैशाखः कस्य न प्रियः, पक्षे श्रीकृष्णः। मधोश्चैत्रस्यान्तकृत्, वैशाखस्य प्रथमदिनारम्भ एव चैत्रस्यान्तर्ह्रीनादिति; अथ पक्षे मधुनाम्नो दैत्यस्यान्तकृत्। सुमनसां स्वोत्पन्नपुष्पाणामामोदैर्जनानां घ्राणं तर्पयतीति, पक्षे शोभनं मनो यासां तासां सुन्दरीणामामोदैः स्वीयाङ्गगन्धैर्घ्राणं तर्पयतीति। 'राधादि'शब्द एवापरपर्य्यायो यस्य सः, 'वैशाखे माधवो राध' इत्यभिधानात्, पक्षे राधाया एवाद्यः प्रथमः, परः श्रेष्ठः, पर्य्यायः परिवर्त्त्य मनुरक्तिर्यस्य सः। अत्रापि वैशाखकृष्णयोरुपमालङ्कारो व्यङ्ग्यः—स च परिवृत्तसह-'मधु''सुमनः' 'राध'पदव्यङ्ग्यत्वाच्छब्दशक्त्युद्भवः, तथा परिवृत्तिसह'मामोदैर्घ्राणतर्पणः'इतिपदप्रयोगादर्थशक्त्युद्भवश्च।

वाक्य इति—परस्पराकाङ्क्षितबहुपदनिचयघटितत्वं वाक्यत्वम्। तथाच पूर्व्वोक्तानि सर्व्वाण्येवोदाहरणानि वाक्य एव दृष्टानि, न तु स्वतन्त्रैकैकपद इति भावः। अष्टादशप्रकाराणां गणनामाह—अष्टेति। षोडशप्रकाराणां विवक्षितवाच्यानां गणनामाह—असंलक्ष्यक्रमेति। पञ्चदशप्रकाराणां संलक्ष्यक्रमव्यङ्ग्यानां गणनामाह—तत्र शब्दशक्त्युद्भवे इति। तेषां ध्वनीनां मध्ये शब्दार्थोभयशक्त्युद्भवो ध्वनिस्तु वाक्य एव सम्भवति, न तु पदे।

---

वस्तुतोऽलङ्कारस्य चैत्यादिकया दिशा ध्वनेरनेकविधत्वं सम्भवति। तन्मते 'अयि मधुसन्तापहर' इत्यादौ श्लेषालङ्कारवलेनोपमा व्यङ्ग्या, ततश्च 'सन्तप्तानां त्वमसि शरण'मिति श्रीकृष्णस्य मेघस्येव सर्व्वाभीष्टपूरकत्वरूपं वस्तु ध्वनितम्। तत्तु गौणस्यैव भवतीति 'कष्टेनेत्युक्तं' टीकायिता। एवमेव द्वितीयोदाहरणस्यालङ्कारमात्रव्यङ्ग्यमयस्यापवारणमिति टीका तदुद्भावनम्। वस्तुतस्तूदाहरणद्वयमेवैककथाभिप्रायोद्दृतिः, अतो टीकायां 'स्वीक्रियते' इति पदात् पश्चात् 'इति'पदस्य निरर्थकसन्देह इति प्रतिभाति।

## पदे सप्तदशापरे । ४८ का

उभयशक्त्युत्थं विनाऽपरे सप्तदश पदेऽपीत्यर्थः । तथा च—

Dhvanyaloka— 'पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ।
under III. [redacted] एकेनैव प्रसूनेन नवेवोद्यानकेतकी ॥' इति (घ)

तत्र दिङ्मात्रमुदाह्रियते ।

पार्षदाः पार्षदा यस्य लक्ष्मीर्लक्ष्मीः क्षपा क्षपा ।
अवतारोऽवतारश्च स देवः केन सेव्यते ॥ १६

अत्र द्वितीय'पार्षदा'दिशब्दा निरन्तरपार्श्वस्थत्वनिरपायत्वनिरुपाधित्व-जन्ममरणाभावरहितत्वेष्वर्थान्तरेषु संक्रमिताः ।

तदुदाहरणमिपि—तेषामष्टादशप्रकाराणामुदाहरणमित्यर्थः ।

उभयशक्त्युत्थं विनाऽपरसप्तदशप्रकाराणां पूर्वं वाक्य उदाहरणानि दत्तानि, पदेऽप्युदाहरणानि सम्भवन्तीत्याह—उभयेति । ननु यत्किञ्चित्पदध्वनिना वाक्यसमुदाये(10) कथमुत्तमत्वव्यवहारस्तत्राह—पदेति । पदद्योत्येन ध्वनिना सुकवेर्भारती काव्यरूपा वाणी भाति यथोद्यानस्था नवीना केतक्येकेनैव पुष्पेण भाति । केतकीवृक्षस्य नवीनदशायामेव शोभातिशय इति भावः ।

तत्र पदे । पूर्वोक्तलक्षणामूलध्वन्यभेदस्यार्थान्तरसंक्रमितवाच्यस्य केवलपद उदाहरणमाह—पार्षदा इति । अत्र द्वितीय'पार्षद'पदस्य सदा पार्श्वस्थितत्वे लक्षणा, तथा चान्येषां पार्षदापेक्षया भगवत्पार्षदस्य सर्वोत्कर्षो ध्वनितः, इति लक्षणामूलो ध्वनिः

---

(घ) यत्रैकस्य पदस्य शक्तिः प्राधान्यमन्येषामानुगुण्यमात्रं तत्र पदध्वनिता ; यत्र तु विभिन्नपदानां क्रियाकारकभावापन्नानां शक्तिस्तुल्यास्ता, तत्र वाक्यध्वनितेति विवेकः । एकस्यैव पदस्य परिस्फुरितत्वात्तदत्वयोरुभयोर्यदि पदमपदत्वासोभयशक्तिमूलभेदस्य वाक्यव्यतिरेकिण्येव सम्भवः, अतः पदमात्रद्योतिनिगाध्वनयः सप्तदशैव । एतौ पूर्वलो ध्वनिरेकतया विच्छित्तिविशिष्टावयवार्देव एकत्रस्यता सत्तया, यदुक्तं ध्वन्यालोकेऽस्योदाहरणतया परिकर-श्लोकोदाहरणेन (३।२) :—'पदानां स्मारकत्वेऽपि पदमात्रावभासिनः । तेन ध्वनेः प्रभेदेषु सर्वेष्वेवास्ति रम्यता ।' एतदोद्धृतं पद्यं ध्वन्यालोकस्थितपद्यस्य रूपान्तरमिति प्रतिभाति । मुद्रितध्वन्यालोकपुस्तके पाठोऽन्यथा दृश्यते—'विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी । पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ।' एतयोर्भिन्नपाठस्तु 'एकावयवसंस्थेन भूषणेनेव कामिनी'त्यादि ।

---

(10) [illegible]

तवानुकम्पा तु तवैव शोभते ममापि दौर्ज्जन्यमहो ! ममापि हि ।
रतिर्मे दीर्घा मम, दीर्घमेव ते प्रेम, प्रियाऽहं तव लक्षणा ! किं ब्रुवे ॥ १७

अथानुकम्पा अननुकम्पा, दौर्ज्जन्यमदौर्ज्जन्यं, न दीर्घा दीर्घा, दीर्घं अदीर्घं, प्रिया अप्रियेत्यन्ततिरस्कृतम्—इत्युभयं पदगमरम् । 'फलमपि फलं माकन्दाना'मित्यादौ ( ३य किरणे १म श्लोके ) 'सौभाग्यमेतदधिक'मित्यादौ ( ३य किरणे ३य श्लोके ) चोभयोर्व्वाक्य एव विश्रान्तिरिति भेदः । (२)

एकस्मिन्नेव 'पार्षद' पद उत्कर्षातिशयेन संक्रमितत्वादर्थान्तरसंक्रमितच्च ज्ञेयः । एवं द्वितीय'लक्ष्मी'पदेनानपायित्वे लक्षणा—तया च भगवत्सम्पत्तिरेवानपायिनी, अतः सर्व्वोत्कृष्टेति ध्वनिः । द्वितीय'क्षमा'पदेन निरुपाधित्वे लक्षणा, तया च भगवत्क्षमैव सर्व्वोत्कृष्टेति ध्वनिः । द्वितीया'वतार'पदेन जन्ममरणभावराहित्ये लक्षणा—तया च भगवदवतार एव सर्व्वोत्कृष्ट इति ध्वनिः ।

अत्यन्ततिरस्कृतवाच्यस्य केवलपद एवोदाहरणमाह—तवेति । काचिन्मानिनी श्रीकृष्णं प्रति सोल्लुण्ठवचनमाह—तवानुकम्पा तथा तवैव शोभते । अत्रा'नुकम्पा'पदस्याकृपायां विपरीतलक्षणा, तया च कठोरत्वदोषेण त्वं दुष्ट इति ध्वनिः । वाच्यार्थस्य तिरस्कारः स्पष्ट एव । 'दौर्ज्जन्य' पदस्य सौजन्ये विरुद्धलक्षणा, तया च स्वस्योत्कर्ष इति ध्वनिः । मम रतिर्मे दीर्घा विरुद्धलक्षणया दीर्घेत्यर्थः । तव प्रेम दीर्घं विरुद्धलक्षणयाऽदीर्घमित्यर्थः । तवाहं प्रियेत्यत्र 'प्रिया'पदस्याप्रियायां लक्षणा, तया च मम निकटे तवागमनमनुचितमित्युपालम्भो ध्वनिः । 'फलमपि फलं माकन्दाना'मिति पूर्व्वोक्तोदाहरणस्य द्वितीय 'फल'पदस्याधरार्थत्वया निन्दात्वध्वनी 'सह तुलयितुं' येनैतेषां न किञ्चन

---

(२) 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति न्यायेनात्र विपरीतलक्षणासमाश्रयणा'दनुकम्पा'दिपदेभ्य इष्टार्थबोधः । तस्मादतिनिष्ठुरस्त्वं, भक्ते त्वदेकशरणे च मयि न ते क्षमालेशः इत्यथो इष्टानिष्टमनाचरतो मम पूर्व्वजन्मदुष्कृतधारेत्यात्मतिरस्कारश्च । एवमेव 'रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः । निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥' इति रामायणपद्ये, 'या निशा सर्व्वभूतानां तस्यां जागर्त्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥' इति श्रीमद्भगवद्गीतापद्ये च पदत एव विरुद्धार्थप्रतीतिः, अतस्तत्रत्यस्य एव ध्वनिरित्यलम् । एवमपि 'तं वन्दे' इत्याद्यनन्तरोदाहृते पद्ये तादृगशुभैकगोचरत्वाद्योतकानां 'वन्दे'दिपदानामेव प्राधान्यम्, अन्येषान्तु तदुपकारित्वमेवेति मुख्यतः पदमूल एव व्यपदेशः 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायात् । 'तन्मध्यमन्दस्मितं श्वसितानि तानि सा वै कलङ्कविधुरा मधुराननश्री'रित्यादिपर्याप्ततराव्यततश्लोक इवेहापि सर्व्वनामपदानां व्यञ्जकता बोध्या ।

तं वअणं सो एफंसो तं रूअं तं सरीरसोरब्भं ।

ते अहरमहुरिमाणो दाणिं जाआहलं जाअं ॥ १८

अत्र 'तदा'दिपदान्यनुभवगोचरानर्थान् प्रकाश्य पूर्व्वममृतवदासीत् सर्व्व-मिति वस्तु प्रकाशयन्तीति पदगतो ध्वनिः ।

शब्दशक्त्युद्भवो यथा—

मुग्धे ! पद्मिनि ! कुलजे ! मा कार्षीरत्र विश्वासम् ।

अनवस्थितोऽतिमदतः सोऽयं साक्षादनेकपः क्षण्यः ॥ १९ ॥

अत्रा'नेकप'शब्द एकार्थोऽपि कविनिबद्धवक्तृप्रौढ़ोक्तिवशादनेकार्थतां गतः सन् 'मुग्धे' इत्यादि सम्बोधनवशायोग्येन साधनेन साध्यं स्वगतमनवस्थित्वादिकम्—यथा त्वं मुग्धा, अयमनवस्थितः, त्वं कुलजा, अयमतिमदः, त्वं पद्मिनी, अयमनेकपो हस्तीत्यर्थवयं बोधयति । अनेकं पातीति, अनेकेन पिबतीति च,—'पद्मिनी'ति नायिकाविशेषः, कमलिनीति च । त्वं कुलजा, अयमनेकं पिबतीति सतथ, तेनात्र विश्वासं मा कार्षीरितोऽतिमदतोऽनवस्थितः । मदो दानं गर्व्वश्च, तेनास्य सङ्गात् करिसङ्गादिव पद्मिन्यास्तव विमर्द्दो भविष्यतीति वस्तु, तेन चानवस्थितत्वेनातिमदत्वेन चायन्त्वामवश्यं मर्द्दयिष्यतीति

मुग्धते इति वाक्यान्तरस्यापेक्षा वर्त्तते ; एवमन्येषां न्यूनताबोधकस्य 'अधरोऽधर' इति वाक्यस्यापेक्षा वर्त्तते, अतो न तत्र केवलपदमात्रे ध्वनिरिति । 'सौभाग्यमेतदधिक'मिति पूर्व्वोक्तोदाहरणस्य'सौभाग्या'दिपदानां विरुद्धलक्षणया प्रेमशून्यत्वरूपव्यङ्ग्यार्थबोधे 'न स्वर्गेण भवतामस्य मार्ग' इत्यादि बहुवाक्यानामपेक्षा वर्त्तेत इति न पदमात्रे ध्वनिः ।

अभिधामूलध्वनेः प्रभेदस्य शब्दशक्त्युद्भवस्य पदमात्रे क्रमेणोदाहरणद्वयमाह—तं वअणमिति । तद्वचनं स स्पर्शस्तच्छरीरसौरभ्यम् । तेऽधरमधुरिमाण इदानीं जाताहलं जातम् । अत्र वाक्यान्तरापेक्षां विना केवल'तत्'पदेनैव वचनादीनामन्यतमत्वं ध्वनितम् । 'आश्रमान्ते विमलहृदय' इति (३य किरणे ४ श्लोके) पूर्व्वोक्तपद्ये प्रसिद्धचन्द्रादातिरेकालङ्कारध्वनावनेकवाक्यानामपेक्षा वर्त्ततेति ।

मुग्ध इति—हे मुग्धे ! अत्र त्वया विश्वासं माकार्षीर्यतोऽयमनवस्थितो भ्रष्ट इत्यर्थः । एवमतिमदादनेकपो मत्तहस्ती च । नन्वनेकप'शब्दोऽनेकजनपालनकर्त्तरि रूढ़िरेव, तेन कथमस्यार्थानुपपत्त्या तस्य हस्तिबोधकत्वमित्यत आह—अत्रेति । अयमभोऽप्यर्थः कविनिबद्धवक्तृप्रौढ़िवशात् अन्यपरतां प्राप्नोति, अतो'ऽनेकप'शब्दस्य हस्तिज्ञापकत्वं नासम्भव-मिति बोध्यम् । मुग्धे इत्यादीनि—हे मुग्धे ! हे पद्मिनि ! हे कुलजे ! इति सम्बोधनानां

वस्त्वन्तरञ्च । हस्तिसाधर्म्यादुपमालङ्कारः, अनवस्थित इति हेत्वलङ्कारः, अनेकस्य भर्त्तेति स्वभावोक्त्यलङ्कारः—इत्यलङ्कारव्यञ्जकः शब्दशक्त्युद्भवः पदगतः ।

पदगतार्थशक्त्युद्भवः स्वतःसम्भवी यथा—

णिहुअणकथाहिं धण्णा णिअपरिवारं सुहावेंति ।

अप्पाणं पि ण हु तदा सुमरइ दाणिं भणाहु किं भोदी ॥ २०

अत्र न ता धन्यास्त्वमेव धन्या, तासां सखीभ्यो वयमतिसुखिन्यः ; त्वदानन्दावेशादेव वयमकथनेऽप्यानन्दभाजः, तास्तु तत्कथयैवेति 'धन्या'पदगतः स्वतःसम्भवी । अपरे तूह्याः, ग्रन्थगौरवभयाच्चोदाह्रियन्ते । वाक्यगताः पूर्व्वमेव कियन्तो दर्शिताः ।

मुग्धत्वमद्विनीत्व (११) कुलजात्वरूपार्थत्रयेण साधनेन साधनत्रयेण श्रोतव्यगतमनवस्थितात्वाद्यर्थत्रयं साध्यं यथासंख्येन बोधयति । तथाहि तव मौग्ध्यं विलोक्यैव तस्य धार्ष्ट्यं प्रादुर्भवति, न तु सर्व्वदा धृष्टः । एवं तव कुलजात्वमाकर्ण्यैव मत्तो भवति, न तु सदा मत्तः । एवमन्यत्रापि त्वं मुग्धा, अयमनवस्थितो धृष्टः । 'अनेकप'शब्दस्य व्युत्पत्त्या नानार्थत्वमेव बोधयति—अनेकमिति । अनेकवधूजनं पाति स्वाङ्गसङ्गदानेन रक्षतीति व्युत्पत्त्या 'अनेकप'शब्दा'नेकवधूपति'शब्दयोस्तुल्यार्थता'दनेकप'शब्देनानेकवधूपतिः श्रोतव्यो बोध्यः । एवमनेकमधरं पिबतीति व्युत्पत्त्याऽपि कामोन्मत्तः स एव बोध्यः । तथाऽनेकेन स्त्रीपुत्रादिना पिबतीति व्युत्पत्त्या हस्ती बोध्यः—मत्तहस्तिनः स्वभाव एषायं यत् स्त्रीपुत्रादिभिः सहैव जलं पिबति, तान् पाययति च । यद्वाऽनेकाभ्यां मुखसुखाभ्यां पिबतीति । हस्तिपक्षे मदो दानं मदजलमित्यर्थः, कामपक्षे मदो गर्व्वः । तेन चेति—तेन वस्तुरूपव्यङ्ग्येनेत्यर्थः । अनवस्थितत्वेन धूर्त्तत्वेनातिमदत्वेन च हेतुनाऽयं श्रोतव्यस्त्वां न त्यक्ष्यति, किन्त्ववश्यं मर्द्दयिष्यत्येवेति वस्त्वन्तरं व्यङ्ग्यम् । अनवस्थितत्वेन हेतुना भाविमर्द्दनस्यानुमानाद्धेत्वलङ्कारस्य व्यङ्ग्यः । वस्तुतस्तु श्रोतव्योऽनेकस्य जगतो भर्त्तेत्यनेकपशब्देन स्वभावोक्त्यलङ्कारस्य बोध्यः । पदगत इति—अत्र परस्परान्वितपदद्वयघटितवाक्यं विनैव केवल'मद्विनी'पदेन केवला'नेकप'पदेन च तत्तद्व्यङ्ग्यार्थबोधो जायत इति भावः ।

णिहुअणेति—निधुवनकथाभिर्धन्या निजपरिवारं सुखापयन्ति । आत्मानमपि न हि तदा स्मरति इदानीं भणतु किं भवती ॥ 'निधुवन'शब्दो नायिकानायकयोः सम्भोगवाची ।

(११) 'मुग्धात्वमद्विनीत्वे'त्यादि (ख) (क) पुस्तकयो. पाठः । गुणवचनत्वविवक्षायां पुंवद्भावः, अमदात्वे 'मुग्धा'पदेन तज्जातीयस्त्रीभावबोधकत्वं न भवेदिति विशेषः, तदा 'मुग्धात्वे'त्यादिरेव पाठः ।

पञ्चविंशत्ततो भेदाः— ४९ का

ततोऽष्टादशभिः सप्तदशभिश्चेत्यर्थः।

—प्रबन्धेऽप्यर्थशक्तिभूः। ५० का

अर्थशक्त्युद्भवो द्वादशविधो ध्वनिः प्रबन्धेऽपि।

सप्तचत्वारिंशदतः— ५१ का

अतो हेतोः सप्तचत्वारिंशद्भवति। प्रबन्धे दिङ्मात्रमुदाक्रियते—

सहंति गंधं वि ण वे जणाणं णवप्पसूणा णअला ह्वि गाओ।

ण तेण दोहो ण पअप्पसंगो अक्को वअग्गो तुह विसवेंति ॥ २१

अत्र वधूभिः प्रेषिता श्वश्रूधात्र्या नप्त्री तासां श्वश्रूं प्रति कथयति। तच्छ्रुत्वा सापि जरती तामाह—

करेमि किं धत्ति णि धत्तिआए वअस्सरीं लंभिअ विस्सवेद्धि।

तुह्याण सव्वं मह गोहणादिधणं जणाओ वि सुहं च दुक्खं ॥ २२ (घ)

न ता धन्या इति—तासां प्रेम्णोऽल्पप्रमाणत्वेन सम्भोगजन्यानन्दस्याप्यल्पप्रमाणत्वम्। तथा च तासां सम्भोगसमये देहाद्यनुसन्धानसत्त्वात् सखीनामग्रे तत्समयोचितचेष्टानां कथनं सम्भवति, तत्र त्वानन्दानां सम्मर्देनात्माद्यनुसन्धानमेव नासीत्, कुतः सखीनामग्रे विशेषवार्त्ताकथनसम्भावनापि अतस्तासां सखीभ्यः सकाशादयमतिसुखिन्यः। अत्र वाच्यविशेषे केवल 'धन्या'पदेन स्वत सम्भवी ध्वनिर्बोध्यः। अपरे कविप्रौढ़ोक्तिकविनिबद्धवक्तृप्रौढ़ोक्त्यादयो ध्वनयः पदनिष्ठाः स्वयमेवोह्याः। वाक्यगता ध्वनयस्तु पूर्व्वं कियन्त एव दर्शिताः, न तु तत्रापि विस्तरः कृतः।

(घ) 'धत्तिआए' इति प्राकृते स्वार्थिकः 'क'प्रत्ययः। युष्माकमित्यर्थे 'तुम्हाण,' 'तुम्हाणं' 'तुह्याण' 'तुह्याणं' इत्यादि प्रयोगाः प्राकृतरूपावतारे लक्षिताः, अतो नासाधुत्वम्। एवमपि 'कुमरेण उत्तं' इति चतुर्थपद्यस्यद्वितीयपादस्थ सन्ध्यभावो न दोषाय 'बहुल'मिति सूत्रेण संहिताविभागे निर्देशात्। प्रबन्धेऽत्र श्रीकृष्णानयनस्यावश्यम्भावितावबोधनेन ग्रामवासिनां मनोरथसम्पूर्त्तिज्ञापयन्तं ध्वनिम्। स च भगवान्दोहकुशलतया नवनीतमिष्टादिति च वर्ण्यते। तथा च 'नवनीतमेव रुचिरः परः पुमानवनीमवाप्य यतनोपविग्रहः। नवनीतकीर्तिरमरैरपि स्वयं नवनीतमिष्टतरधुना स चिन्त्यते' इति श्रीविश्वमङ्गलपदे तत्प्रणवश्रोतिः। अत्रापि हन्तौ यदपह्नुतिमभावोऽमृतरनिचयागमालङ्कारायां निर्दिष्ट, स च शब्दनिपादितया दिव्याभीरां निवसार्थमभिनयोऽस्य—वस्तुतस्तु भामीनां सर्व्वेषां श्रोतारोऽत्र समानहारिकम्मन इति ज्ञेयम्।

सुदुप्पओहा मह सव्वगाओ पुत्ता विदूरे किमहं करेमि ।

विलोअणादो तुह णंदणस्स सुदुप्पओहा वि सअंपओहा ॥ २३

इति नरत्युत्तरान्ते गोष्ठेश्वरीं गत्वा तया यदुक्तं तत् कथयति—

एव्वं क्खु ताए भणिदा गदाहं वएसरीं उत्तवदी समत्थं ।

उत्तेण ताए कुमरेण उत्तं गोसंप्पओहो मम ण क्खु होइ ॥ २४

इति चतुःसंवादप्रबन्धे वधूभिः कृष्णसन्दर्शनार्थमुपायमनवेक्ष्य प्राकरणिक-दुःप्रदोहगोदोहाभावप्रसङ्गः स्वयं प्रति विज्ञापितः । अत्रापह्नुतिनामालङ्कारः,(12) तया च दोहोपायश्चिन्तयित्वा ह्वे धात्रिकानप्त्रि ! गोष्ठेश्वरीं गत्वा विज्ञापयेतुत्तरं ज्ञातमित्युत्तरालङ्कारः । ततश्च 'सुदुःप्रदोहा मम सर्व्वगाव' इति स्वभावोक्तिरलङ्कारः । 'विलोकना'दित्यादिनाऽतिशयोक्तिः, तया च

तत इति —तथा च पूर्व्वोक्तघायगनाष्टादशभिस्तयोभयशक्त्युद्भवध्वनेस्तु केवलप्रशान्तत्वा-सम्भवात्; प्रदानत्वतत्त्वभिन्न मिलित्वा पञ्चविंशश्लेदाः सिद्धा इति भावः । चतुर्भिः पञ्चभिर्व्वा श्लोकैः सिद्धा या काव्यगाथा सा प्रबन्धः (न)। तत्रार्थशक्त्युद्भवे द्वादशविधो ध्वनिः सम्भवति ।

सर्वैतीति—सहन्ते गव्यमपि न वे जनानां नवप्रसूता सत्वरा हि गावः । न तेन दोग्धो न पयःप्रवृत्त्या । वध्वस्तो विज्ञापयन्ति ।

करोमीति—करोमि किं नप्त्रि ! धात्र्या व्रजेश्वरीं सत्वरा विज्ञापय । शृणु सर्व्वं मम गोधनादिधनं जना अपि सुखञ्च दुःखम् । सुदुष्प्रदोहा मम सर्व्वगावः पुत्रा विदूरे किमहं करोमि । विलोकनात्तव नन्दनस्य सुदुःप्रदोहा अपि स्वयंप्रदोहाः ।

नप्त्र्या उत्तरान्तरं गोष्ठेश्वरीनिकटं गत्वा तत्सर्व्वं कथितं, पश्चात्तया गोष्ठेश्वर्या यच्चोक्तं तत् सर्व्वं पुनर्वधूनिकटे आगत्य धात्रा नप्त्री कथयति—एवमिति । एवं खलु तया भणिता गताऽहं व्रजेश्वरीसुक्तवती समस्तम् । उक्तेन तया कुमारेणोक्तं गोसंप्रदोहो मम न खलु भवति । गोशब्दः प्रभातकालवाची ।

(न) चतुर्भिः पञ्चभिर्व्वेत्युपलक्षणम्—तच्च प्रकृतोदाहरणानुकूलमिति नानर्थक्यापातः । एवमपि प्रकाशकृदुदाहृते महाभारतीयकर्णपूर्व्वस्थगृध्रगोमायुसंवादे चतुःश्लोक्यां 'प्रबन्ध'-पदस्य सिद्धता । वस्तुतस्त्वर्थपरम्पराघटितवाक्योच्चयमात्र एव 'प्रबन्ध'पदस्य रूढ़िः, तदर्थके च सन्दर्भे सर्व्वत्रार्थशक्त्युद्भवो ध्वनिरेवेति महाकविसन्दर्भसञ्चयोऽत्र प्रतिपाद्यते । अत्र विषये ध्वनिकृन्मतमेव प्रमाणम् ।

(12) 'अत्रापह्नुतिनामालङ्कार' इत्यंशः (व) (ख) पुस्तकयोर्नोपलभ्यते ।

सुखदोहे परिश्रमस्तस्य न भविष्यतीति वस्तु । गोसंप्रदोहः प्रभातप्रदोषो मत्तो न भवतीति नियमालङ्कारेण सायंदोहस्तु मया कर्त्तव्य इति वधूना- [साशयं श्रुत्वा छलेन सङ्केतः कृत इति वस्तु—इति चतुःश्लोक्या समुदितः प्रबन्धो हि मुख्यो व्यञ्जकः ।

तथाहि जनानां गन्धमपि न सहन्त इत्यन्यैरदोह्यत्वं वस्तु, तत्र 'नव-प्रसूते'ति हेतोर्हेत्वलङ्कारः—तेन कृष्णं विना नासान्दोह इति श्वश्रूः कृष्ण आमायितव्य इति वस्त्वन्तरम् । 'न तेन दोह' इत्यनेन पयोऽभावादयमक्रियाः स्मः—अत्र मा कोपं कार्षीरिति च वस्त्वन्तरम् । 'गृहाण सव्य'मित्यादिना विनयमभिन्ना कृष्णोऽवश्यं व्रजेश्वर्या प्रेषयितव्य इति वस्तु ।

एवं नाटकादिषु चेति तद्भेदकथनेनानन्त्यप्रसङ्ग इति नात्र लिखितः । एवं प्रबन्धेऽप्यन्य एकादशापि बोद्धव्याः ।

—पदांशाद्या रसात्मकाः । ५२का

पदांशवर्णरचना इति त्रितयमपि रसस्य व्यञ्जकं भवति । रसोऽत्रा-संलक्ष्यक्रमः ।

अथ कुसुमाहरणच्छलेन वृन्दावनं गत्वा 'सङ्केतस्थले कृष्णमनागतं वीक्ष्य कुसुमान्यादायैव गृहमागतां पुनः सङ्केतमुरलीस्वनश्रवणानन्तरं पुनर्गमनोत्कण्ठया व्याजेन पातितकुसुमां काञ्चित् प्रति हृदयज्ञा सखी वदति—प्रियसखि ! किमिति विषीदसि ? भूमिपतितानि देवदेयानि न भवन्ति, पुनरपि तत्र कुसुमार्थे गच्छ । मया ते गुरुजनो बोधनीयः, न किञ्चिदपि ते भयमिति 'णिच्'प्रत्ययस्यैव ध्वनिः ।'

कालस्य यथा—

सहजमरुणं नेत्रद्वन्द्वं, स्वभावत एव ते
सततमुरलीध्मानक्रीडाविधौ व्रणितोऽधरः ।
वनविहरणे रात्रौ गात्रं सकण्टकनालकं
कथमिव कृतः स्वामिन् ! स्वात्माऽपराधविसंष्ठुलः (फ) ॥ २७

आनीय भवनेति—आनीय भवनद्वारं यावत् पातितानि कुसुमानि । प्रियसखि ! केनेति विषीदसि पुनरपि गच्छ तत्र कुसुमार्थम् । 'णिच्प्रत्ययस्येति—'पातितानी'त्यत्र 'णिच्'-प्रत्ययस्येत्यर्थः ।

भो, प्राणप्रिये ! ममापराधाभावेऽपि मिथ्यापराधं प्रकल्प्याधिकं क्रुध्यसि चेत्, भवतु त्वदर्पणेनैवाधुना ममापराधकल्पनं, तथापि त्वत्कृपैव मम निस्तारकारणमिति श्रीकृष्णे वदति सति, नाधुना तवापराधो जातः किन्तु मन्निकटागमनात् पूर्वमेवेति, स्फुटीकर्तुं काऽपि मानिनी सोल्लुण्ठवचनमाह—हे कृष्ण ! तव नेत्रद्वन्द्वं सहजमरुणं, न तु कस्या अपि प्रियाया जागरणेनारुणं, तव गात्रं कण्टकविद्धेन सह वर्तमानम् । हे स्वामिन् ! स्वात्मा स्वदेहः कथमपराधेन विसंष्ठुलोऽसमीचीनः कृत इति सम्भोगचिह्नस्य

(फ) यद्यपि नयनयुगलस्य स्वाभाविकारुण्यत्वमधरस्य नियतव्रणितत्वं वनविहरणसत्त्वात् गात्रस्य कण्टकितत्वेन आपाततः नायकस्यानपराधतामेव स्फुटीकर्तुं सम्भाव्यते, तथाप्यत्र निशाप्रत्ययस्य याथार्थ्यज्ञानादेव कान्ते नायकस्यापराधः स्फुट इति, न च इयमपि निह्नोतुं शक्य इति च कथ्यते । यथाहि मदितरनायिकामदरागरञ्जितादधरतोऽरुणिमा तव नयनयोरिह चुम्बनदाने संक्रान्तः, तत्कर्तिनिधुवनादिकाले प्रवृत्तो मुरलीध्वनिः, यतो भीतेरातृषङ्गं प्रति परमेकान्तचित्तस्य तथाविधप्रसरत्वेन रात्रेः, स्वागान्येषणनिपुणेन त्वया तदर्थमरण्यस्याश्रय, इति सर्वं विशदं प्रतिभाति मे इति नायिकाकूतस्याशय,—अतो धूर्तो धृष्टश्च त्वं, न त्वयि विश्वासलेशोऽपि स्थापयितुं शक्य इत्यहो मे दुर्भाग्यं तव च दौर्जन्यम् ।

अनासाद्य स्वालीमंकुरमभिवीक्ष्य स्ववदनं
सुखं वा दुःखं वा किमपि कथनीयं मृगदृशः ॥ ३२ (भ)

अत्र 'सु'पसर्गेण मालिन्यातिशयो व्यज्यते, तेन च सखीनां प्रणयाधिक्यम् ।

निपातस्य यथा—

दट्ठूण तस्स वअणं क्खणमेत्तेण क्खु हारिअं हिअअं ।
एव्वं विअ अवहरिअं तुरिअं लद्धं अ तस्हिअअं ॥ ३३

अत्र 'च' रूपनिपातेन तुल्ययोगिताऽलङ्कारः (म) निजहृदयहारणसमकालमेव तद्धृदयं लब्धं, अतोऽहं हृदयशून्या नाभवमिति तस्य हृदयं मद्धृदयमिति वस्तुना द्वयोरैकात्म्यरूपं वस्तु प्रतीयते ।

सुखं वा दुःखं वा युष्माभिरस्माकमग्रे कथनीयं, आत्मास्येऽग्रवर्तिन्यस्मिन् दर्पणेन किं प्रयोजनं, ता एव दर्पणस्थानीयाः । ताभ्यां दर्पणसाधर्म्यमाह—पततीति । युष्माकमश्रूणि पतन्ति सति ता अपि साश्राः । एवं सखीरनासाद्यास्य ।

दट्ठूणेति—दृष्ट्वा तस्य वदनं क्षणमात्रेण खलु हारितं हृदयम् । एवमिवापहृत्य त्वरितं लब्धञ्च तद्धृदयम् । अत्र 'लब्धञ्चे'त्यत्र 'च' शब्दरूपनिपातेन तुल्ययोगिता रूपोऽलङ्कारो व्यङ्ग्यः । 'च' शब्दगम्यतुल्ययोगित्वमेवाह—निजहृदयेति । अव्ययसामान्यस्यैव निपातसंज्ञा, तत् 'च' शब्दस्यापि निपातत्वं ज्ञेयम् । तद्धृदयं मद्धृदयमिवेति वस्त्वलङ्कारेण द्वयोरैकात्म्यं ध्वनितम् ।

---

(भ) अत्र इन्दुवदनाया अभिधाननैपुण्येनालीनां दर्पणस्थानीयत्वं प्रत्याय्यते । गोपीवृन्दमध्यवर्तिनीषु राधिकेव दूती परं सर्वत्र प्रेमपरवशानां नायिकानामुत्कण्ठानीलमणीभावकस्य च दर्पणस्थानीयाऽभिमतत्वगतभावप्रकाशिकेति वैष्णवकाव्यरसविवेके; श्लोकार्थम् । भावातिशये जाते न खलु कोऽपि स्वाशयं वाचा प्रकाशयितुं समर्थो भवति, किं पुनर्भावमागरमनमाना; परमानन्दसन्दोहशीलिनी गोपिकाः । स खलु सिद्धिकारः 'परिच्छेदातीतः सकलवचनानामविषयः' । अत्र तु 'सु' पदस्योपसर्गत्वख्यापनं वैयाकरणमतानवधानविजृम्भितं, 'उपसर्गाः क्रियायोगे' इत्यनुशासनात् । 'मलिना' इति धातुत्वेनाप्यप्रसिद्धेः, अमनोज्ञत्वात्, कष्टकल्पनाश्रयत्वाच्च । 'परिच्छेदातीतः सकलवचनानामविषय' इत्यादि भवभूतिपद्य, 'व्याहारे विरति'रित्यादि पद्येऽपि यथाक्रमं प्रकाशकता दर्पणता चोपमार्थो प्रादर्शि यत्नकत्वं दर्शितमिति दिक् ।

(म) परमत्र नात्र प्रस्तुताप्रस्तुतयोरेकधर्माभिसम्बन्धरूपतुल्ययोगिताऽलङ्कारः, अपि तु सहोक्तेराभासः, तुल्यकालं योग 'तेन सहेति तुल्ययोगे' इत्यादि वैयाकरणप्रयोग इव यौगिकार्थे तु तुल्ययोगस्य सम्भवः । मतं तद्विचारितं विश्वनाथ प्रकाशटीकाकृता·

सर्व्वनाम्नो यथा—

मध्ये सूक्ष्मधियः सखीपरिषदो धृत्वा सखीभूमिका-
मभ्यङ्गाय गृहीतपाणिकमलं स्पर्शेन मा जानती।
यत्तं ।—दूरमपेहि नासि कुशला स्नातुञ्च वाञ्छाद्य मे
नैत्यन्त'कुपिता यदीक्षितवती तत् केन विस्मार्य्यते॥ ३४

अत्र यत्तद्भ्यां वागगोचरत्वं व्यङ्ग्यम्।

कर्म्मभूताधिकरणस्य यथा—

अधिवसति तस्य हृदयं प्रियसखि! राधे! तथापि तव हृदयम्।
द्वावेव पूर्णहृदयौ प्रविशामो वा कथं हृदये॥ ३५

अत्राधारस्य कर्म्मभूतत्वे सर्व्वव्यापनं व्यङ्ग्यम्—'ग्रामे वसती'ति ग्रामैकदेशो गम्यते, 'ग्राममधिवसती'ति ग्रामं व्याप्येवेति चमत्कारः। (घ)

कदाचिद्राधाया मानभङ्गे उपायान्तरमपेक्ष्य स्वयमेव स्त्रीवेशं धृत्वा तस्याः निकटङ्गतवतः श्रीकृष्णस्य तदानीन्तनो य आनन्दातिशयस्तमौत्सुक्येन श्रीकृष्णः सखायं प्रत्याह—मध्य इति। सूक्ष्मधियः सखीसभायाः मध्ये तासां साहाय्येन सखीभूमिकां तैलमर्द्दनकारिणी या सखी तस्याः भूमिकां वेशं, धृत्वा तैलाभ्यङ्गाय गृहीतं राधायाः पाणिकमलं येन तथाभूतं मां स्पर्शेन जानती—नेयं सखी किन्तु पुरुषः कृष्ण एवेति जानती—राधाऽऽह—हे सखे! त्वं नवीना भवसि, तैलाभ्यङ्गकर्म्मणि न कुशला तस्माद्दूरमपेहि। स्वकौशलमभिव्यक्तीकर्त्तुमुद्यन्तं मां वीक्ष्य पुनः कुपिता सत्याह—मम स्नातुमद्य वाञ्छा नास्ति, इत्यन्तं कुपिता सा स्नानसमये यदीक्षितवती तच्चेष्टितं केन विस्मर्य्यते।

अधीति—परस्परमासक्तयोरुभयोर्हृदये पूर्णे भवतः, अवकाशाभावेन कथं सखीनां प्रवेशः सम्भवतीति।

---

उद्योतप्रभाकाराभ्यां गाढकामोद्दामस्वसर्वाङ्गालिङ्गनलक्षणपद्यालोचनप्रसङ्गे, विचारप्रकारस्तत्रैव द्रष्टव्यः। पद्येऽत्र वक्त्रा प्रौढोक्तिरेव सर्व्वालङ्कारजीवातुभूता तदाशयं पिहितापिहितसूचितं पर्य्यायोक्तालङ्कारभेदत्वेनाथ न दुर्व्बोधत्वाय कथ्यत इत्यप्युपायोयम्।

(घ) 'अहिलाषेक्षसभरिए' इत्यादि पद्य इवात्रापि कविनिबद्धवक्तृप्रौढोक्तिचमत्कृतिमावहति। 'क्रियाव्याप्यं कर्म्म' अनुशासनादाधारस्य सकलस्य कर्म्मत्वे भूतेऽयं चमत्कारोऽवश्यम्भावीति भावः। एवमपि विशिष्टकारकलक्ष्यभूतेऽनुशासनमनुल्लङ्घ्य कारकान्तरप्रयोगे तयोपपदविभक्त्योर्वा प्रयोगे प्राप्तायां व्यञ्जकतायां वस्त्वात्मि ध्वन्यालोककाव्यप्रकाशादिग्रन्थेष्ववलोकनीयानि। वस्तुतस्त्वत्र 'ग्रामं व्याप्ये'ति कर्म्मभूतत्वेऽर्थकल्पनं कथञ्चित् यादृच्छिकमिव प्रतिभाति, न हि सर्व्वत्र कर्म्मतो क्रियायाः सामस्त्येन व्याप्तिर्बोध्यते।

—ते तावद्भिः पृथक् पृथक् ।

गुणनीयाः— ५५का

न एकपञ्चाशद्भेदा एकैकन्तावद्भिरेकपञ्चाशता गुणनीयाः, शुद्धत्वेन केवलं वर्त्तमानत्वाभावाद्योग्यत्वमेवेदं मिश्रत्वयोग्यत्वाच्च ।—

—तेन चन्द्रव्योमर्त्तुपक्षसंख्यकाः (२६०१) ॥ ५६

सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया ।
चतुर्गुणे कृते वेदखवेदककुभः (१०४०४) स्मृताः ॥
शुद्धभेदैर्युतास्ते स्युः शरेषुयुगखेन्दवः (१०४५५) ॥ ५७
इति पूर्व्वैर्व्विलिखितं न सर्व्वेषामुदाहृतिः ।
भवेद्योग्यत्वमात्रत्वादाधिक्यमपि गण्यते (२) ॥

अथानेकपञ्चाशद्ध्वनिभेदानां मध्ये एकैकध्वनिभेदो यदि पञ्चाशद्ध्वनिभिः स्यात्तदैकैक एव भेद एकपञ्चाशत्संख्यको भवति । एवं क्रमेणानन्तभेदा भवन्ति । तत्रायं क्रमः—एकपञ्चाशद्भेदानां मध्ये एकैकभेदो यदा पञ्चाशद्भेदैः सह कथ्यमानसंख्यया स्वतन्त्रपञ्चभ्यो विमिश्रः स्यात्तदैकपञ्चाशद्भेदा एव एकपञ्चाशद्भेदैः पूरणीयाः, तथा सति मिलित्वा चन्द्रव्योमर्त्तुपक्षसंख्यका ध्वनयः स्युः । एवं यदैकैकभेदः पञ्चाशद्ध्वनिभिः सहानुग्राह्यानुग्राहकतारूपसाङ्कर्येण विमिश्रः स्यात्तदाऽपि पूर्व्वरीत्या पुनश्चन्द्रव्योमर्त्तुपक्षसंख्यका ध्वनयः स्युः । यदा त्वेकव्यञ्जकसंश्रयरूपसाङ्कर्येण विमिश्रः स्यात्तदाऽपि चन्द्रव्योमर्त्तुपक्षसंख्यकाः स्युः । एवमेकैकभेदो यदि पञ्चाशद्ध्वनीनां संसृष्ट्या विमिश्रः स्यात्तदा पुनरपि चन्द्रव्योमर्त्तुपक्षसंख्यकाः ध्वनयः स्युः । एवं क्रमेणैकैकभेदस्यैकपञ्चाशद्भेदैर्व्वारचतुष्टयं पूरणे कृते मिलित्वा वेदखवेददिक्

(२) एकस्मिन्नपि प्रबन्धे एकाधिकध्वनिसमावेशेन स्वस्य स्वेन योजनं नास्त्यसम्भवीति प्रकाशकारादिमतमनुसृत्येयं गणना । दर्पणकारास्तु विभिन्नगणनाप्रणालीमनुसृत्य 'वेदखाब्धिशराः शुद्धैरिषुबाणाब्धिसायकाः' इति मतान्तरं दर्शयन्ति । तत्रेयं युक्तिरत्रोदर्शिता—च गणनापद्धतिः—प्रथमन्तावदेकपञ्चाशद्भेदाः (क ख ग ... ... छ ट थ चा...) 'क' भेदस्य येन केनापि एकपञ्चाशतामेकतमेन ग्रहणयोग्यत्वात्, ततः पञ्चाशत्, 'ख' भेदस्य 'ख' भेदादारभ्य येन केनाप्यन्तराणां पञ्चाशद्भेदानामेकतमेन ग्रहणयोग्यत्वात्, न तु प्राकप्रदर्शितेन 'क' भेदेन ग्रहणे नूतनस्य संसृष्टभेदस्य सम्भवः, तस्य प्रथममेव गृहीतात् 'क-ख' भेदादव्यतिरेकात् (प्रकाशकारानुसारिणां मते ध्वनिभेदगणनायां 'क'-'ख'—समवायिभेदात् 'ख' 'क'—समवायिभेदस्य विभिन्नता, विश्वनाथमते न तथेत्येव गृहीतसंख्याभेदस्य मूलम्) ।

उदाहरणम्—

पद्मिन्यहं कुमुदिनी किल सैव सत्यं
सत्यं भवांश्च मधुसूदन एव सत्यः ।
वामेन तामसुखयन्निह दक्षिणेन
प्रातः प्रबोधयति मामपि लोचनेन ॥ ३८

अत्र 'पद्मिन्या'दिशब्दार्थयोः शब्दार्थशक्त्युद्भवानुध्वनेः सङ्करत्रयम् ।

तथाहि मां प्रति भवतोऽनुरागो महान्, यतो मां दक्षिणेनोदारेण लोचनेन दर्शनेन प्रबोधयति ; तां प्रति तथा नानुरागः, यतो वामेन दर्शनेन तां निग्रसुखयत्—अत्र हेतलङ्कारो व्यङ्ग्यः, यतोऽहं पद्मिनी, सा कुमुदिनी—पद्मिन्यपेक्षया कुमुदिनी निकृष्टेव । किं वाऽहं नाम्नैव पद्मिनी, न तु वस्तुत

ध्वनीनां भेदचतुष्टयानामन्तर्भूता एव, न तु ततः पृथक् पृथक् । अन्यथा पृथग्विवक्षायां 'वसुगुंग्ये कृते' इत्यादि ग्रन्थोक्तसंख्याया असङ्गत्यापत्तिः, यतस्ततोऽप्यनन्तकोटिगुणसंख्याया आधिक्यापत्तिः स्यात् । ननु यत्रावरकाव्ये शुद्ध एक एव ध्वनिस्तत्रापि वाच्यार्थस्य चमत्कारे सत्काव्यस्य मध्यमत्वमुक्तं, एवं सति तत्र तत्र शुद्धैकपञ्चाशद्ध्वनयः कथं गणनायां निविष्टाः स्युरित्यपेक्षायामाह—अशुद्धैकपञ्चाशद्भेदा अपि स्वातन्त्र्येण गणनायां निवेशनीया इत्यभिप्रायेणाह—शुद्धभेदैरिति । इति पूर्वैरिति—पूर्वाचार्यैरपि ताः सर्वा एवोदाहृताः । न तैरेतावत्संख्यकानां ध्वनीनामुदाहरणानि स्वग्रन्थे कथितानि, अतएव बाहुल्यभयादत्रापि नोक्तानीत्यर्थः । भवेदिति—कस्यापि निपुणस्य सामर्थ्यमाया-मवान्तरभेदं प्रकल्प्येतोऽप्यधिकसंख्याया आनयने सामर्थ्यं चेत्तदैतत्संख्यकध्वनिभ्योऽप्यधिका-धिकसंख्यका ध्वनयो भवन्तीति ज्ञेयमिति ।

एकवाचकेति—एकवाङ्मात्रबोधकः शब्दश्लेष इत्यर्थः । यत्र शब्दश्लेषस्तत्रैव वाचका न एकवाचकसंश्लेषः । अत्र तु शब्दश्लेषस्यैकवाचकानन्तरं स्वातन्त्र्यापरत्वेनाभिधेयत्वात् संदृष्टिरिति द्वयोर्भेदो बोध्य इति ।

प्रातःकाले काऽपि खण्डिता नायिका मानभङ्गार्थं विनयनत्यादिकं कुर्वन्तं श्रीकृष्णं प्रत्याह—पद्मिनीति । श्लोकव्याख्यां स्वयमेव करिष्यति । शब्दार्थेति—शब्दशक्त्युद्भवार्थशक्त्युद्भवयोर्ध्वन्योरित्यर्थः ।

अत्र प्रथमतः संशयाख्यतारूपसङ्करमाह—तथाहीति । अत्र 'दक्षिण'शब्दस्यानुकूलार्थकत्वं 'वाम'शब्दस्य निकृष्टार्थकत्वम् । एवं 'लोचन'शब्दस्य दर्शनार्थकत्वमिति श्लिष्टार्थमभिप्रेत्याह—मां प्रतीति । संशय इति—अत्र निश्चयाभावेनायं वा ध्वनिरयं वा ध्वनिरिति संशयस्तत्र संशयाख्यता ज्ञेया । पुनरनेनैव श्लोकेनानुग्राह्यानुग्राहकताख्य-

इति—अन्यथा मय्येव त्वमनुरक्तोऽभविष्यः। सा नाम्नैव कुमुदिनी, न तु वस्तुत इति न सत्यं, अन्यथा तस्यां नानुरक्तोऽभविष्य इति संशयः। अथ पद्मिन्यहं कुमुदिनी सैवेति रूपकालङ्कारेण तद्धेतूपन्यासद्वारा प्रातर्मां प्रबोधयति, निशि तामसुखयदिति हेत्वलङ्कारो व्यङ्ग्यः। भवान् 'मधुसूदन' एवेति, मधुसूदनस्य भ्रमरस्य तवोभयत्र समरागतया न दोषः, किन्तु ममैव दोषः—यतोऽहं पद्मिनी, पद्मिन्याः प्रातरेव भ्रमरेण सह सन्दर्शनमिति 'मधुसूदन'शब्दद्योतितेन वस्तुना पुनरपि रूपकालङ्कारो ध्वनितः—इत्यनयोर्मिथोऽनुग्राह्यानुग्राहकतया सङ्करः (व)। एवं मधुसूदन एव भवान्मतः स्मरसूतः, मद् हर्षयोगे धातुः। तव कुत्रापि नापेक्षेति स्वभावोक्त्यलङ्कारेण तव दक्षिणचक्षुः सूर्यात्मकं, यतस्तेन पद्मिनीं मां प्रबोधयसि, वामन्तु चन्द्रात्मकं, येन कुमुदिनीं तामसुखयः—इत्येकस्मिन्नेव व्यञ्जके 'मधुसूदन'-पदसंश्लेष एकव्यञ्जकानुप्रवेशः।

मद्रमार्थं—मय्येवेति। हेतूपन्यासेति—मम पद्मिनीरूपत्वे प्रातः प्रबोधनमेव हेतुः, तस्याः कुमुदिनीरूपत्वे निशि सुखाश्रयत्वमेव हेतुरिति। एवं 'मधुसूदन'पदस्य भ्रमरार्थकत्वेन भ्रमरस्योभयत्र साम्येन तस्य दोषाभावे पुनस्तस्याः पद्मिनीत्वरूपकालङ्कार एव प्रयोजकः—अत एव ध्वनितयोरनुग्राह्यानुग्राहकतारूपसङ्करोऽपि ज्ञेय इत्यर्थो 'मधुसूदन' शब्दद्योति-तेत्यादि। वस्तुनेति—दोषाभावविशेषेणेत्यर्थः। पुनरप्यनेनैव द्योत्येनैकव्यञ्जकानुप्रवेशसङ्करोऽ-पीत्यभिप्रायेण—एवमिति। मधुसूदनः परमेश्वर एव भवान्—परमेश्वरस्यैव दक्षिणं चक्षुः सूर्यः, वामं चक्षुश्च चन्द्रः, वाम्येयमिति 'मधुसूदन'शब्दश्लेषस्यैकेन व्यञ्जकेनेति भावः। इतीव सिद्धमिति—एतयोः सूर्यचन्द्रसमावेशव्यङ्ग्ययोरेकं 'मधुसूदन'शब्दश्लेष एक एव व्यञ्जक-प्रकारं द्रष्टव्यम्।

यद्यं दक्षिणेन सरलेन दर्शनेन मां प्रबोधयसि, तेन ते मयि रागो नास्ति —वामेन कुटिलेन तामसुखयः, तेन तस्यामेव राग इति वस्तुना मधुसूदनो भ्रमरो ज्ञानशून्यस्त्वमपि मत्त इति स्वभावोक्तिः। तथाविधस्य तव कुतो विवेकः; तेन त्वमविदग्धोऽसीति समावाख्यानाक्षेपयोः (13) संसृष्टिः। एवं पदवाक्ययोर्लिङ्गर्व्यधैर्य्यदैन्यग्लानिनिर्वेदौत्सुक्यादिभावध्वनिभिश्च संसृष्टिः (ग)—उक्तस्त्रिरूपः सङ्करः संसृष्टिश्च।

यथा वा—

> उच्छूनस्तनितस्य सर्वसुहृदः कृष्णाम्बुदस्योदयो
> जाताः शीकरवाहिनः सुमनसां वीथी विकाशं गता।
> स्निग्धा भूर्गत एव सद्धुरभरः श्यामायमाना दिशः
> स्फीतं गोकुलसुन्मदाय सरितः शीला गिरिद्रोणयः ॥ ३८ ॥

पुनरप्यनेनैव श्लोकेन संसृष्टेरुदाहरणमाह—यथेति। अत्र कश्चे 'दक्षिण'शब्दः सरलार्थकः, 'लोचन'शब्दो दर्शनार्थको ज्ञेयः। सरलेनेत्यं नायिकाया अवलोकनमौदासीन्यव्यञ्जकं, कुटिलेनेत्यावलोकनन्तु प्रेमव्यञ्जकमिति रसशास्त्रप्रसिद्धिः। तत्र 'मधुसूदन'शब्द ईश्वस्य प्रथमतो ज्ञानशून्ये भ्रमरे शक्तिः। पुनर्व्यङ्ग्यस्याविवेकावैदग्ध्यादिरूपार्थस्य व्यञ्जना। अतएवैकव्यञ्जकसंश्लेषाङ्गेदो ज्ञेयः। तत्र 'मधुसूदन'पदस्यैकस्य केवलव्यङ्ग्यार्थमात्र एकैव व्यञ्जनेति। उक्त इति—एकस्मिन्नेव श्लोके त्रिरूपः सङ्कर उक्तः, संसृष्टिश्चोक्तेत्यर्थः।

संसृष्टेरुदाहरणान्तरमाह—यथा वेति। काचित् सखी गोवर्द्धनस्य निकटवर्त्तिनि नगरे स्थितां स्वयूथेश्वरीं गुरुजनसमीपस्थां दृष्ट्वा गोवर्द्धनकन्दरासङ्केतस्थं श्रीकृष्णं प्रापयितुं व्याजेन देशात्गोवर्द्धनोपर्य्युदितं मेघं लक्षीकृत्य वदति—उच्छूनेति। हे सखि!

(घ) 'पश्चिम्यह'मित्यादिश्लोके ध्वनिसंसृष्टिः। तत्र संलक्ष्यक्रमव्यङ्ग्यस्यालङ्कारयुगलस्य स्वभावोक्त्याक्षेपाभिधस्य संसृष्टिः, तथाऽसंलक्ष्यक्रमव्यङ्ग्यस्य भावध्वनिकदम्बकस्यापि संसृष्टिः। 'पश्चिम्यह'मिति स्वकीयोत्कर्षख्यापनेन गर्व्वः, तस्यामेव तव राग इत्यवगाहन्त्यपि नायिकाऽहं त्वां प्रति सानुरागेति धैर्य्यं, ज्ञानशून्यस्त्वं, तथाऽपि त्वयि मे प्रेमेति ग्लानिः, धिङ् मां येवंविधासत्प्रकारिणि विश्वसिति, यद्वा धिङ् मां त्वत्प्रीतिमलभमानां वराकीमिति निर्वेदः, नायकस्य ज्ञानशून्यताऽविस्कारैर्बोधप्रसङ्गेन भावशुद्धापरपर्य्यायावहित्थादयो बहवो भावाः श्लोकादेशतो निपुणैरन्वेष्याः। एषां भावध्वनीनां शान्त्युदयसन्धिशबलतादिविविधभेदेन विवेचनमुत्तरत्र 'रस' किरणे, यतो नात्र मत्वे तत्प्रपञ्चः।

(13) 'समावाख्यानाक्षेपयोः' इति (क) (ख) (ग) पुस्तकेषु पाठ उपलभ्यते।

अथ शब्दशक्त्युद्भवार्थशक्त्युद्भवध्वन्योः संसृष्ट्या ध्वनिसंसृष्टिः, तथाऽलङ्काराणां वस्तूनाञ्च संसृष्टिः ।

तथाहि गुरुसमीपस्थितां गोवर्द्धननिकटनगरनागरीं प्रति गिरिकन्दर-सङ्केतस्थं श्रीकृष्णं विज्ञापयितुं व्याजेन दैवोपनतं मेघोदयं लक्ष्यीकृत्य काचित् सखी वदति । वाच्यार्थः स्फुट एव । अत्रोद्दीपनविभावः स्फुटो भवंस्तुल्य-योगिताऽलङ्कारं व्यनक्ति । कृष्णश्च सङ्केतस्थोऽम्बुदोदयश्चाभूदिति यौगपद्य-प्रतिपत्त्या तुल्ययोगिता, कर्म्मधारयोपलक्षणतृतीयातत्पुरुषमात्रयोः संसृष्टिः । कृष्णाम्बुदयोः साधर्म्म्यादुपमालङ्कारो व्यङ्ग्यः । 'उच्चूनस्तनितस्ये'ति उच्चून-गर्ज्जितत्वेनाम्बुदस्य वर्षुकत्वं, तेन च शीघ्रमभिसरेति वस्तु व्यङ्ग्यम्—हे 'उच्चूनस्तनि ! तस्ये'ति सभङ्गश्लेषेण संबोध्यमानजनस्य प्रौढ़त्वं, तेन स्तन-भाराक्रान्ततया गमनमान्थर्य्यं, तेन न च वातः परं विलम्बनीयमिति ध्वनि-प्रतिध्वन्यनुध्वननं, 'तस्ये'ति सर्व्वनाम्नो महिम्ना कृष्णस्य परमदुर्लभता, तथा च बहुवल्लभत्वम् । 'सर्व्वसुखद' इति हेतोर्हेत्वलङ्कारो व्यङ्ग्यः (म), तस्माद्वातः परं विलम्बः कार्य्य इति वस्तु । 'वाताः शीकरवाहिन' इति स्वभावाख्याने,

सर्व्वेषां व्रजविलासिनां सुखदः कृष्णवर्णस्य मेघस्य गोवर्द्धनोपर्य्युदयो जातः । कथम्भूतस्य !—उच्चूनं घोरं स्तनितं गर्ज्जितं यस्य । एवं सर्व्वेषां सुखदाः पवना अपि शीकराञ्जलकणान् वोढ़ु शीलं येषान्तथाभूताः सन्तश्चलन्तीति शेषः । एवं सुमनसां मालतीनां वीथी विकाशं वर्षासमयं प्राप्य प्रफुल्लताङ्गता । तथा व्रजवासिनां निदाघजन्यघर्म्मभयोऽपि गतः । मेघैरेव दिशः श्यामायमाना बभूवुः—अतएव समस्तं गोकुलमपि स्फीतमानन्देन प्रफुल्लम् । एवं सरितो नद्योऽपि वर्षाकालीनजलानां सम्भेदेनानन्दवशादुन्मत्ता बभूवुः । गोवर्द्धनद्रोण्यो ऽपि शीतला जाताः । तस्मात् सर्व्वप्रकारेणास्माकं व्रजवासिनां सुखसमयो जातः । वाच्यार्थः स्पष्टः, श्लिष्टार्थस्तु—हे उच्चूनस्तनि ! गोवर्द्धने कृष्णेन सह देवस्योदयो जातः । मेघादीनामुदयकथनेनोद्दीपनविभावज्ञापनद्वाराऽभिसार उत्कण्ठां वर्द्धयति । स्निग्धेति—भागाद्यभावेन त्वमपि स्निग्धाऽभूरित्यर्थः । अत्रोद्दीपनेति—'कृष्णाम्बुद'पदस्य कर्म्मधारय समासेन मेघस्योद्दीपनविभावत्वं स्फुटं यद्भूतं भवत् श्रीकृष्णेन सह मेघस्योदय इति तृतीया-तत्पुरुषेण तुल्ययोगिताऽलङ्कारं व्यनक्ति । तुल्ययोगितामेवाह—कृष्णश्चेति । कर्म्मधारयेति

(म) 'अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह'त्यपरैर्व्विश्वनाथादिभिरभिहितो हेत्वलङ्कारो मार्य, परं निष्पादकहेतुगर्भकाव्यलिङ्गाख्यप्रसिद्धालङ्कारस्यैवात्र 'हेतु'पदेन परिग्रह इति

तेन सुरतश्रमजलकणापहारिण्यैते भविष्यतीति वस्तु । सुमनसां मालतीनामिति पूर्ववत् स्वभावाख्यानं, तेन सुमनसां मानरहितानामन्यासामङ्गनानाञ्च वीथी कृष्णोऽभिसर्त्तव्य इति यो विकाशः प्रसादस्तं गतेति वस्तु, तेन च यावत् काऽपि तं नाभिसरति तावत्त्वमभिसरेति वस्तु । 'स्निग्धा भू'रिति चरणसञ्चरणसुखदत्वं, परञ्च स्निग्धाऽभूस्त्वञ्च मनसि वाम्यञ्च नास्ति, तत् कथमपरं विलम्बस इति वस्तु । स्निग्धत्वे हेतुः 'गत एव सञ्चरभर' इति हेत्वलङ्कारः, तेन च त्वदाकारेणेव मया त्वदन्तःकरणं ज्ञातमिति स्वचातुर्य्यप्रकटनम् । 'श्यामायमाना दिश' इत्यलक्ष्या भूत्वा गमिष्यसि, तेन न काऽपि शङ्केति वस्तु । व्यङ्ग्यपक्षे—गोकुलं व्रजस्थलो स्फीतं जनाकीर्णं, तेनात्र तमानेतुं न शक्नोमि । सरितो यमुनाया उत्पूराः, तेन तत्तटादौ च न सङ्केतयोग्यता, तर्हि पारिशेष्यात् 'शोता गिरिद्रोणय' इति भङ्ग्या तत्रैवाभिसारः क्रियतां, तत्रैवागतोऽस्ति कृष्ण इति व्यञ्जकानां संहृष्टिरेव ।

एवंविधा एव ध्वनय उत्तमोत्तमकाव्यलक्षणबीजम् । ध्वनेश्चापरयुगलं ध्वननमनुध्वननञ्च । यत्र केवलं ध्वननं तदुत्तमं काव्यं, यत्र तु ध्वननानुध्वनने

—श्यामश्यामावस्त्वन्धेति कर्म्मधारयपक्षं, एवं कृष्णेन सहाम्बुदोदय इत्युपलक्षणतृतीयातत्पुरुषपक्षञ्च, मामा कारयं ययोः, इत्थम्भूतयोरङ्गयोपगर्विभावत्वतुल्ययोर्मिथस्तस्य श्यम्योः संदृष्टिः । कर्म्मधारयपक्षे 'कृष्णे'ति विशेषणेन मेघस्यपोद्दीपनस्य वैशद्यं बोधयति । कृष्णस्योच्चूनताकथनेन संबोध्यमानस्य स्वयूथेश्वरीजनस्य प्रौढ़यौवनत्वमानीतम् । यमुनाया इति—उद्गताः पूराः प्रवाहा यत्र तथाभूताः । तेनेति—प्रवाहाधिक्येन तासां नदीनामादौ मारे सङ्केतयोग्यता न सम्भवतीत्यर्थः ।

ध्वनेरिति—उत्तमध्वनेरुत्तमोत्तमध्वनेश्चेत्यर्थः । 'त्वामस्मि वच्मी'त्यादौ वर्त्तमानोऽहन्त्वो वच्मीत्यर्थः । अत्र 'स्मि'पदेनाहमत्युक्तत्ववक्तृत्वार्थान्तरसंक्रमितवाच्यध्वनिः । एवं 'स्निग्धश्यामले'ति पद्ये 'लिप्त'पदेनातिशयमेघागमनरूपार्थान्तरसंक्रमितवाच्यार्थध्वनिः, तेन चास्मिन् घनागमे सीता कथं जीविष्यतीत्यनुध्वनिः । रामोऽहमिति—रमते रमयतीति वा व्युत्पत्तिसिद्धरामो न भवामि, किन्तु नाम्नैव रामः इत्योऽत्यन्ततिरस्कृतवाच्यार्थो

---

प्रतिभाति । उद्भटादयः प्राचश्चमेव 'हेतु'पदेनोल्लिखन्ति । एवमपि प्राचुरत्र चालङ्कारोद्देशे 'हेतुरिदप्रयोगोऽत्र ग्रन्थ एतत्प्रसङ्गे समर्थनीयः ।

Quoted in Kavyaprakasa under Ullasa IV.

तदुक्तमोत्तमम्। प्राचीनैस्तु सर्व्वेषामुत्तमत्वं निरुक्तं, तत्तु नास्माकमभीष्टम् (ध) यतः 'त्वामस्मि वच्मीत्या'दौ वचेरर्थान्तरसंक्रमितवाच्यध्वनेः, 'स्निग्धश्यामलकान्तिलिप्त-वियत्' इत्यादौ चानुध्वननरूपार्थान्तरसंक्रमितात्यन्ततिरस्कृतसंसृष्टस्य च,सरा ध्वनेरेक एवास्वादयोऽनुभूयते, तैर्लभ्यतां नाम न त्वस्माभिः।

* इत्यलङ्कारकौस्तुभे ध्वनिनिर्णयो नाम तृतीयः किरणः ॥ *

ध्वनिः। एवं विप्रलम्भरसादिरूपा बहवो ध्वन्यनुध्वनयो वर्त्तन्ते। अत एवाभक्तौति काव्यमेकस्यास्य काव्यस्योत्तमत्वमिति विवेचनीयम्। पद्यद्वयं 'काव्यप्रकाश'स्था समन्वितम्। इति—

---

(ध) 'ध्वनेर्ध्वन्यन्तरोद्गारे तदेव ह्युत्तमोत्तममि'ति प्रागेव प्रदर्शितं वैलक्षण्यमौचित्यञ्च। ध्वनिकारमम्मटादिभिरापाततः ध्वन्युत्थापितानुध्वननादिसम्भावनामनवधारितत्वाच्च सर्व्वेषामेव ध्वनीनामुत्तमकाव्यत्वं स्वीकृतम्। न तद्रुचिरमिति कर्णपूरगोस्वामिनामाशयः। चमत्कृतेरास्वादस्य तारतम्यं स्फुटमेव, ततोऽत्र विभिन्ना भागकल्पना। रसगङ्गाधरकारेणाप्युत्तमोत्तमाद्युत्तमभेदस्य काव्यस्योत्तमाद्यपरार्द्धवर्त्तित्वस्य यथा स्वीकृता—तथातथ प्रागेवास्माभिरितरत्र दर्शितम्। 'तैर्लभ्यतां नाम, न त्वस्माभि'रिति मौलग्रामणिर्ग्रन्थोऽविद्यदौचित्तः—स तु मान्यानामपि-प्राचां मतमवमाननादरणीयमिति स्वमताविष्कारार्थैवेहित इति।

# अथ चतुर्थकिरणः ।

अथ गुणीभूतव्यङ्ग्यानि कियन्ति भवन्तीत्याकाङ्क्षायां तेषां भेदानाह—

यद्यपि 'मध्यमे तत्र मध्यम'मिति ( १ किरणे ६ कारिकायाम् ) पूर्वोक्तस्य मध्यमकाव्यस्यैव गुणीभूतव्यङ्ग्यत्वं, तथापि ध्वनेरवैशिष्ट्ये वैशिष्ट्ये च द्वैलक्षण्यो-पाधितो गुणभावाद्गुणीभूतत्वमिति 'च्वि'र्थ एव द्वैविध्यं बोधयति (क)।

ननु काव्यप्रकाशप्रस्तोत्तमव्यङ्ग्येभ्यः सकाशाद्भिन्नान्येव गुणीभूतव्यङ्ग्यान्युक्तानि, त्वमते तु मध्यमकाव्यस्यैव गुणीभूतत्वं, तथात्वे मध्यमकाव्यस्य पूर्वोक्तयुक्त्या शब्दार्थयोर्वैचित्र्ये सत्युत्तमताकथनानुपपत्तिरित्याह—यद्यपीति। तथापीति—ध्वनेरवैशिष्ट्येऽवरत्वे सति वैशिष्ट्ये च ध्वनेर्मध्यमत्वादौ च सति तथाऽपराङ्गत्ववाच्यपोषकत्वादिगुणयोगादुत्तमध्वने-रपि (१) गुणीभूतत्वमिति, तथा तत्रैकस्यैव मध्यमकाव्यस्य शब्दार्थयोर्वैचित्र्ये सत्युत्तमत्वं, उत्कृष्टोत्तमकाव्यस्यापराङ्गत्ववाच्यपोषकतादिगुणसत्त्वकपदान्तरसमभिव्याहारे सति गुणी-भूतत्वं, अतो न विरोधः। एतदर्थमेव 'गुणीभूत'पदस्यान्तर्भूतेन 'च्वि' प्रत्ययेन बोधयति—'च्वि'र्थ एवेति। न गुणो गुणो भवतीति व्युत्पत्त्या पूर्वमगुणत्वं (२), पश्चाद्गुणयोगाद्गुणी

---

(क) इह सर्वालङ्कारशास्त्रे 'गुणीभूतव्यङ्ग्य'पदेन विशिष्टलक्षणलक्षितः काव्यभेद एव गृह्यते—पदञ्च तदतो योगरूढमित्यालङ्कारिकाणां स्वरसः। तत्रभवता कर्णपूरगोस्वामिना पदस्य यौगिकार्थमपहाय—अगुणः गुणः, गुणोऽगुणो भवतीत्यनेति व्युत्पत्त्या—तत्कस्य व्यङ्ग्यस्य ध्वन्यपराभिधेयस्योपाधिभूतयोर्वैशिष्ट्यावैशिष्ट्ययोर्भेदसत्त्वमङ्गीकृत्य द्वैविध्य-मस्य काव्यविशेषस्याङ्गीक्रियते। अवैशिष्ट्यपक्षे तु 'शब्दार्थवैशिष्ट्ये द्वे यावः पूर्वपूर्वताम्' (१म किरणे ■ कारिकायाम्) इति कारिकालक्षणस्याविषयेऽवरत्वमायाति—न तत्र भेदकल्पना। शब्दार्थवैशिष्ट्ययोरेकतरस्य द्वयोर्वा वर्त्तमानत्वे व्यङ्ग्यस्य ध्वनेर्वाच्यानुगततया साम्येन वाऽनुत्तमत्वे 'स्फुटमपराङ्ग'मित्यादिनाऽष्टधा भेदकल्पनेति तत्रैव तत्प्रपञ्च इत्याशयेन मूलस्याशीतकावतारणा। इत्थं विशिष्टस्य गुणीभूतव्यङ्ग्यस्य 'ध्वनि'पदेन परामर्श आपातविसदृशोऽपि नानुचितो यथा 'कार्टिन्यं गुण एवे'त्यादौ ( ४र्थ किरणे ६४ श्लोके ) लक्ष्ये। अत्र खलु कौस्तुभकृल्लक्षित उत्तमः काव्यभेद इति तत्रैव मूले दर्शितम्। वस्तुतस्तु 'गुणीभूतव्यङ्ग्य'पदस्यावान्तरोद्दिष्टकाव्यभेदार्थकल्पनागौरवादरं तस्यापेक्षिकत्वपक्षस्वीकारः—यत्रोत्तमोत्तमत्वं तत्र स्फुटत्वादीष्टलक्षितात् कारणात् गुणीभूतव्यङ्ग्यत्व उत्तमत्वं, 'यत्र

---

(१) 'अवरत्वे सति तथा चावरध्वनिस्थलेऽप्यपराङ्गत्ववाच्यपोषकत्वादिगुणयोगा'दिति (क) पुस्तके, 'अवरत्वे सति वैशिष्ट्ये च ध्वनेर्मध्यमत्वादौ च सति मध्यमकाव्यस्यापराङ्गत्वे'त्यादि मुद्रितपुस्तकेऽनवधान-विजृम्भितः पाठः।

(२) 'अगुणत्वकर्मीत्तमत्व मिति (क) पुस्तके पाठ उपलभ्यते।

तत्राविशिष्टे भेदो नास्त्येकरूपत्वात्, द्वितीये तु भेदोऽष्टधेति सूचयति—

स्फुटमपराङ्गं वाच्यप्रपोषकं कष्टगम्यञ्च।
सन्दिग्धप्राधान्यन्तुल्यप्राधान्यकाकुगम्ये च।
असमनोज्ञञ्चेति गुणीभूतव्यङ्ग्यस्य भेदाः स्युः॥ ५८ का

क्रमेणोदाहरणानि—

दृष्टा भागवताः, कृपाप्युपगता तेषां, स्थितन्तैः समं,
ज्ञातं वस्तु विनिश्चितञ्च, कियता ऽत्रापि तत्राश्रितम्।
जीवद्भिश्च मृतं, मृतैर्यदि पुनर्मार्गं व्यमस्याहृये-
तत्पदव्येव न किं कृतं, बत विधे! वामाय तुभ्यं नमः (ख) ॥ १

भूतत्वमिति द्वैविध्यं बोधयतीत्यर्थः। वक्ष्येति—अवैशिष्ट्यादवरत्वे सत्यगुणप्राधान्यमपि निकृष्टत्वेन गुणप्राधान्यं सुतरामतिप्रयत्नकष्टत्वात्, व्यक्तत्वेनैकरूपत्वाद्भेदो नास्तीत्यर्थः।

सन्दिग्धेति—वाच्यार्थापेक्षया सन्दिग्धं प्राधान्यं यत्रेत्यर्थः। तथा च वाच्यार्थापेक्षया ध्वनेः प्राधान्यनिश्चय एवोत्तमतायाः प्रयोजकः, न तु सन्देह इति भावः। तुल्येति—वाच्यार्थध्वन्योस्तुल्यप्राधान्यमित्यर्थः।

अत्र ग्रन्थकार एव महाप्रभोः पार्षदानां मध्ये कस्यचित् कस्यचित् प्राकट्यं दृष्ट्वा विरहव्याकुलः सन्नात्मानं निन्दमाह—दृष्टा इति। तेषां कृपाऽप्युपगता प्राप्ता। तैः सहवासत्वेन निश्चितं यद्वस्तु तदपि ज्ञातम्। तत्र तेषां निकटे आश्रितं वासः कृत इत्यर्थः।

---

स्त एवोत्तमत्वं, तत्र तस्मादेव कारणात्तन्नामनायां काव्यस्य मध्यमत्वं, यत्र ध्वनेर्मध्यमत्वं तत्रैतस्मादेव कारणात् गुणीभूतव्यङ्ग्यत्वे काव्यस्यावरत्वमिति तु न दिक्तं वचः। पीयोक्त स्थलद्वये तथा 'प्रागुक्तध्वनिसंख्या.' (६० कारिकायाम्) इत्यादौ तत्र टीकायाञ्च साधारण्येन सर्व्वत्रैव 'ध्वनि'पदप्रयोगस्तु भाक्त एव। गुणीभूतव्यङ्ग्यस्यापि ध्वनिकार्यं कल्पनापक्षः स्वयं ध्वनिकृतैवानुमोदितः—'प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्। धत्ते रसादितात्पर्यपर्यालोचनया पुनः'—इत्यादि। तदर्व्वाचीना आलङ्कारिकाः प्रकाशकाराद्या यद्यप्येव 'गुणीभूतव्यङ्ग्य'पदस्य काव्यभेदलक्ष्ये रूढिप्रयोगमुपपादयन्तोऽपि सबहुमानं ध्वनिकृतानुपरिदर्शितं मतमनुसरन्तोऽप्यास्तां तावत् पारिभाषिकपदप्रयोगसाधुत्वचिन्ता।

(ख) स्फुटमिति—काव्यप्रकाशादिनिबन्धेष्वेतदेव 'अगूढ'मिति भण्यते। एवं यदत्र 'कष्टगम्य'पदेनाभिहितं तस्य तत्र 'अस्फुट'मिति संज्ञा। स्फुटं सर्व्वजनसंवेद्यमतितरां प्रकाशम्। 'तादृशं वाच्यायमानमथा न तथा चमत्करोति यथा कामिनीकुचकलशवद्गूढम्' - तदुक्तम्

अत्र 'जीवद्भि'रिति स्निग्धावस्थैः, 'मृतै'रिति तद्विपरीतावस्थैः—इत्यर्थान्तरसंक्रमितवाच्यं, तत्तु स्फुटमिति गुणीभूतम्।

यथा वा—

अयनसहचरीणां लोचनैरर्च्यमाना-
न्यतिरतिजयलक्ष्मीलक्ष्मभिः पक्ष्मलानि।

तेषां दर्शनतत्पासहवासादिभिरेव जीवनं, तादृशजीवनवद्भिरस्माभिर्न मृतम्। अधुना तेषां विरहे वयं मृता एव। मृतैर्यदि पुनर्मरणं तदीतृपदैव किं न मृतम्। तथा च जीवद्दशायां मरणं न जातं, अधुना मृतानामस्माकं पुनर्मरणं भविष्यत्येतदपेक्षयोत्पत्तिकाल एवास्माकं विधाता मरणं कथं न कृतं, तस्मात् प्रतिकूलाय विधात्रे नम इत्यर्थः। स्निग्धेति—सुखमयावस्थैरित्यर्थः। तद्विपरीतेति—दुःखमयावस्थैरित्यर्थः। तत्त्विति—स्निग्धावस्थत्वे मृतैरपि न दुःखद इति व्यङ्ग्यमित्यर्थः।

यथा वेति—कमलाक्षी स्वाङ्गैः करणैः स्वाङ्गानि स्वजत इव। एवमतिशयरतिजये या लक्ष्मीः शोभा तस्याः सूचकैर्लक्ष्मभिश्चिह्नैः करणैः पक्ष्मलानि पुष्टानीव। पुनः कथम्भूतानि—अयनसमये परिचरणपराभिर्दिङ्गरीणां लोचनैरर्च्यमानानि। 'अर्च्यमानानी'ति पदेन समाप्यमानत्वेन (3) आदरं इत्यनेनार्थान्तरसंक्रमितं वाच्यं स्फुटम्। 'पक्ष्मलानी'ति पदेन

---

गाम्भीर्यधोधर इवातिगरो प्रकाशो नो गुप्तरोत्तम इवातितरां निगूढः। अर्थो गिरामपिहितः पिहितश्च कश्चित् सौभाग्यमेति मरहट्टवधूकुचाभः' इति। न चैतेषां गुणीभूतव्यङ्ग्यभेदानां कथमपि 'ध्वनि'भेदानां लक्षणाभिधोत्थापितानां मध्ये अन्तर्भावः प्राप्यः—यदाहुश्चक्रवर्तिपादाः—'लक्षणामूलेत्यनेन लक्षणामयपरिकल्पनाशुक्तियोगार्थकेन निरूढलक्षणावत्पदघटितकाव्योत्थव्यङ्ग्यस्फुटवस्तुप्राधान्यतुल्यप्राधान्यासुन्दराणां व्युदासः, तेषु चक्रोक्तेर्येन अवश्याया अप्रवृत्तेः। काकाक्षिमेऽपि न लक्षणाऽनुपपत्त्यभावात्, गूढत्वेनागूढव्युदासः, 'प्राधान्य' इत्यनेनापराङ्गवाच्यसिद्ध्यङ्गयोर्व्युदासः' इति।—स्फुटस्योदाहरणमुपदिश्य [illegible] मध्यस्तुतत्वे तन्त्रचन्द्रोदयनाटके प्रथमाङ्के सन्निवेशितम्। वैष्णवसाहित्यपाथोनिधौ क्वचिद्भक्तानां भगवत्सदाराधकरूपाणां महाप्रभुश्रीकृष्णचैतन्यपादानां प्राकट्यमुद्दिश्य व्याकुलता, क्वचिद्वा तेषां प्राकट्यदर्शनाभावेन भावविधुरता वरीवर्त्त्येतत् समस्तकाव्यसुधारसोर्मिसुखस्नानमज्जनं सज्जना एव बुध्यन्ते। गोविन्दसरस्वतीशिवानन्दानन्दोक्तयः प्रथमोक्ते प्रमाणं, द्वितीयोद्दिष्टे गोविन्ददासकविकृष्णदासकविराजादीनामार्त्तयः स्वकीयरचनामण्डलमण्डनायिताः प्रमाणम्।

---

(3) 'समाप्यमानेने'ति (क) पुस्तके 'समाप्यमानेने'ति, (ख) (ग) पुस्तकयोः, 'समाकल्प्यमानेने'ति (घ) पुस्तके, 'समाकल्प्यमानेने'ति (च) पुस्तके, 'समाप्यमानसंभेदे'ति (छ) पुस्तके पाठः।

रहसि सबहुमानचुम्ब्यमानानि दृग्भ्यां
स्रजत इव मृगाक्षी स्वाङ्कैः स्वाङ्कानि ॥ २

अत्र 'चर्व्यमाणानि' 'पक्ष्मलानि' 'चुम्ब्यमानानि' 'स्रजति' इत्यर्थान्तर-संक्रमितवाच्यानि, तानि तु स्फुटान्येव ।

अपराङ्गं यथा—

कोपे यथातिललितं न तथा प्रसादे
वक्त्रं, विधिस्त्वव तमीसु सदैव कोपम् ।
इत्याकलय्य दयितस्य वचोविभङ्गीं
राधा जहास विहसत्सु सखीजनेषु (ग) ॥ ३

अत्र विप्रलम्भशृङ्गारो हास्यस्याङ्गम् । 'राधा विवर्तितविनम्रमुखी बभूवे'ति चेत्, तदा कोपप्रशमो व्रीडोदयश्चेति ध्वनिरेव स्यात् ।

चिविलसत्, चङ्क्रमः, सत् स्फुटं, तेन च मन्मद्दांतियोस्यतगुरुव्यानिर्व्यस्तु व्यङ्ग्यम् । 'स्वदग्भ्यां चुम्ब्यमानानी'त्यादिकत्तिपूर्व्वकं हस्तानि, तेनाहमत्र कृतार्थास्मीति स्वमावपत्यं वस्तु व्यङ्ग्यम् । 'स्रजत' इति पदेन पुनः पुनः स्पृशतीत्यर्थान्तरसंक्रमितं वाच्यं, इति मन्त्रेव स्फुटमेव ।

अपराङ्गमिति—अपरस्य गौणस्याङ्गमित्यर्थः । वचसो विभङ्गीं श्रुत्वा । राधा विवर्तितेति—अस्य पद्यस्य (१) गुणीभूतत्वमुपपन्नं 'राधा जहास विहसत्सु सखीजनेष्वि'ति चरणं विहाय 'राधा विवर्तित'त्यादि चरणस्य प्रक्षेपे सति अस्यैव काव्यस्योत्तमता भवेदित्यर्थः । न च पूर्व्वोक्तपद्यद्वयस्य गुणीभूतत्वमूचकवाच्यम्यत उत्तमतावोधकवाक्य प्रयोगः कथं न कृत इति वाच्यं, तत्पद्ययोर्गुणीभूतत्वेऽपि वाच्यार्थस्यानिचमत्कारित्वेन प्रपञ्चस्यानौचित्यात् (ग) ।

यथा वा—

मुग्धे ! परिहर मानं मानय वचनं प्रियालिवृन्दस्य ।
यौवनमिदमम्भोरुहदलजलबिन्दूपमं विद्धि ॥ ४

अत्रापि विप्रलम्भशृङ्गारध्वनिः शान्तरसस्याङ्गम् । 'अर्पय यौवनकुसुमैर्देवं कुञ्जेश्वरं क्रमश' इत्युक्ते ध्वनिरेव स्यात् ।

वाच्यपोषकं यथा—

क्वाहं गोपवधूः, स्मरायुतजयी गोपेन्द्रसूनुः क्व वा
सार्द्धं तेन रतिर्ममाभवदिति भ्रान्तेः परं भण्यते ।
इत्येवं गुरुकर्णगोचरतया सख्या समं निर्मिता
वाणीमन्यथयाञ्चकार पुलकी गण्डः कुरङ्गीदृशः (घ) ॥ ५

अत्रा'न्यथयाञ्चकारे'त्यस्य वाच्यस्य गण्डस्य पुलकितत्वं प्रपोषकम् ।

'इत्येवं गुरुकर्णगोचरतया सख्या समं जल्पने
रोमाञ्चोत्करमञ्चलेन सुमुखी गण्डस्थलीमावृणोत् ॥'

इत्युक्ते ध्वनिरेव स्यात् ।

यथा वा—

काठिन्यं गुण एव येन भवती कान्तस्य वैशयहं
स्नेहो दूषणमेव येन लभते दीपी दशा दग्धताम् ।

मुग्ध इति—यौवनमिदं कमलदलस्थजलबिन्दुवन्नश्वरं विद्धीत्यनेन शान्तरसो व्यङ्ग्यः, तस्याङ्गं शृङ्गाररसः, तेनायं ध्वनिर्गुणीभूतो ज्ञेयः ।

क्वाहमिति—गोपानामिन्द्रस्य राज्ञः पुत्रस्तत्रापि स्मरायुतजयी कोटिकन्दर्पतोऽपि सुन्दरः स श्रीकृष्णो वा क्व । एवं तस्य प्रजा कश्चिन्निकृष्टो गोपस्तस्य वधूः तत्रापि तस्याग्रे कृष्णपार्श्वं वा क्व इति वाक्प्रयोगकाले 'कृष्ण'शब्दोच्चारणाज्जातो यो गण्डदेशे पुलकः स एव सख्या समं निर्मितां वाणीमन्यथयाञ्चकार मिथ्याभूताञ्चकार । गण्डस्पर्शीकपम्भूता—रोमाञ्चोत्करं रोमाञ्चव्याप्तामिति यावत् ।

(घ) स्मरायुतजयीति—श्रीकृष्णः श्रीमद्भागवतादौ 'कोटिकन्दर्पदर्पहेत्या'दिना, राधाध्यायां वर्णितः । तत्र टीकाकृतां वैष्णवगोस्वामिचरणानां विश्वनाथचक्रवर्त्तिप्रभृतीनां वाक्यैव 'सार्द्धं तेन रतिर्ममाभवदिति भ्रान्ते'रित्यादांशस्य सुन्दरी प्रकाशिका । अत्र वाच्यस्य सिद्धिरेव चाङ्गाधीनेति वाच्यप्रपोषकत्वम् । 'गुरुकर्णगोचरतये'ति स्वचनस्य

तुभ्यं कङ्कतिके। नमोऽस्तु, धिगतिस्नेहामिति व्याजवा-
ग्विन्यासा चिकुरप्रसाधनविधौ कृष्णेन सा सस्वजे ॥ ६

अत्र विपक्षरमणीं प्रति काठिन्यादिदोषप्रसञ्जनेन प्रागल्भ्यातिशयप्रकटनेन वाऽसूया। आत्मानं प्रति स्नेहमयत्वगुणारोपेण स्वाधिकसन्तापप्रकटनेन दैन्यम्। काठिन्यस्नेहयोर्गुणदोषत्वारोपेणात्यन्ततिरस्कृतवाच्यध्वनित्वम्। कङ्कतिकां प्रति विपक्षरमणीत्वारोपेण समासोक्तिः। ‘तुभ्यं नमोऽतिस्निग्धां धिगि’ति हासनिर्वेदयोः शाबल्यं—इत्येवं भूयसाऽपि लक्षणेनोत्तमोत्तममपि काव्यं ‘व्याजवाग्विन्यासे’त्येकस्यैव पदस्य वाच्यस्य पोषकत्वादुत्तमोत्तमत्वं विहाय केवलगुणीभूतव्यङ्ग्यत्वेनोत्तमं स्यात्, किन्तु ‘धिगतिस्नेहामितीषत्स्मितं जल्पन्ती चिकुरप्रसाधनविधा’वित्यादि चेत्तदाऽस्योत्तमोत्तमत्वमेव (छ)।

मानानन्तरं सङ्केतेसम्भुक्ता पश्चात् स्वाधीनभर्तृका काचिन्नायिका श्रीकृष्णस्य केशप्रसाधनकुर्वती कङ्कतिकां लक्षीकृत्य व्याजेन सामाह—काठिन्यमिति। हे कङ्कतिके! तव काठिन्यं गुण एव। येन काठिन्येन हेतुना भवती श्रीकृष्णकेशग्रहणं लभते। स्नेहस्तु दूषणमेव येन स्नेहरूपेण दैपी दीपसम्बन्धिनी दशा वर्त्तिका दग्धतां लभते। इति व्याजेन कङ्कतिकामिषेण विपक्षरमण्या दोषप्रकाशकस्य वचसो विन्यासो यस्याः सा। वाग्विन्यासं श्रुत्वा प्रसन्नेन श्रीकृष्णेन सस्वजे तया सह आलिङ्गनञ्चक्र इत्यर्थः। प्रागल्भ्येति—केशाकर्षणरूपप्रागल्भ्यातिशयप्रकटनेनेत्यर्थः। गुणदोषत्वेति—काठिन्यं गुण इत्यत्र गुणशब्दस्य दोषे लक्षणा, काठिन्यस्य निन्द्यत्वं ध्वनिः—एवं स्नेहोत्तर‘दोष’ (‘दूषण’)-शब्दस्यापि गुणे लक्षणा, स्नेहस्य सर्वोत्कर्षो ध्वनिः। ध्वनेरत्यन्ततिरस्कृतवाच्यत्वं ज्ञेयम्। नायिकात्वारोप एव समासोक्त्यलङ्कारः।

---

गुरुकर्षणोपरम्यमेव नायिकाया अभिमतं, तथा स्वदोषक्षालनार्थं प्रयासः पुनः अपराधलवोऽपि तस्या कथङ्कारं भवतीति कङ्कतिकाव्याजेनाभिधानम्।

(छ) ‘व्याजवाग्विन्यासे’त्येकस्यैव पदस्येति—‘स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगं’ इति रीत्या ध्वनिकाव्यबाधकत्वमस्यात्र पठितः। एवं ‘जनस्थाने भ्रान्तं कनकमृगतृष्णान्धित-धिये’त्यादि भट्टवाचस्पतिमिश्रकृतपद्ये ‘भवाम’ रामत्व’मित्येकस्मादेव वाच्यप्रयोगाद्ध्वनित्वं बाधनम्—तत्र नायकपराङ्गतया बाधा, अत्र तु वाच्यप्रपोषकत्वमुचितम्। यत्रोक्तौ पद्ये उत्तमोत्तमत्वं ध्वनेर्ध्वन्यन्तरोद्गारतः सम्भवि, तत्र न भूतमिति ध्वनितमाह—उत्तमं स्यादिति।

कष्टगम्यं अस्फुटतया क्लेशगम्यमित्यर्थः । यथा—

त्वदभिरमिता द्वितीया जगत्यभूदद्वितीयैव ।
अनुमतिरप्यननुमतिस्तिथिरतिथिर्मे निशाप्यनिशा ॥ ७

अत्र विरोधाभासेन तव प्रकृतवैकल्यकारिणी काऽपि शक्तिरस्तीति । 'द्वितीया' सपत्नीत्यर्थः, अतो मे ममा'नुमतिः' कलोनचन्द्रा पूर्णिमातिथि-रनुमतिहीना सती 'अतिथि'रागतेत्यर्थः । निशाऽपि मेऽनिशा शश्वत्-प्रभातेवासीदित्यर्थः । पर्यायप्राप्ताऽपि मे पूर्णिमातिथिस्त्वयाऽननुमतिः कृता अनाहृतेति मम जीवनमेव व्यर्थमिति व्यङ्ग्यमस्फुटम् । 'प्रतिपदमङ्ग-मप्रतिपदमुपागता त्वत्प्रभावेणे'ति चेद्ध्वनिरेव—प्रतिपदं प्रतिव्यवसायमप्रति-पदमप्रतिपत्तिमङ्गमुपागतेत्यर्थः ।

सन्दिग्धप्राधान्यं यथा—

हे भद्र भाद्रपदमासचतुर्थिकेन्दो ।
तुभ्यं नमोऽस्तु न कदापि मयासि दृष्टः ।
श्यामेन तेन कृतकेन नवेन यूना
साकन्तथापि मम किं प्रथितः प्रवादः (ख) ॥ ८

त्वदभिरमितेति—अत्र द्वितीयाऽद्वितीया' । 'अनुमति'रननुमतिरिति सर्वत्र शब्द-विरोधमात्रं, तेन विरोधाभासेन तव प्रकृतवैकल्यकारिणी शक्तिरस्तीति परिहासो व्यङ्ग्यः । वास्तवार्थस्तु—द्वितीया मम सपत्न्यद्वितीयाऽभूत्, त्वद्दत्तसौभाग्यादिति भावः । 'कलाहीने साऽनुमति'रित्यभिधाना'दनुमति'पदं कलाहीनचन्द्रयुक्तपूर्णिमाबोधकम् । तथा चागामिन्यां पूर्णिमायां मया सह तव सङ्गोऽवश्यम्भावीति त्वयैव पूर्वं सम्मतिर्दत्ता, अधुना सा मम पूर्णिमा तिथिस्त्वदनुमतिहीना सत्यतिथिस्त्वादप्रतिथिभिन्ना भूत्वाऽगतेत्यर्थः । 'अनिशा'-

---

(ख) सन्दिग्धप्राधान्यमिति—किं तावद्वाच्यं प्रधानमुत व्यङ्ग्यमिति संशयो यत्र समाक्रियते यथा 'हे भद्र' इत्याद्युदाहृते पद्ये । भाद्रचतुर्थीचन्द्रो 'नष्टचन्द्र' इत्यादि लौकिकपरिभाषया गीयतेऽस्मद्देशीयैः—तद्दर्शनापवादनिराकरणार्थं कृष्णचरितसंघटितं स्यमन्तकहरणाख्यानं पुराणवर्णितं श्रूयते, असमर्थपक्षे तत्सूचकं श्लोकमात्रं 'सिंहः प्रसेनमवधीदि'त्यादि पठ्यते, जलमध्ये च दृष्टनष्टचन्द्रेण जनेन श्रूयते इति च रीतिः । अत्र मूलतः लोकसंस्कारः—स च नैकान्तिको हेतुरिति । गोप्याः विदितकृष्णानुरागायाः समाशङ्किताभिशापजन्यमपकृतानाया नष्टचन्द्रमुद्दिश्य भणितोक्तिः । मम दुरदृष्टविलसित-मेतत् पिशुनैर्जनैर्मद्विनयनिदर्शनत्वेन ख्याप्यत इत्यहो अकारणनिष्ठुरो जातिवर्गः ।

अत्र तव दर्शनेन प्रवादो भवतीत्यनैकान्तिकं, अपि तु तथाविधादृष्टद्वारैवेति। किं वा नायं प्रवादः, सत्यैवेयं किंवदन्ती, यतो भवद्दर्शनमन्तरेणापि जनैश्चेदुद्घुष्यते—इति सन्दिग्धं प्राधान्यं यस्य। इदं गुणीभूतव्यङ्ग्यमप्यास्वादस्य चमत्कारितया ध्वनिधर्मं भजत इति च कृताऽस्य परिवृत्तिः (छ)।

तुल्यप्राधान्यं यथा—

अरसमरसमाप्तौ भक्तां भूरहार्यो-
दजनिषत मृगाक्ष्या वीतलक्ष्याः कटाक्षाः।

यदेव लक्ष्यतया प्राप्नोतीत्यर्थः। पर्यायप्राप्तेति—स्वकृतनियमप्राप्तेत्यर्थः। प्रतिश्रवणावसितेति—अवसायो निश्चयः। तथाच यस्मिन् यस्मिन् दिवसे त्वया सङ्केतनिश्चयः कृतस्तस्मिन्नेव दिवसे त्वत्प्रभाविनाऽदृष्टप्रतिपत्तिरुपागतेत्यर्थः।

ऐकान्तिकं व्यभिचारभावोऽनैकान्तिकं, तथा च तव दर्शनादेव प्रवादो भवतीति न नियमः, यतो मध्येव तस्य व्यभिचारः, किन्तु प्रवादजनकीभूतादृष्टमेव कारणमिति ध्वनिः। किं वा त्वद्दर्शनादेव प्रवाद इति यथार्थ एव, तथापि त्वद्दर्शनं विना जनैश्चेदुद्घुष्यते तदा नायं प्रवादः किन्त्वियं किंवदन्ती। सत्येन—यतो मिथ्याप्रवादस्त्वद्दर्शनं विना न भवतीति नियमात्—इत्यपि ध्वनिः सम्भवति। यतो निश्चयाभावाद्गुणीभूतत्वम्।

मानभङ्गानन्तरं सम्भोगसमयेऽपि मानाभावो वर्तते, सम्भोगान्ते सोऽपि नास्तीत्याह—अरसमरसेति। अहार्यात् तथाच। मानसमये ये कटाक्षाः कान्तं लक्ष्यीकृत्य प्रवृत्ता आसन् त एवाद्य सम्भोगान्ते मानाभावस्याप्यगमाद्वीतलक्ष्या अजनिषत—तथाच कान्तं लक्ष्यीकृत्य कटाक्षप्रसरं विधत्तीत्यर्थः। भ्रुवोर्भङ्गतायाम उत्प्रेक्षामाह—कुसुमेषोः

(छ) आस्वादस्येति—'प्रमाणत्वं नैवैतत् स्वाभिमं विदुषां मत'मिति लक्षितायां रसोपहितत्वानुपपत्तेः सन्दिग्धप्राधान्यमयगुणीभूतव्यङ्ग्यत्वेऽपि ध्वनित्वं सम्भवि, रसाद्यास्वादस्यैव काव्योत्कर्षकरत्वात्। यदाहुर्दर्पणकाराः—'यत्र वस्त्वलङ्काररसरूपव्यङ्ग्यानां रसाभ्यन्तरे गुणीभावः तत्र प्रधानकृत एव काव्यव्यवहार' इति। एवमप्यत्र प्रकाशटीकाकृता चक्रवर्त्तिपादानां प्रमाणपुरःसरं यत्तदभिधानम्—'काव्यार्थस्यास्वादवृद्धिविशेषस्य सम्यगास्वादसमये गुणप्रधानभावानभिसन्धानमनुभूयते, कालान्तरे तु प्रकरणादिपर्यालोचनया भवन्नपि न काव्यव्यपदेशं प्राप्नोति आस्वादमात्रायत्तत्वादिति'। एवं सति चक्रवर्त्तिपादोक्तानां अन्यत्रगतानां पद्यानां परमकाव्यमध्यगतत्वालोचनप्रसङ्गे सविशेषेऽपि गुणीभूतत्वसम्भवेऽपि (कंचिदन्यैव कविनाऽन्यपद्योद्धारादिकार्येऽन्तर्भूताः) न चास्य गुणीभावाभाव इति निष्कर्षः।

धनुरिव कुसुमेषोर्भ्रूविमुक्तं तदामी-
शिखिशुरिव निपङ्गे मुक्तशेषाः पृषत्काः ॥ ९

अत्रोत्प्रेक्षालङ्कारेणोपमालङ्कारो ध्वनितः—तौ स्वप्राधान्येन स्थिताविति तुल्यप्राधान्यम् ।

काकुगम्यं काकाक्षिप्तम् । यथा—

कति न पतितं पादोपान्ते, न चाटु कृतोऽरितं,
कति न प्रणयः शीर्ष्णा दत्तः, कृता कति न स्तुतिः ।
तदपि न गतं वामे ! वाम्यं, लभस्व कृतार्थतां,
भवतु तव तु प्रेयान्मानो, न मानिनि ! माधवः ॥ १०

'न पतित'मपि तु पतितमेवेति नञ्काक्वाऽऽक्षिप्तम् । नैदमचमत्कारि, तथापि

'कति निपतितं पादोपान्ते, कृतं कति चाटु वा,
कति कति मया शीर्ष्णः प्रमं, कति स्तुतिरीरिता ।'

इति पठनीयम् ।

असमनोज्ञमसुन्दरम् । यथा—

सुदपुव्वं वि णिआमं हरिणो मुरलीरवं सुणंतीए ।
अप्पंतीए गुरुहि आचाल्लंमो महुए संवुत्तो (ज) ॥ ११

कन्दर्पस्य धनुर्भ्रूयुगमात्रमनन्तरं व्यामुक्तं यत् यथा मकलान्यनलि । कटाक्षार्थो लक्ष्यताम उत्प्रेक्षामाह—कन्दर्पस्य सुताऽऽश्लिष्टा बाणा गुरुसमागमानन्तरं निषङ्गे तूणे विविशुरिव ।

नञिति—नञ्रूपा या काकुस्तयाऽऽक्षिप्तं 'न पतितमपि ॥ पतितमे'वेति वस्तु । नैदमिति—अत्राप्यत्र चमत्कारसद्भावात् परिष्कारापेक्षा नास्ति तथापि परिष्कृतामप्येतामपि पठ्यतु—कति निपतितमिति ।

सुदपुव्वमिति—श्रुतपूर्वमपि निकामं हरेर्मुरलीरवं शृण्वन्त्याः । अप्पन्त्या गुरुभिः वाक्स्तम्भो यध्वाः संवृत्तः ॥ 'श्रुतपूर्वमपी'ति पदेन तत्कालीनमुरलीरवस्य सङ्केतजनकत्वरूपं चङ्गं बोध्यते । गुरुभयेन सङ्केतस्थले गन्तुमशक्यत्वात्मोहेन वाक्स्तम्भो जातः—

(ज) 'वायौरकुंजोद्दोलमडयिकोलाहलं सुणंतीए । घरकम्मवावडाए वहूए घोलंति अंगाइं ॥' इति जातिच्छायामुपजीव्य रचितेऽयमधिकतरं मनोज्ञत्वनिदानं वर्तत इति निपुणलक्ष्णो प्रतिभाति । तत्र मुरलीरवस्य माङ्गलिकमाकर्णनमेव गरीयान् हेतुः—वेधाव

अत्र तव दर्शनेन प्रवादो भवतीत्यनैकान्तिकं, अपि तु तथाविधादृष्टद्वारैवेति। किं वा नायं प्रवादः, सत्यैवेयं किंवदन्ती, यतो भवद्दर्शनमन्तरेणापि जनैश्चेदुद्घुष्यते—इति सन्दिग्धं प्राधान्यं यस्य। इदं गुणीभूतव्यङ्ग्यमप्यास्वादस्य चमत्कारितया ध्वनिधर्म्मं भजत इति च ज्ञाताऽस्य परिहृतिः (छ)।

तुल्यप्राधान्यं यथा—

स्मरसमरसमाप्तौ वक्रतां भ्रूरहासी-
दजनिषत मृगाक्ष्या वीतलक्ष्याः कटाक्षाः।

पदेन जल्पयता प्राप्स्यतीत्यर्थः। मर्य्यादाप्राप्तेति—त्वत्कृतनियमप्राप्तमित्यर्थः। प्रतियदवसायमिति—अवसायो निश्चयः। तथाच यस्मिन् यस्मिन् दिवसे त्वया सङ्केतनिश्चयः कृतस्तस्मिन्नेव दिवसे त्वत्प्रभावेणाहमप्रतिपत्तिमुपागतेत्यर्थः।

ऐकान्तिकं व्यभिचाराभावोऽनैकान्तिकं, तथा च तव दर्शनादेव प्रवादो भवतीति न नियमः, यतो मय्येव तस्य व्यभिचारः, किन्तु प्रवादजनकीभूतादृष्टमेव कारणमिति ध्वनिः। किं वा त्वद्दर्शनादेव प्रवाद इति यथार्थ एव, तथापि त्वद्दर्शनं विना जनैश्चेदुद्घुष्यते तदा नायं प्रवादः, किन्त्वियं किंवदन्ती। सत्यैव—यतो मिथ्याप्रवादस्त्वद्दर्शनं विना न भवतीति नियमात्—इत्यपि ध्वनिः सम्भवति। अतो निश्चयाभावाद्गुणीभूतत्वम्।

मानभङ्गानन्तरं सम्भोगसमयेऽपि मानाभावो वर्त्तते, सम्भोगान्ते सोऽपि नास्तीत्याह—स्मरसमरेति। अहासीत् तत्याज। मानसमये ये कटाक्षाः कान्तं लक्ष्यीकृत्य प्रवृत्ता आसन् त एवात्र सम्भोगान्ते मानाभावस्याप्युपगमाद्वीतलक्ष्या अजनिषत—तथाच कान्तं लक्ष्यीकृत्य कटाक्षशरान्न चिक्षिपतीत्यर्थः। भ्रुवोर्व्वक्रतात्यागे उत्प्रेक्षामाह—अहमेवो

(छ) आस्वादस्येति—'प्रमाणं चर्व्वणैवात्र स्वाभिन्ने विदुषां मत'मिति लक्षितस्य रसोपलक्षितापूर्वस्यास्य सन्दिग्धप्राधान्यगुणीभूतव्यङ्ग्यत्वेऽपि ध्वनित्वं सम्भवि, रसाद्यास्वादस्यैव काव्यानुवर्त्तकत्वात्। यदाहुर्ग्रन्थकाराः—'यत्र वस्त्वलङ्काररसरूपव्यङ्ग्यानां रसाभ्यन्तरे गुणीभावः तत्र प्रधानत्वम् एव काव्यव्यवहार' इति। एवमप्यत्र प्रकाशटीकाकृता चण्डीदासपादानां प्रमाणपुरःसरं यदभिधानम्—'काव्यार्थस्यास्वादप्रवृत्तिवेलायां तत्सम्भावनामात्ररसायां गुणप्रधानभावप्रभावमनाकलय्यानुभूयते, कालान्तरे तु प्रकरणादिपर्यालोचनया भवन्नप्यसौ न काव्यव्यपदेशं व्याहन्तुमीष्टे तस्यास्वादमात्रायत्तत्वादिति'। एवं सति चण्डीदासपादानां यत्यत्कृतानां पदानां सकलकाव्यसम्पत्तालोचनप्रसङ्गे परिच्छेदे गुणीभूततया सर्व्वत्रैवाऽपि (कचिदस्यैव कवेर्वेन्यपद्योद्यादिकाव्येऽप्यप्रस्ताः) न चावत् गुणीभावाभाव इति निष्कर्षः।

धनुरिव कुसुमेषोर्ज्याविमुक्तं तदासी-

दिविशुरिव निषङ्गे मुक्तशेषाः पृषत्काः ॥ ९

अत्रोत्प्रेक्षालङ्कारेणोपमालङ्कारो ध्वनितः—तौ समप्राधान्येन स्थिताविति तुल्यप्राधान्यम् ।

काक्वाक्षिप्तं काक्वाक्षिप्तम् । तद्यथा—

कति न पतितं पादोपान्ते, न चाटु कतोरितं,

कति न शपथः शीर्ष्णो दत्तः, कृता कति न स्तुतिः ।

तदपि न गतं वामे । वामं, लभस्व कृतार्थतां,

भवतु तव तु प्रेयान्मानो, न मानिनि । माधवः ॥ १०

'न पतित'मपि तु पतितमेवेति नञ्काक्वाक्षयाऽऽक्षिप्तम् । नेदमचमत्कारि, तथापि

'कति निपतितं पादोपान्ते, कृतं कति चाटु वा,

कति कति मया शीर्ष्णः शप्तं, कति स्तुतिरीरिता ।'

इति पठनीयम् ।

असमीचीनमसुन्दरम् । तद्यथा—

सुदपुव्वं वि णिआमं हरिणो मुरलीरवं सुणंतीए ।

अप्पतीए गुरुहि वाचाथंभो बहुए संवुत्तो (ज) ॥ ११

कन्दर्पस्य धनुर्ज्याकृष्टमात्रानन्तरं ज्यामुक्तं सत् यथा वक्रतान्त्यजति । कटाक्षाणां तत्प्रेक्षाम उत्प्रेक्षामाह—कन्दर्पस्य मुक्तावशिष्टा बाणाः मुक्तमात्रानन्तरं निषङ्गे तूणे विविशुरिव ।

नञिति—नञ्रूपा या काकुस्तयाऽऽक्षिप्तं 'न पतितमपि तु पतितमे'वेति वस्तु । नेदमिति—यद्यप्यत्र चमत्कारसद्भावात् परिष्कारापेक्षा नास्ति तथापि परिष्कारावश्य केतामपि प्रदर्श्य—कति निपतितमिति ।

सुदपुव्वमिति—श्रुतपूर्व्वमपि निकामं हरेर्मुरलीरवं शृण्वन्त्याः । अल्पन्त्या गुरुभिः वाक्स्तम्भो वध्वाः संवृत्तः ॥ 'श्रुतपूर्व्वमपी'ति पदेन तत्कालीनमुरलीरवस्य सङ्केतज्ञापक लक्ष्यं व्यङ्ग्यं बोध्यते । गुरुभयेन सङ्केतस्थले गन्तुमशक्यत्वात्क्षोभेन वाक्स्तम्भो जातः—

(ज) 'वाणीरकुंजोड्डीणसउणिकोलाहलं सुणंतीए । घरकम्मवावडाए बहूए सीअंति अंगाइं ॥' इति काव्यप्रकाशीयप्रसिद्धोदाहरणच्छायामुपजीव्य रचितऽप्यमाधिकतरं मनोभवनिदानं वचनं इति निपुणलक्ष्यं प्रतिभाति । तत्र मुरलीरवस्य साद्भिकमाकर्णनमेव गरीयान् हेतुः—हेतुश्च

अत्र 'निकामं श्रुतपूर्व्वसर्पी'ति तत् कालीनमुरलीरवस्य सङ्केतकारित्वं व्यनक्ति। तेन गुरुभिः समं कथयन्त्या वध्वा वाक्स्तम्भो जातः—तत्र गन्तुमशक्यत्वान्मोहो जात इत्यर्थः। अत्र 'वाक्स्तम्भः संवृत्तः' इति वाच्यार्थ एव चमत्कारी, व्यङ्ग्यार्थस्तु सत्यपि तथा न चमत्कारीति—इत्यसुन्दरम्। एवमन्येऽपि।

**प्रागुक्तध्वनिसंख्या एभिर्गुणितास्तथाष्टाभिः।**
**खयुगर्त्तुवह्निवसवो ध्वनिसाङ्कर्य्यात् पुनर्द्वेधा॥ ९० का**

मुरलीरवस्य सङ्केतकारित्वरूपव्यङ्ग्यार्थः सत्यपि वाच्यार्थापेक्षया चमत्कारी नेत्ययं गुणीभूतव्यङ्ग्यात्मम् (८)।

'प्रागुक्तध्वनिसंख्ये'त्यारभ्य 'ध्वनिसाङ्कर्य्यात् पुनर्द्वेधे'ति सूत्रद्वयम् (ञ)। तयोर्व्याख्यामाह—अष्टौ प्रकारा इति पूर्व्वोक्तैः शरेषुयुगखेन्दुभेदैर्ध्वनिभिः सह गुणीभूतव्यङ्ग्यानां

साहित्यनिबन्धमाले मुरलीरवस्य सङ्केतकारित्वरूपेणोद्दीपनविभावतयाऽऽख्यानम्—अत्र तु गोपवधूहृदयहरणकारणान्तरे महति सत्यपि तस्यैव परामर्शः। 'अप्रगल्भस्य गुरुषु'—इति हेतुगर्भविशेषणेन बोधितो हेतुः। वाक्स्तम्भः खलु सात्त्विकभावानामन्यतमः, तेनानुरागेण श्रीकृष्णं प्रत्यनुरागाभिप्रायप्रकटनमेव व्यङ्ग्यं वस्तु, तच्चानुभावेन वाक्स्तम्भरूपेण यथा साधु गतं तथा नान्येनोपायेनेति वाच्यार्थस्य चमत्कारातुलनया व्यङ्ग्यार्थस्यासमीचीनत्वम्। एवमन्यत्रापि चमत्कारह्रास एव गुणीभूतव्यङ्ग्यस्य चिह्नमिति स्थूलतो बोध्यम्। प्रसङ्गात्तत्र तत्रालोकनिदर्शनः श्लोकसंग्रहः—

"रसध्वनिर्न यत्रास्ति तत्र वन्ध्यं विभूषणम्।
मृतायाः स्तनशालिन्याः किं फलं हारसम्पदा॥"
... ... ... ... ...
"रसभावादितात्पर्य्यमाश्रित्य विनिवेशनम्।
अलङ्कृतीनां सर्व्वासामलङ्कारत्वसाधनम्॥"
"ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः।
रूपकादिरलङ्कारवर्ग एति यथार्थताम्॥"

(ध्वन्यालोके द्वितीयोद्योते)

(ञ) सूत्रद्वयमिति—एककारिकात्मकमसंयुक्तमिति शेषः। ध्वन्यन्तरसङ्कीर्णत्वं गुणीभूतव्यङ्ग्यानां संख्याप्रयत्नावगैव्य तत् ज्ञायत एव। तत्र द्वितीयसूत्रस्य परिष्कारव्याख्या

(८) एवं (ख) पुस्तके। अन्येषु सर्वेष्वपि पुस्तकेषु 'यद्यपि वाच्यार्थापेक्षया चमत्कारी नास्तीति' विच्छेदः पाठ उपलभ्यते।

अष्टौ प्रकारा गुणीभूतव्यङ्ग्यध्वनयः शरेषुयुगखेन्दु-(१०४५५) भेदैर्ध्वनिभिः प्रत्येकमभिसम्बध्यन्ते । तेन खयुगर्त्तुवह्निवसवो (८३६४०) भवन्ति । एते पुनर्ध्वनिभेदद्वयेन द्वेधा (१६७२८०) भवन्ति—तेन

व्योमदिङ्नागपञ्चार्कहयर्त्तुरजनीकराः ।
गुणीभूतव्यङ्ग्यभेदा विज्ञेया सूक्ष्मबुद्धिभिः (ञ) ॥ ६१ ॥

॥ इत्यलङ्कारकौस्तुभे गुणीभूतव्यङ्ग्यनिर्णयो नाम चतुर्थः किरणः ॥

मिलने सति तथा च पूर्वोक्तशरेषुयुगखेन्दुसंख्यानामष्टभिर्भेदैः पूरणे सति खयुगर्त्तुवह्निवसु-संख्यका ध्वनयः स्युरित्यर्थः । अयाम पूर्वोक्तध्वनिभिः सह गुणीभूतव्यङ्ग्यानां संसृष्ट्येक एव भेद उक्तः, सिद्धान्तकाराणां सामान्याकारेणैक एव भेदो विवक्षणीयः, न तु भेदत्रयमित्यभिप्रायेणाह—एत इति । शरेषुयुगखेन्दुभेदानां गुणीभूतव्यङ्ग्यध्वनिभिः साङ्कर्ये सति पुनरपि खयुगर्त्तुवह्निवसुसंख्यका ध्वनयः स्युरित्यर्थः । दिङ्नागा दिग्गजास्तेऽष्टौ, अर्कस्य सूर्यस्य हयाः सप्त, ऋतवः षट्, रजनीकरश्चन्द्र एक इति । * * *

---

नैकाकारेण दर्शिता, मूले तु 'ध्वनिसाङ्कर्ये'ति पदस्यार्थप्रकटनार्थं प्रयासो न कृतः । एवमादिषु स्थलेषु गणनाप्रदर्शनं केवलं प्रौढोक्तिमात्रमूलं, न तु तत् सर्वत्रैव सम्भवतीति चास्माभिः प्रागेव प्रदर्शितम् । 'अन्योन्ययोगादेवं स्यात् भेदसङ्ख्यातिभूयसी'ति 'पुनरप्युद्योतिते बहुधे'तिप्रायं कथनं निष्कलङ्कमित्येव दिक् ।

(ञ) सुधासागरकाराणां भीमसेनदीक्षितानां मते गुणीभूतव्यङ्ग्यानामेव तावदित्थमव्य-वस्थितस्थितानां परस्परसंमिश्रितानां पञ्चचत्वारिंशद्भेदाः (९+८+७+……२+१) । सजातीयविजातीयादिभेदैः परस्परसंमिश्रितैः २०२५ (४५×४५) विधाः, तत्र 'सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया' ते ८१०० (४×२०२५) भेदाः सङ्कीर्णाः, ४५ शुद्धाः—आहत्येन गुणीभूतव्यङ्ग्यास्तावत् ८१४५ भेदाः । व्यङ्ग्यास्तु शरेषुयुगखेन्दु—(१०४५५) प्रमाणकाः, ते च प्रागेव गणिताः । अतो ध्वनिगुणीभूतव्यङ्ग्यानामुभयेषां परस्परसंयोगात् संसृष्टिसङ्कर-भेदेन (१०४५५×४×८१४५) ३४,०६,२३,९०० सङ्कीर्णाः काव्यभेदाः सुधासागरे गणिताः । वस्तुतस्त्वयं गणनाप्रकारस्तन्त्रतामङ्गसंयोजनवैदग्धीमात्रस्य यथा प्रकाशकस्तथा न काव्यरसास्वादनिपुणतायाः इति पूर्वमेवाभिहितमस्माभिः, अतः कृतमत्र तत्प्रपञ्चेन । अत्रैषां काव्यभेदानां 'गुणीभूतव्यङ्ग्यभेदा विज्ञेया सूक्ष्मबुद्धिभि'रिति मूलस्थायामन्तरकारिकायां गुणीभूतव्यङ्ग्यकाव्यरूपेण निर्देशो 'प्राधान्येन व्यपदेशा भवन्ती'त्यभियुक्तनीतिमवधि-मनुसृत्य । तथा च भगवन्तो मम्मटभट्टाः स्वनिबन्धे—'यद्यपि स नास्ति कश्चिद्विषयो यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति, तथापि

प्राधान्येन व्यपदेशा भवन्तीति कश्चित् केनचिदत्राहार इति। ननु रसध्वनौ भावध्वनि-रवश्यं वाच्यः दीपकतुल्ययोगिताद्यलङ्कारध्वनिरूपमाद्यलङ्काराल्लभत इति, तथा च कथं प्राधान्यद्वारभेदमादाय ध्वनित्वं कथमनाङ्गभूतमादाय गुणीभूतव्यङ्ग्यत्वमिति निमित्तद्वय समावेशादिदिनिगमनाविरह एकतरत्वकल्पने नास्ति तावद्युक्तिरिति न वाच्यं, यतः प्राधान्यव्यपदेशस्तिशयितचमत्कृतिमत्तयैव भवति। तथा चाङ्गीभूतरसादीनां चमत्कृत्यातिशय्ये गुणीभूतव्यङ्ग्यत्वं, अङ्गिनस्तथात्वे ध्वनित्वमिति तद्विदां व्यवहारः। यत्र तु पर्य-ध्वनिगुणीभूतव्यङ्ग्ययोरितरेतरसंयोगे व्यङ्ग्यापेक्षा न तथा चमत्कारप्रकारी तत्रैको यथा तत्सादिविनियोजेन व्यङ्ग्यत्वे, स च युक्तिप्रकारः तावन्यत्र, अतोऽत्र प्रागेव दर्शितः योगरूढप्रयोगमध्यात् 'गुणीभूतव्यङ्ग्य'पदाद् गुणीभूतव्यङ्ग्यत्वमेवायातीति सुप्रतीतं वचः। गुणीभूतव्यङ्ग्यमयं काव्यमतिशयमलङ्कारशोभामाश्रयैव प्रकाशते, अतो 'रूपकादिमलङ्कारं बाह्यमाचक्षते परे' इति भामहोक्तदिशा तत्र तेषामलङ्काराणां बाह्यतया स्थितिः स्वस्वाङ्गतयोत्तमत्वसाधककल्पेन। इति—

---

कार्य्यसहकारित्वेन लोके या रसनिष्पत्तिसामग्री सैव-काव्ये नाट्ये च विभावादिव्यपदेशा भवतीति सम्प्रदायः (ख) ।—कारणमत्र निमित्तम् । रसादीनां या याः प्रक्रियाः कथिताः, तद्भिन्ना एवात्र ग्रन्थे प्रक्रिया आलङ्कारिकाणामनुरोधेनोक्ताः, अतएव काचित् काचित् प्रक्रिया नात्यन्तविचारसहाऽपि, तथाऽप्यप्राप्तस

---

धर्म्मस्योक्त्यनुसरणं दर्पणे, 'आनन्दः सहजस्तस्य (ब्रह्मणः) व्यज्यते च कदाचन । व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया ।—आद्यस्तस्य विकारो यः सोऽहङ्कार इतीरितः । ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयम् । अभिमानादतिः सा च परिपोषमुपेयुषी । व्यभिचार्य्यादिसामान्याच्छृङ्गार इति गीयते ।' इत्याद्याग्नेये (३३८ अध्याये) रसपर्य्यालोचनप्रसङ्गे । इत्थं दर्शितस्य रसस्यास्वादस्तुल्य आनन्द इति तदुपचारादेव तदालोचनप्रसङ्गो मूले ग्रन्थकृता निहितः । ......

(ख) परमार्थतस्त्वखण्ड एक एव रसः, लोके च रसनिष्पत्तिसामग्रीसम्भारस्य स्फूर्त्त्योऽपि खण्डशस्तेषां रसोद्दीपकत्वरूपेण न सार्व्वत्रिको बोध इति तु सुप्रतीतं, परं काव्ये दृश्ये श्रव्ये च रसस्य प्रकाशशरीरस्वरूपस्य विशेषव्यवहारात् तेषां तथा बोधोऽभ्युपेयते, इति सम्प्रदायस्याविरोधो ध्रुवो । इयञ्च प्रक्रिया सामाजिकानां भक्तानाञ्चान्तरिकरत्यादीन् भावानास्वादाङ्कुरप्रादुर्भावयोग्यान्नितरां साधयतीति शास्त्रनिष्कमतमतिवर्त्तमानाऽव्यवसीयते । रसात्मकस्य वाक्यस्योपलब्धिरेव ब्रह्मसाक्षात्कारस्योदरतया प्रार्थ्यते—सा च साधनादिकल्पनामन्तरेण न सम्पाद्या, अतो नात्र काचिदितिकर्त्तव्यता । एवमेव वाक्यपदीयकारः स्वनिबन्धे 'शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् । प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते ।' रसनिष्पत्तिरिति—परमार्थतो रस एवास्वादाङ्कुरकन्दः, लौकिके तु बोधे षष्ठीसमासकल्पना—यदाहुर्दर्पणकाराः—"यद्यपि रसाभिन्नतया रस,स्यापि न कार्य्यत्वं, तथापि तस्य कादाचित्कतयोपचरितेन कार्य्यत्वेन कार्य्यत्वमुपचर्य्यते" इति । काव्ये नाटके च आलङ्कारिकोपक्रमं विभावादिसंज्ञाकलापकमिति प्रागेव दर्शितमस्माभिः—भक्तिशास्त्रस्य, विशेषतो गौडीयवैष्णवपण्डितमण्डलीमण्डितस्य तस्यालङ्कारिकप्रक्रियादिश्रमशुश्रूषतः (*Vide* the article on Bhakti by Sir G Grierson in the Encyclopaedia of Religion and Ethics) न विभिन्नः मंत्र संहितादिः । तथाच भक्तिरसामृतसिन्धौ भक्तेः रसत्वेनालङ्कारिकसरणिमनुसृत्य प्रकाशः श्रीमद्रूपगोस्वामिपादैर्दर्शितः—तद्यथा 'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः । स्वाद्यतां हृदि भक्तानामानीता श्रवणादिभिः । एषा कृष्णरतिः स्थायिभावो भक्तिरसो भवेत् । " कारणकार्य्येति—एतच्च लौकिकबोधप्रवृत्तिमनुसृत्य—यदुक्तं दर्पणे 'कारणं कार्य्यमप्यारिरूपा अपि हि लोकत । रसोद्बोधे विभावाद्याः कारणान्येव ते मताः ।" तत्त्वसाक्षात्कारस्य ध्यानकर्म्माधिरोहणवर्त्मैव नास्वाभाविकम् । (In man as he now exists, intuition is the fringe or *penumbra*

स स्थायी कथ्यते विज्ञैर्विभावस्य पृथक्तया ।
पृथग्विधत्वं यात्येष सामाजिकतया सताम् ॥ ६३ का

सामाजिकतया सतां सामाजिकानामेक एव कश्चिदास्वादाङ्कुरकन्दो मनसः कोऽपि धर्मविशेषः स्थायी । स तु विभावस्योपकारविशेषभेदेन भिद्यते (क) ।

अनुकार्याश्रयास्तु अनन्ता एव स्थायिनो नानाविधाः । यथा—

शृङ्गारे रतिरुत्साहो वीरे स्याच्छोकविस्मयौ ।
करुणाद्भुतयोर्हासो हास्ये भीतिर्भयानके ॥
जुगुप्सा बीभत्समये क्रोधो रौद्रेऽष्ट नाट्यगाः ॥ ६४ का

तत्र रतिर्यथा—

रतिर्थेतोरञ्जकता सुखभोगानुकूल्यकृत् ।
सा प्रीतिमैत्रीसौहार्दभावसंज्ञाञ्च गच्छति ॥ (छ)
या सम्प्रयोगविषया सा रतिः परिकीर्त्तिता ।
सम्प्रयोगः स्त्रीपुरुषव्यवहारः सतां मतः ॥

रतिर्यथेति—चित्तस्य रञ्जनं द्रवीभावलक्षणजनकधर्मविशेष एव चेतोरञ्जकता। येव सम्प्रयोगविषया चेत्तदा रतिरुच्यते—इयमेव चित्तस्य कठोरत्वं दूरीकृत्य कोमलत्वं द्रवीभावञ्चोत्पादयति। पूर्व्वं सामाजिकानां स्थायिरूपो यो धर्म्मो ह्रादिनीमूले वृत्तिरूपेणोक्तस्ततोऽपि कोटिगुणितानन्दरागाया ह्रादिनीशक्तेः सारवृत्तिरूपेयं रतिः—अस्या एव रतेः पाकात् पाकान्तरं प्राप्य चरमदशायां महारागपर्य्यन्तपाको भविष्यति। अतएव उद्धवसन्देशे तादृशं महारागं दृष्ट्वा उद्धवः स्वचमत्कारमाह 'क्वेमाः क्व चैव परमात्मनि रूढभाव' इति। रूढभावस्यापरपर्य्यायो महारागो महाभाव इति च। सुखभोगेति—सुधा यथाऽन्नपानादीनां भोजनजन्यसुखस्यानुकूल्यं करोति तथेयं रतिरपि श्रीकृष्णस्य नामरूपगुणलीलाश्रवणदर्शनादिजन्यसुखभोगानामानुकूल्यं करोति। रतिमतां यथा श्रीकृष्णस्य नामगुणलीलादिश्रवणदर्शनादिजन्यं सुखं जायते न तथा रतिशून्यानामिति ज्ञेयम्। सम्प्रति यत्किञ्चिद्भेदमाश्रित्य भेदत्रयमाह—सेति। सा रतिभिन्ना चेतोरञ्जकता संज्ञात्रयं गच्छति।

नाट्येऽप्यस्ति केचिदप्यवदन्। तदुक्तं, यतः कश्चित्र रसं सहते नटः।' इत्यादिना नाट्येऽपि शान्तरसोऽस्तीति व्यवस्थापितम्। परिहरन्तते भर्त्तृहरिनिर्व्वेदे काव्यमिश्रकस्ते प्रबोधचन्द्रोदये च तस्याङ्गित्वेनोपलब्धिः; नाट्यचरितप्राकृतलोकोत्तरचरितादौ विनयेऽप्यङ्गत्वेनेति रसिकसंमतो शान्तः। एवं नवरससमन्विता इत्यर्थः। दादश दास्यसख्यवात्सल्यमधुराः प्रसिद्धाः शृङ्गारस्य स्थायिनोऽपि येऽप्यालङ्कारिका वदन्ति। अत्र तु सख्यस्य न विशिष्टरसकल्पना यत्र, रसानेव तत्त्वमादितस्त्रिदन्ति—अत एकादशीति कथनम्। ते च श्रीमद्भागवते चाणूरवधप्रसङ्गे (१०।४३।१७) सूचिताः—यथा—

"मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्त्तिमान्
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ।
मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां
वृष्णीनां परदेवतेति विदितो रङ्गं गतः साग्रजः ॥"

शान्तस्तु वात्सल्यपि रसाभिधामर्हन्तीति तथ्यानभिज्ञो। गोपानां स्वजन इति

**असम्प्रयोगविषया सैव प्रीतिर्निगद्यते ॥ ६५ का ॥**

सैव चेतोरञ्जकता ।

**सखिपत्न्यां पतिसखे द्रौपदीकृष्णयोर्यथा ।**

**द्वयोः सखीषु सखिषु सैव मैत्री निगद्यते ॥ ६६ का**

द्वयोः स्त्रीपुरुषयोः—स्त्रीणां सखीषु, पुरुषाणां सखिषु ।

द्रौपदीकृष्णयोः सख्यं प्रीतिरुच्यते । तथा स्त्रीणां सखीषु परस्परसख्यं मैत्र्युच्यते, एवं पुरुषाणां सखिषु परस्परसख्यञ्च मैत्र्युच्यते । इयं मैत्री परस्परस्कन्धादिषु हस्तादि-

---

सख्यदासयोः, स्वमित्रोः शिशुरिति वत्सलकरुणयोः, दृष्टीनां परदेवतेति शान्तस्य च सम्भवत्वात् । प्रेयः नव मुख्याः । एते द्वादश रसाः सर्व्वेऽपि शक्तौ विपरिणमनीयाः । प्रेमवत्सलसख्यानां रतौ भावापरसंज्ञदेवताविषयकरतौ वान्तर्भावः सुगमः । इतरेषां परिस्थितौ रसामृते कुमारस्वामिना दर्शिता । "चतुर्वर्गमध्ये सर्वप्राणिसुलभस्य कामस्य धर्मार्थमूलकत्वात् प्रथमं शृङ्गारः, ततस्तज्जन्यत्वेन हासः । ततस्तद्विरोधित्वात् करुणः । ततस्तन्निमित्तभूतोऽर्थप्रधानो रौद्रः । ततोऽर्थकामगोर्धर्ममूलत्वाद्धर्मप्रधानो वीरः । तस्य भीताभयप्रदानसारत्वात्तदनन्तरं भयानकः । ततस्तत्कारणभूतो बीभत्सः । वीराक्षिप्त-भयानकाद्यनन्तरं वीररसफलभूतोऽद्भुतः । त्रिवर्गफलकरमानन्तरं मोक्षफलकः शान्त इत्येवमेतेषु क्रमोपपत्तिः ।" वैष्णवालङ्कारिकवर्य्यैः श्रीरूपगोस्वामिचरणैरपि नवपूर्व्व-सूरिभिः कल्पितानां द्वादशानां रसानामेकत्वं प्रतिष्ठापितम् । स च भक्तिरसः, रतिरिति बहुलं तद्व्याख्या । 'सा द्वेधा रसज्ञैः परिकीर्त्तिते'ति सद्वृत्तरसाम्बुनिधौ । सख्यशब्दः शान्तप्रीतिप्रेयोवत्सलमधुराख्ये शृङ्गारभेदे, गौणशब्देन इतरेषां वीरहास-करुणादीनां संप्राप्तिः । एवमप्युज्ज्वलनीलमण्यादुपक्रमे 'मुख्यरसेषु यः संक्षेपेणोदितो रहस्यत्वात् । पृथगेव भक्तिरसराट् स विस्तरेणोच्यते मधुरः ॥' इत्येकेनाखिलस्य रसस्य परामर्शः । 'मुख्यगौणानां, 'द्वयश्रयो'रेवं पृथक्करणमालङ्कारिकसम्प्रदायविरुद्ध'—यथा काव्यप्रकाशे—'अष्टौ नाट्ये रसाः स्मृताः' इति प्राक्, पश्चात् 'शान्तोऽपि नवमो रस' इति निर्देशः, दर्पणेऽपि 'इत्यष्टौ रसाः शान्तस्तथा मत' इति शान्तस्य पृथक्तया सूचनम् । अन्ये तु नवैवेत्यभिप्रायाभिधानमेतदिति केचित् । न तन्मुर्विरसिद्धमेवेह प्राक् । शान्तकार्य्यगतो रसः, यदपि तु रस आत्मगत इष्यते द्वयोरन्ये च कार्य्ये समानसंख्यका एव रसाः—अतो मूले द्वयोर्न्योऽपीति प्रतीकम् ।

(क) रतिरेव सर्व्वमाक्रम्य तिष्ठति—अस्या एव रतेः शान्तप्रीत्यादिना पञ्चधा मुख्यत्वेन कथनं, वीरहासादिसप्तधा गौणत्वेनापि निर्देशः । रतेरित्थं भेदात्तत्प्रपञ्चस्तु नीलमण्यादिषु ग्रन्थेषु सूचिताश्चैव तत् द्रष्टव्यम् ।

**मनोवृत्तिमयी प्रीतिर्म्मतो स्पर्शादिकोचिता।**
**निर्व्विकारा सदैकाभा सा सौहार्द्दमितीर्य्यते ॥(ग)॥९७का**

सदैकाभा सदैकरूपा सा चेतोरञ्जकता सौहार्द्दम्—सा च स्त्रीसखीनां पतिसखीनाञ्च परस्परविषया।

स्पर्शकर्म्माद्युचिता भवति स्त्रीणां परस्परयथेष्टस्पर्शादिव्यवहारे दोषो नास्ति—एवं पुरुषाणामपि ज्ञेयम्। प्रीतिसौहार्द्दाभ्यामेतादृशविशेषो मैत्र्यां नैव,—अत तत्र स्त्रीपुरुष सख्येन स्वच्छन्दस्पर्शानौचित्यात स्त्रीसखीनां स्त्रीणां पतिसखीनां पुरुषाणाञ्च परस्पर-विषया। निर्व्विकारेति—स्त्रीपुरुषयोः परस्परदर्शनेऽपि विकाररहितेत्यर्थः।

नतु श्रीकृष्णस्य देवोत्तमत्वेन सर्व्वव्यापकत्वादिरूपत्वेन सवकर्त्तृत्वस्य च, स्थायी च, (5) सम्प्रयोगाविषयत्वाभावान्न रतिशब्दवाच्य किन्तु तस्य स्थायिनो 'भाव इति स्वतन्त्रसंज्ञा

---

'विदग्धानां मिथो लीलाविलासेन हि यत् सुखम्।
न तथा सम्प्रयोगेन स्यादेवं रसिका विदुः ॥'

इत्येवं सम्प्रयोगविषयाया स्त्रीजनालम्बनाया पुरुषालम्बनायाश्च रतेः स्तुतिः, श्रीरूपगोस्वामिचरणानां ग्रन्थे।

(ग) आन्तरभावरूपत्वेन वर्त्तमानाया अपि रतेर्बहिरभिव्यक्तितो व्यक्तिरोचिता। अस्याश्चैव लक्षितायाः प्रीतेर्म्मनोवृत्तिमयत्वकथनम्। मैत्र्याश्च स्पर्शादिव्याप्यभिव्यक्तिमत्त्व, सौहार्द्दे तदपरिवर्त्तनशीलत्वमेव मुख्य लिङ्ग', विश्वासो मित्रभावस्य सख्य' द्विविधमीरितम्। अस्या अत्र वैद्यग्रन्थादर्शितपद्धत्या आलम्बनभेदेन विभागः, विस्तरस्तु भक्तिरसामृत सिन्ध्वादौ द्रष्टव्य। एषु भेदेषु केचित् कामानुगाया भक्तेर्विम्बानुबिम्बभूता, केचन सम्बन्धरूपायाः, इत्यादिविचारस्तु नात्र कृत। भावः—एष सर्व्वोऽपि ग्रन्थिमाहात्म्यात्मकभावा व्याप्तिम् इत्यन्यत्र लक्षितश्च—

'शुद्धसत्त्वविशेषात्मा प्रेमसूर्य्यांशुसाम्यभाक्।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते ॥' (भावभक्तिलक्षणम्)

मैत्रसख्ययोर्भेदो दर्शित श्रीमद्रूपगोस्वामिचरणैः लक्षणप्रदर्शनव्याजेन यथा—

'भावश्च प्रोच्यते मैत्र विश्रम्भो विनयान्वित ।'
'विश्रम्भः साध्वसोन्मुक्तः सख्यं स्ववशतामय ।'

रतौ प्रीतिस्तु न तथा, रागस्य विभावो विलासो विस्तारश्च वर्त्तते। तथाच्चैतयोः सौहार्द्द'—श्रीलव्यक्तिमयी' प्रीतौ रतिर्व्वा।

---

(5) पश्चात् कार्म्मिक पाठः। 'रतिशब्दवाच्य इति' इत्युक्ते नावगम्यार्थकत्वमसमतया साधु स्यात्।

**सैव देवादिविषया रतिर्भावस्य कथ्यते ॥ ६८ का**

सैव चेतोरञ्जकता—आदिशब्दाद्गुरुप्रभृतिषु ।

**या सम्प्रयोगविषया साऽप्यवस्थाविशेषतः ।**

**पाकात् पाकान्तरं प्राप्य चरमे पर्य्यवस्यति ॥ (न) ६९ का**

सैवेत्याह—सैवेति । देवः श्रीकृष्णस्तस्य देवत्वसर्व्वव्यापकत्वादिरूपेण या चेतोरञ्जकता सैव भावः—अयमेव भक्तिरसो भवतीत्यग्रे वक्ष्यति (ञ)। किन्त्वय भावरूपस्थायी सम्प्रयोगविषया या रतिस्तस्याः परिणामरूपो यो भावस्तस्याङ्गित्व एव श्रेयः।

अवस्थाविशेष इति—रत्युत्तरश्रवणकीर्त्तनादिभजनानां पौनःपुन्येन जातो यो रतेरुत्कर्षरूपावस्थाविशेषस्तं प्राप्येत्यर्थः, सा, रतिरुत्कर्षदशां प्राप्य प्रथमपाकाद्भावरूपेण

---

(ञ) भक्तिरसो भविष्यतीति—एतच स्वसम्प्रदायिमतानुसारेण—अलङ्कारनिबन्धे भक्तिरसस्य रतित्वेन भावतया वा निर्व्वाहो नातिदुःसाध इति पूर्व्वमेवावोचाम।

"अन्याभिलाषिताशून्यं ज्ञानकर्म्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ।"

सा च भक्तिर्न सामाजिकमात्रहृदयवर्त्तिनी, अतोऽलङ्कारशास्त्रे तमनुलक्ष्य भेदादिकल्पनं न यथार्थम्। कविकर्णपूरगोस्वामिपादास्तु कश्चिदुभयमनमासङ्गसाधनमिच्छन्तः स्वकीयमनभावे अथामङ्गलं जटिलताख्यानयन्ति। यो भावोऽत्र रतेर्भेदत्वेनोक्तः स पश्चाद्भक्तित्वेन गण्यत इति नातिसुन्दरं समाधानम्।

(न) सर्व्वे एव भावा यथोक्तविवर्त्तभेदाः—चरमे विवर्त्ते महाभावस्य विलासः।

'शृङ्गाररसमर्व्वस्वं शिखिपिच्छविभूषणम् ।
अङ्गीकृतनराकारमाश्रये भुवनाश्रयम् ॥'

इति लीलाशुकोक्तौ सैव परिणतिरुपभोग्या। रसस्याभिव्यक्तेः परां काष्ठामालम्ब्योक्तं रससर्व्वस्वे श्रीमद्भागवते प्रथमे—

'निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥"

'प्रेम'पदेन साधारण्येन परिचिताया अस्या रतेः प्रकर्षतारतम्यात् क्वचित् संज्ञान्तराण्यपि प्रदर्श्यन्ते, ते चेत्थं निर्दिष्टा नीलमणौ—

"इयमेव रतिः प्रौढा महाभावदशां व्रजेत् ।
या मृग्या स्याद्विमुक्तानां भक्तानाञ्च वरीयसाम् ॥
स्याद्दृढेयं रतिः प्रेमा प्रोद्यन्स्नेहः क्रमादयम् ।
स्यान्मानः प्रणयो रागोऽनुरागो भाव इत्यपि ॥

चरमे पाके यतः पाकान्तरं नास्ति, यथेक्षुरसः सितोपलापाकावधिः।

यदुक्तम्—

"यथेक्षूणां रसो द्यामः पाकात् पाकान्तरे गुड़ः।
गुड़ोऽपि पाकतः पाके चरमे स्यात् सितोपला॥ Anantadasa's Rasasudhakara (?)
तथा रतिर्भावपूर्व्वरागरागाख्यपाकतः।
अनुरागः स प्रणयप्रेमभ्यां पाकमागतः।
स्नेहपाकमयो याति महारागोऽयमुच्यते॥"

Sahityadarpana Chap III 'निर्व्विकारात्मके चित्ते भावः प्रथमविक्रिये'त्युक्ते रतिः प्रथमः पाको भावः।

कोऽसौ रसो यस्याभिव्यक्तये विभावादीनां कारणत्वमित्यपेक्षायां(6)

तत्स्वरूपमाह—

परिणतो भवति। अत्र पाकस्तु भजनस्य पौनःपुन्यमेव ज्ञेयम्। तत्र दृष्टान्तो यथेति—श्यामोऽपक्व इक्षुरसः पाकात् पाकान्तरैः पाकपौनःपुन्येन गुडो भवति, यथा च गुड एव पाकपौनःपुन्येन खण्डो भवति, तथा भावोऽपि भजनपौनःपुन्येन रत्यपेक्षयोत्कर्षं प्राप्य पूर्व्वरागो भवति, एवं क्रमेणोत्कर्षस्य परमकाष्ठाऽपन्नो महाराग आनन्दस्य परमावधिरूपः—एतादृशो महारागो गोपीनामेव, नान्येषां भक्तानाम्, अतएव 'सख्यो ता चैव परमात्मनि रूढ़भाव' इत्युक्तवता उद्धवेनाप्यासामेव रूढ़भावत्वेनोत्कर्षः कृतः। एवम् 'आसामहो चरणरेणुजुषामहं स्या'मिति पद्येन गोपीनामेव चरणधूलिप्राप्तौ स्वजन्माकाङ्क्षा कृता, न तु कदापि रुक्मिणीलक्ष्मीप्रभृतीनां, कुत्रापि प्राप्तेरदृष्टत्वात्। सितोपलेति—'मिछ' इति प्रसिद्धाया मत्स्यण्डिकायाश्चरमपाकोत्थानः कश्चिदपूर्व्वपदार्थविशेषः पश्चिमदेशे प्रसिद्धः। निर्व्विकारेति—विकारोऽत्र विषयेऽत्यासक्तिः, तद्रहिते चित्त इत्यर्थः।

बीजमिक्षुः स च रसः स गुडः खण्ड एव सः।
स शर्करा सिता सा च सा यथा स्यात् सितोपला।
अतः प्रेमविलासाः स्युर्भावाः स्नेहादयस्तु यद्।
प्रायो व्यवह्रियन्तेऽमी प्रेमशब्देन सूरिभिः॥"

विस्तरस्तत्रैव द्रष्टव्यः। रसार्णवसुधाकरे त्वयमर्थ उपमानान्तरेण सूचितः—प्रेमविलासानाम् सर्व्वेषां तत्र पाकेन यथाक्रममेकैकेन संज्ञापरिपाटी। तथा च—

अङ्कुरपत्रस्कन्धकलिकाप्रसूनफलभोगभाग्यं क्रमशः।
प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इत्युक्तिः॥

6) एवं (ख) पुस्तके पाठः। अन्यत्र सर्व्वमपि पुस्तकेषु 'कारणत्वमित्यपेक्षया' इति पाठः।

बहिरन्तःकरणयोर्व्यापारान्तररोधकम् ।
स्वकारणादिसंश्लेषि चमत्कारि सुखं रसः ॥ ७० का

अयन्तूत्तमप्रकृतीनामनुकार्य्याणां स्वतःसिद्ध एव (ट), काव्यादौ तु

अथ रससाक्षात्कारे परिपाटी यथा—आदौ श्रवणकीर्त्तनादिभिर्भजनानां पौनःपुन्यादानन्दरूपाया रतेराविर्भावः, तदनन्तरं विभावादिसमवधानदशायां रतेः साक्षात्कारः, तदनन्तरं रतिरेव रसरूपा भवति, तदनन्तरं पुनस्तैरेव विभावादिभिः करणै रससाक्षात्कारः। एवं सति रतिसाक्षात्कारे यादृशानन्दाविर्भावस्तस्मादपि कोटिगुणितानन्दाविर्भावो रससाक्षात्कारे, एतदेवाह—बहिरिति। अस्ति रतिसाक्षात्कारे यादृशसुखानुभवः, एवं पूर्व्वस्मिन्ननेकपदार्थविषयका (7) ये ये सुखानुभवा आसन्, तेभ्यः सर्व्वेभ्यः सकाशात् कोटिकोटिगुणाधिको यो रसदशायामानन्दानुभवस्तस्माज्जातो यश्चमत्कारस्तद्विशिष्टं सुखं रसं इति रसलक्षणम्। अथ कोऽसौ चमत्कार इत्याकाङ्क्षायामाह—यथा बहिर्व्वस्तूनामनेकेषां मध्ये कस्यचित् सर्व्वोत्कृष्टाद्भुतवस्तुनो दर्शनान्नेत्रस्य चमत्कारो जायते, तत्र चमत्कारपदार्थो नेत्रस्य स्फारतारूपः, तथैवाभ्यन्तरवस्तूनां मध्ये रसदशायां कस्यचिदद्भुतसुखस्यानुभवाच्चित्तस्य स्फारतैव चमत्कारः। चमत्कारि सुखं कीदृशं भवेदित्यपेक्षायां विशेषणमाह—बहिरिति। रसस्योदयदशायां बहिरिन्द्रियाणामन्तरिन्द्रियाणाञ्च रसानुपयोगिपदार्थमात्रे यो वृत्तिरूपो व्यापारस्तस्य रोधकं प्रतिबन्धकमित्यर्थः।—तथा च रससाक्षात्कारे कारणीभूतविभावादेरभावे, न तु तदानीमिन्द्रियाणां पदार्थान्तरस्य ज्ञानजनने सामर्थ्यमस्तीति भावः। तदेव पुनर्व्विशेषणान्तरेणाह—स्वकारणेति। स्वकारणानि विभावादि, (8) तस्य संश्लेषि,—तथा च विभावादिवलितस्यैव रसस्य साक्षात्कारो जायत इत्यर्थः। यथैकमेव दधि मधु सितामरिचकर्पूरादिमिलितवस्तुमिलितं सद्रसालाख्यं भवति, तस्यास्वादनकाले चित्तस्य प्रथमो भवति, तथेत्यर्थः।

अयन्त्विति—अयं रस उत्तमप्रकृतीनामप्राकृतानामनुकार्य्याणां भक्तानाम्। नतु

---

(ट) रसस्य स्वरूपलक्षणं तटस्थलक्षणञ्च दर्शितं टीकाकृताऽऽस्वाद्यस्वभावसूचनेन विशेषणप्रपञ्चदानेन च। एवंविधेषु स्थलेषूपमानद्वारा विग्रहीकरणं विना नान्या गतिः—सैव टीकायां दर्शिता। 'रसे सारश्चमत्कार' इति चमत्कारस्यैव प्राधान्यम्। दर्पणादिषु निबन्धेष्वस्यैव 'अलौकिकचमत्कारप्राणः, कैश्चित् प्रमातृभिः। स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥' इत्यादि वाक्येन परामर्शो विहितः। चमत्कारीति—चमत्कारस्याप्राकृततैव बोधयित्री।

---

(7) एषोऽपि सार्व्वत्रिक पाठः। स च 'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्ता'विति न्यायेन समाधेयः।

(8) एव (ग) (ङ) पुस्तकयोः। अन्यत्र 'स्वकारणं विभावादि' इति पाठः।

**प्राकृताप्राकृताभासभेदादेष त्रिधा मतः ॥ ७२ का**

एष रसः प्राकृतो लौकिको मालतीमाधवादिनिष्ठः, अप्राकृतः श्रीकृष्ण-राधादिनिष्ठः । आभासस्त्वनौचित्यादिप्रवर्त्तितः । स चाभासस्त्रिविधः प्रसिद्धकृत्रिमसिद्धभेदात् । आद्यः प्राक् प्रसिद्धिमात्रोपहतः, न तु सम्पत्स्यमानः ; स च रसाभासो भवन्नपि रसपोषकः—यथा नन्दनसम्बन्ध-प्रसिद्धौ मालत्या माधवे रतिपुष्टिरिति प्राकृते, अप्राकृते तु शिशुपालसम्बन्ध-

प्राकृतेति—प्राकृते रस एव नास्ति (८), तदपि यत्त्रैविध्यमुक्तं तत् परमतानुसारेणेति ज्ञेयम् । प्राकृते ये रसं मन्यन्ते ते भ्रान्ता एव ;—यतोऽत्र क्षमिविड्भस्मान्तनिष्ठेषु प्राकृतनायकेष्वतिनश्वरेषु रसो न भवति, किन्तु तत्रो विभाववैरूप्यात्तद्विपरीतं दुःखमयं वैरस्यमेवोत्पद्यते, तत्रैव रसं वर्णयन्तीत्यर्थः । अतएव ग्रन्थकारेणापि प्राकृतविषय एकमपि पद्यं नोदाहृतं, किन्त्वप्राकृत एव सर्वाण्यि पद्यान्युदाहृतानीति ज्ञेयम् । प्रसिद्धेति—रुक्मिण्या सह शिशुपालस्य सम्बन्धो लोकानां प्रसिद्धिमात्रेणैवोपहतः भ्रान्तानां प्रतीतिविषयः, न तु सम्पत्स्यमानः—स सम्बन्धो न तु सम्पन्नो भविष्यतीत्यर्थः । अतः शिशुपालस्य रुक्मिण्यां रतौ रसाभास एव । एवं परोढ़रमणीषु पुरुषस्य रतिरपि रसाभास एव, प्राकृतविषयत्वात् ।

---

यद्रसानामष्टधा विभागः कृतस्तदनुभावादिवद्धिःप्रकाशकत्वामवलम्ब्यानुकार्य्याणां नायकादीनां बहुत्वमनुसृत्य, न तु रसस्वरूपस्यानन्दस्यैकत्वेनतया वा भेदेन । रसास्वादिनामनुभवसाक्षिकानन्दस्य तदानीं वेद्यान्तरसम्पर्कशून्यत्वेनालौकिकत्वमनुकारवत्तया च न भेदकल्पना सम्भवतीति तत्त्वम् । प्रकाशदर्पणकृदादयो वाढ़मेतत्सत्पोषका अपि नामाभिज्ञानामेक एव रस इति न स्फुटमभिदधति । तत्रेदमपि तदभिप्रायविलसितं सम्भवि यत्र खलु सर्व्वेषां रसानामानन्दमात्रा आनन्दप्रकर्षनिष्ठेका, वीभत्सजुगुप्साऽदिषु शृङ्गारकरुणादिषु उपलब्धेः पृथक्त्वस्य निह्नोतुमशक्यत्वात् । वयन्तु सम्भावनामप्येताहशीं न बहु मन्यामहे, कारणञ्च तत्र प्राक् प्रदर्शितमेव । न खलु बहिरावेष्टनभेदत आन्तरानन्दस्य स्वरूपभेदः कल्प्यः—एवमप्याधुनिकाः प्रतीच्याः काव्यतत्त्वविदः । (Cf. the views of B. Croce, Spingarn, Henderson and others).

(८) प्राकृते रस एव नास्तीति हि सम्प्रदायविदः, तन्मते श्रीकृष्ण एव रसः सम्भवी, भक्तिसरक्षित् प्राकृतजने । मतमेतदालङ्कारिकमतानुसारि नेति टीकाकृतैव सूचितम्—वस्तुतस्तु रसास्वादिनो ग्रन्थकृतः प्राकृते रसवत्त्वमपह्नोतुं न शक्नुवन्तीति मन्येऽमायत एव—तथापि स्वसम्प्रदायमतरक्षणमिषेण चातुरीमालम्बयम् । सान्तानां जीवानामनन्तमानां सदैव मायार्त्ते यदैव तं रसास्वादलाभमानन्दस्वरूपमात्मने, अतः कथन्नेषामनधिकारः

'यद्यप्ययं रसाभासः परोढ़रमणीरतिः । Rasasudhakara ?
तथापि ध्वनिवैशिष्ट्यादुत्तमं काव्यमेव तत् ॥' इति

तथापि 'रसो भावस्तदाभासो भावशान्त्यादिरक्रमः' (२५ का)

इत्याद्युक्तदिशा 'आभासोऽपि चमत्कारदशायां ध्वनिभाग् भवेत्' इति ध्वनिमर्य्यादयैवोत्तमकाव्यत्वं, न त्वनौचित्यरीत्या—इति प्राकृते, अप्राकृते तु परोढ़रमणीरतिरेव सर्व्वोत्तमतया भूयसी श्रूयते, न तस्या अनौचित्य-प्रवर्त्तित्वम्, अलौकिकत्वसिद्धेर्भूषणमेव न तु दूषणमिति न्यायात्, तर्कागोचरत्वाच्च (त)। तथा च—

सर्व्वोत्तमतयेति—शान्तिप्रभृतिपञ्चविधरतीनां मध्ये शृङ्गाररतिः सर्व्वोत्तमा। सा च रतिर्द्विविधा—स्वकीया रुक्मिण्यादिनिष्ठा, परकीया व्रजसुन्दरीनिष्ठा च। तयोर्मध्ये परोढ़रमणी श्रीव्रजसुन्दरी तन्निष्ठा रतिः सर्व्वोत्तमेत्यर्थः। भूयसीति—सर्व्ववेदेतिहास-पुराणादीनां सारभूते श्रीभागवते भगवतैवोक्तं 'न पारयेऽहं'मित्यादौ 'या मा भजन् दुर्जरगेहशृङ्खलाः संवृश्च्य' इत्यादि—तत्रैव श्रीउद्धवेनाप्युक्तं 'या दुस्त्यजं स्वजन-मार्य्यपथञ्च हित्वे'त्यादि। उज्ज्वलनीलमणौ श्रीमद्रूपगोस्वामिभिरप्युक्तम्—'अत्रैव परमोत्कर्षः शृङ्गारस्य प्रतिष्ठित' इत्यादौ। महानुभावानां हृदयङ्गमकाव्यादौ परकीया सर्व्वोत्तमोत्तमतया श्रूयत इत्यर्थः।

---

योजितं स्वाभाविकम्—प्राकृत एवेदम्, अप्राकृते तु सकललौकिकसीमामतिक्रम्याने परम-पुरुषे न काऽपि निन्द्यानिन्द्यताचिन्ता। अन्यत्र त्वेष विचारो न निहितः—अत्र न प्रदायमता-विष्कारकल्पनामाकाङ्क्ष्य स निपुणं समाहितः। आभासस्य भेदप्रदर्शनमप्यस्य ग्रन्थकृत आलङ्कारिकमतमात्रस्यानुसरणे निर्बन्धं प्रकटयतितराम्। 'सिद्ध' रसाभासं विनाऽन्ये भेदा एतैरपरालङ्कारिकैस्तथा सम्यं स्वीकृताः। 'सिद्ध'रसाभासस्यात्र वैष्णवमतप्रणालीमनुसृत्य परमरसत्वे स्थापनप्रयासः स्वमतप्रदायमतं प्रति भक्तिकल्पनाकौतुकमुपपादयति। न चैवं कथने स्वमतविरोध औदासीन्यं वा हेतुः, यतश्चमत्कारतम्याधीनकाव्यस्योत्कर्षस्यापना-दाभासस्यापि मुख्यत्वेन विपरिणतिर्भ्रान्त्यन्तदूषणीया। कृत्रिमो रसाभासः निसर्गप्रेमवतां गोपवधूनां गोकुलनन्दनस्य च पक्षे न कल्प्य इति न तस्य तत्रोद्देशे निर्देशः।

(त) परोढ़रमणीरतौ रसो न, अपि तु रसाभास एवेति सम्प्रदायविदामालङ्कारिकाणां राद्धान्तः—'परोढ़ां वर्ज्जयित्वाऽत्र वेश्यामननुरागिणीम्। आलम्बनं नायिकाः स्यु'रिति दर्पणकृदुक्तेः, 'एकत्रैवानुरागश्च तिर्य्यङ्म्लेच्छगतोऽपि च। योषितो बहुसक्तिश्चेद्रसाभास-स्त्रिधा मत' इति प्रतापरुद्रियमतस्थितेश्च। एवमपरनव्याचीनाः सर्व्वे कण्ठाभरण-कृद्भोजाद्याः, रसशास्त्रविशारदा बहवो वदमङ्गभावादयश्च। परोढ़रमणीरतौ रस एव

अत्र रसग्रन्थे काव्यमधिकृत्यैव विचारः (थ)। काव्यं दृश्यं श्रव्यञ्च। दृश्ये शब्दोपात्ता विभावादयोऽभिनायकाश्रया अभिनेयाश्रयाश्च, श्रव्ये केवलं शब्दोपात्ताः। कुतोऽत्रानुकार्य्यगतो रसः? (10) नाप्यनुकर्तृगतः, तेषां

सामाजिकानां रसोत्पत्तौ प्रकारमाह—अभिनायको नटस्तदाश्रयाः—एवं भावहाव-कटाक्षादयो नटानामभिनेयास्तदाश्रयाः। अनुकार्य्येति—अनुकार्य्याणां भक्तानां तदानीं तत्राविद्यमानत्वात् साक्षाद्दर्शनात् पद्यश्रवणाच्च तदानीं कस्य रसो भविष्यतीति पूर्व्वपक्षः। अनुकर्त्ता नटः, नापि तद्गतो रसो भवति। ननु कस्यचिद्भरतवेशधारिणो नटस्य एवं

'नातीव सम्मतत्वाद्भरतमुनेर्मतविरोधाच्च। साहित्यदर्पणीया न स्फुटा प्रक्रिया प्रायः॥' इत्य-यथा भरतमुनेर्मतविरोधमप्राकृतनायकाश्रितरत्यादिविषयं दर्पणोक्तमानौचित्यमचिन्तितमपि भवत्कृतायां नाटकचन्द्रिकायां प्रकटीकुर्वद्भिरनयैकन्तदुपरि कलङ्कपङ्कलेपश्च कृतः, न तत् सर्व्वसहृदयसौजन्यप्रथितनाम्नां वैष्णवानां भवतां श्रेयस्करमिति मन्यामहे। प्राकृतविषयक-परोढरमण्योरसाभासतेत्यालङ्कारिकसम्प्रदायिनां मतं, कौस्तुभकृदपि भवानस्मत्-पक्ष एव। अत्र युक्तियानौचित्यमेव मूले निर्द्दिष्टं, तच्चानौचित्यं सहृदयसामाजिक-व्यवहारतो ज्ञेयम्। उत्तमप्रकृतिप्रायत्वे परोढरमण्योरतिः समाजगर्हिता, तद्वर्णितस्य काव्यनाम्नात्वेनोपादेयतयाऽस्वादने 'अधर्म्मकृतः स्यात् स्वपकस्यापि तद्भवेत्' इति न्यायात् सभ्यानामपि तद्दोषापत्तेर्वैधर्म्मासम्प्रीतिरवश्यम्भावी। यत्तु 'प्राकृते रस एव न स्तो'ति साटोपमाग्रहाविष्कारस्तत् भक्तिशास्त्रसिद्धं, न काव्यतत्त्वोपयोगीति प्रागेव प्रतिपादितवन्तो वयम्। अत्रालङ्कारशास्त्रे काव्यास्वादद्वारसाधनमेव मताविष्करणं साध्यमिति न कटाक्ष-पातः, यदं भक्तिशास्त्रमुक्तिशास्त्रयोर्यथाऽधिकारभेदो भवद्भिराविष्कृतः, एवमपि काव्य-तत्त्वेऽत्र सा प्रदर्शितस्य तत्त्वस्य भेदाविष्करणं मान्याय्यमिति। अतएव रसस्थान ग्रन्थे त्रिधा विभागो ग्रन्थकृतां वैचक्षण्यं द्योतयतितराम्। 'अप्राकृते तु', इत्यारभ्य स्थितस्य 'तत्रा गोपस्त्रीणाञ्च' 'प्रसादस्य महतस्तस्य सम्बन्धेऽभ्यन्तरे परिकीर्त्तिताः कृष्णभक्तैर्निरस्यते'।

(थ) अत्र एव प्रकृतः पन्था आलङ्कारिकनिबन्धे रसतत्त्वनिर्द्धारस्य इति निपुणं स्वाशय-सूचनं स्वसम्प्रदायिनः प्रति ग्रन्थकृत इत्यस्माकं स्थूलतः प्रतिभानम्। 'शास्त्रे काव्यं शास्त्रकाव्यं काव्यशास्त्रञ्च भेदतः। चतुःप्रकारः प्रसरः सतां सारस्वतो मतः॥' इत्याद्यभियुक्त-समदर्शितभेदतः भक्तिसम्प्रदायोपदेशकृतो निबन्धवन्धाम्नायात: रसालम्बनजीवितस्य वाक्य-कदम्बकस्य वैशिष्ट्यमनुमीयते। यद्यप्यत्र ग्रन्थे आदिमकिरणे काव्यप्रयोजनप्रदर्शनावसरे 'यशःप्रभृत्येव फलं नास्य केवलमिष्यते। निर्म्मायकाले श्रीकृष्णगुणलावण्यकेलिषु॥ चिर-स्थाभिनिवेशेन सान्द्रानन्दलयस्तु यः। स एव परमो लाभः स्वादकानन्तयैव सः॥'' इति

(10) 'कुतोऽत्र नानुकार्य्यगतो रस' इति मुद्रितपुस्तके निम्नोक्तः पाठः।

शिक्षाऽभ्यासप्रकटनमात्रकौशलेन स्वादकत्वाभावात्। यदि तु विगलित-वेद्यान्तरत्वमनुकर्तॄणामपि दृश्यते, तदा तेषामपि सामाजिकत्वमेव। अनु-करणन्तु संस्कारवशादेव जीवन्मुक्तानामाहारविहारादिवत्—तेन सामाजिका-नामेव रसः। (द)।

इदमदृष्टधारिणो नटस्य च लोके रसोत्पत्तिः श्रूयते, तत्राह—यदीति। ननु नटस्य सामाजिकस्य रसानुभवकाले विगलितवेद्यान्तरत्वात् कथन्तस्यानुकरणं सम्भवति, तत्राह—संस्कारवशादेवेति।

---

भक्तिसूक्तिरत्यादि काव्यस्य प्रयोजनत्वेनोक्तं तद्व्यतिरिक्तमेव, न सर्वस्य तदैकान्तिकतयैतद-वच्छिन्नतया वा सम्भवतीति स्मरणीयम्। एवमेव धर्ममोक्षशास्त्रप्रतिपादितेऽनुरागिणि वेद्यान्तरावलम्बिनि भावानुबन्धे रसत्वं काव्योपयोगीति नोल्लङ्घ्यं वचः।

(द) रससद्भावे 'प्रमाणसर्वस्वेयात्'—स च सामाजिकानामेव केवलं सम्भवति। अतएव रसो नानुकर्तृगतः, नाप्यनुकार्यगतो वा, परन्तु सहृदयगत एव। निखिलजगत्-स्थितिकृतो धर्मस्येवास्वाद्यास्वादनमेव जीवनं सेवनं भोगो वा, स एवेह परः पदार्थः। तथा च कश्चिदाधुनिकः प्रतीच्यमतत्त्वकोविदः—

[ Cf. in another context 'Religion is neither an act of knowledge nor a rule · *it is a life, it is an experience*; and this life has its source in the deepest part of our being, viz feeling. We cannot proceed through knowledge of religion to religion—this latter is an original fact. —Emile Boutroux in *Science and Religion in Contemporary Philosophy*, translated into English by Jonathan Nield (1909)]

न च रत्यादिवासनां विना नोत्पद्यत इति प्रागेवावोचाम। त एव सामाजिकधुर्या ये कविप्रतिभाप्रसूतभावकाव्यहारेण महास्वादसहोदरस्य रसास्वादस्य विषयिणो जायन्ते। सामाजिकहृदयेष्वेव कविवाक्यानि बहुसंस्काराणि सफलानि च जायन्ते। केचिदाधुनिकाः पाश्चात्त्यकाव्यानुबद्धा आम्नाय इव सामाजिकमन्यत्वमेव कवेः स्वप्रतिभोद्गमे परमं सत्यं मन्यमाना रससुद्घोषयन्ति—

[Cf. Spingarn—(*Creative Criticism*) (*p.43*): —*The identity of genius and taste is the final achievement of modern thought on the subject of art*, and it means that fundamentally in their most significant moment, the creative and the critical instincts are one and the same]

यदमीऽप्यासनगतोऽप्यनुभोग्यतत्तत्तत्तं मन्येऽत्र रसिप्रतीके—तथाहि नटेषु मिथ्यामायिक्यान्यनन्तरमस्तु।

तथाहि नटेनानुक्रियमाणानुकार्य्यचरितदर्शनश्रवणजनितचमत्कारातिशयेन विगलितवेद्यान्तरतया तदेकस्फूर्त्तिमनायेन अद्भुतमिदं रामसीतयो रतिकलाकौशलम्, अद्भुतमिदं रामरावणयोर्युद्धम्, अद्भुतमिदं प्रेतरङ्कादिविचेष्टितम्—इत्यादिना सर्व्वेष्वेव रसेषु—

रसे सारश्चमत्कारो यं विना न रसो रसः ।
तच्चमत्कारसारत्वे सर्व्वत्रैवाद्भुतो रसः ॥ (घ)

इत्यादिदिशा चमत्कारपूर्व्वकमद्भुतत्वातिशयस्फूर्त्तौ सम्यङ्मिथ्या-संशयसादृश्यप्रत्ययातिरिक्तेन प्रत्ययविशेषेण चित्रोत्कीर्णाभिरूपप्रतिमाऽदिष्विव 'इमे रामसीते', 'रामोऽयं सीताशोककर्षः', 'रामरावणावेतौ', 'व्याघ्रोऽयं जनोपप्लावकः', 'श्मशानमिदं शवसमूहान्त्रमांसाद्यशनमत्तोन्मत्त-पिशाचादिहितरसहुल'मिति कृत्रिमेष्वपि तेषु विभावादिष्वकृत्रिमवत् प्रतीयमानेषु स्वगतरसवासनाधीतरजस्तमस्तया (घ) स्वच्छतरेषु तेषां चेतःस्वेक एवानन्दो जायते । न तु तेषामेकस्मिन्नेव चेतसि रत्यादयः सर्व्वे स्थायिभावाः

तदायेनेति—रसोपयोगिविभावादिस्फूर्त्तिमहत्त्वेन क्रियमाणानुकार्य्यचरितदर्शनश्रवण-जनितचमत्कारातिशयेन हेतुना सर्व्वेषु रसेष्वद्भुतातिशयस्फूर्त्तौ सत्यां सम्यङ् निश्चयः । तथाच निश्चयमिथ्याऽदिप्रत्ययातिरिक्तेन केनचिदनिर्व्वचनीयप्रत्ययविशेषेण हेतुना कृत्रिमेष्वपि विभावादिष्वकृत्रिमवत् प्रतीयमानेषु सत्सु सामाजिकानां चेतःस्वेक एवानन्दो जायत इत्यन्वयः । तेषामिति—उत्साहशोकविस्मयादीनां परस्परविरुद्धानां युगपदेकत्र

(घ) रसस्यालौकिकत्वमिदं चमत्कारप्राणत्वञ्चोपलक्ष्य प्राचीनमतोद्धारपुरःसर-मेतदभिहितम् । न तावदत्र 'अद्भुत'शब्देन पारिभाषिकस्तन्नामकरसविशेषस्य ग्रहणं, यतः सर्व्वेष्वेव नवसु रसेषु स एवाद्भुतापरपर्य्यायश्चमत्कारकारी कोऽपि पदार्थो वरीवर्त्ति । रसिकश्चित्र बलात् यदीतास्वादमनोहृत्तिरलौकिकलोपलब्धिसुखमुग्धात्मा सान्द्रानन्दमयत्व-मुपैति । एतदेव रसस्य रसत्वम्, एतावतो च तस्य रस्यता ।

Cf Longinus—*On the Sublime* (Translated by Dr Saintsbury in his *Loci Critici*)—"What is out of the common leads an audience not to persuasion but to ecstasy . . . *I should certainly lay it down that there is nothing so eloquent as real passion standing*, where it ought, in enthusiastic afflatus of inspired madness and filling the phrase with a sort of Delphic rapture"

सन्ति, तेषां परस्परविमर्द्दशानां युगपदेकत्र स्थितेरभावात्। नापि यत्यादेर्येतसि रतेः स्थायित्वं, न च शमिनास्तेषां भयशोकादिसत्ता—अपि तु सर्वरसचमत्-कारग्राहक एक एवास्वादकन्दः कश्चन चेतोधर्म्म इति—अतो भयानक-बीभत्सादेः काव्यनाट्ययोरेव रसता, न लोके (न)। अतएवोक्तम्—

स्थितेरभावात्। दोषान्तरमप्याह—नापीति। यतिनां सन्न्यासिनाञ्चित्ते सर्व्वत्र समदृष्ट्या निर्व्विकारत्वेन भयशोकादिस्थायिभावानामसम्भवात्तेषां रसास्वादो न स्यात्—इति तु परमतानुसारेणैवोक्तम् (न)। वस्तुतस्तु तेषां शमित्वेन चित्तस्य कठोरत्वाद्रसास्वादेऽधिकार एव नास्ति,—यथाचोक्तन्तृतीयस्कन्धे—'तथापि चित्तवड़िशं शनकैर्व्वियुङ्क्ते' इत्यादिना चित्तस्य वड़िशत्वोक्त्या महाकठोरत्वमुक्तम्।

---

स्वगतरसश्चमत्वेति—एतदेव सुखासुखकरत्वं रसस्फूर्त्तिलक्षणी—इत्यन्तु सर्व्वत्र समान एवाऽस्त्वमय इव कश्चनानन्दकन्द इति सारस्वतमारात्मां घन्यमन्यानामनुभूतिः। रसस्फूर्त्तिश्च सा वास्तवाश्रया वासनास्थितत्वात्, न तु गगनकुसुमसत्त्वोपलब्धिप्रवृत्तिवत् कल्पनाकल्पिताऽसत्याश्रयेति वेदितव्यम्—अत्रैव भावनामुक्तिवादिनां भट्टनायकादीनां मताद्व्यक्तिवादिनामभिनवगुप्तपादादीनामालङ्कारिकोपजीव्यानां मतस्य वैलक्षण्यम्। एतामेव रसस्फूर्त्तिमभिलक्ष्य श्रीवाग्देवताऽवतारस्य मम्मटभट्टस्य रसस्वरूपनिरूपणे माधुरीमयी सन्दर्भसूक्तिः—'पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्व्वाङ्गीनमिवालिङ्गन्नन्यत् सर्व्वमिव तिरोदधदि'-त्यादि। इदानीन्तनानुभूतिसंवेद्याऽतीतानुभवप्रत्यभिज्ञास्मृतिजड़िता वा स्वगतरसवासना-ऽभुनिकैरपि प्राच्यकोविदैः सामाजिकसंस्कारोद्बोधकनाम्ना स्वीक्रियते समर्थ्यते च। ' (Cf —Impressiveness consists in greater intensity of present feeling and in taking a strong and permanent hold of the memory —Bain —*Rhetoric and Composition* Part I p 258,

, (न) रतिहासशमादीनां लोकेऽनुभूतानां स्वत एवानन्दः सम्भविता, काव्ये नाट्ये च निबद्धानां तेषामानन्दात्मकत्वमानन्दोद्बोधकत्वञ्च वर्द्धेततराम्। भयानकबीभत्सादितो लोके वैरस्यं विमुखीभावश्च प्रायः सम्पद्यते—तथाहि स तावदल्पमेधो मानवशङ्कुः यः सर्व्वदमनो भरत इव मृगेन्द्रपोतेन चिक्रीडिषुः—'जिंभ रे सिंहशावक। जिंभ दंताइं दे गणइस्सं' इत्यभिदधन्तरानन्दं विन्दते अत्यल्पास्तु योगिसिद्धसाध्यगणात्मकास्ते ये ग्रेलङ्कसङ्के श्मशानस्थलेऽमन्दमानन्दसन्दोहमुपभुञ्जते। काव्ये नाट्ये च तेभ्य एव भावेभ्य आनन्दोत्पत्तिरिति न किमपि चित्रम्। पुरःस्थात् मर्मसन्नाहवतो रौद्रभयमेव जायते, चित्रार्पितात्मात्ततसादानन्द—इति विश्वजनीनाऽनुभूतिरेवात्र निदर्शनम्। यत्तु 'अष्टौ नाट्ये रसा' इति तदुपलक्षणं, काव्येऽपि नाट्यायमाने ते—उभयत्रापि नवमः शान्ताख्य

'अष्टौ नाट्ये रसाः स्मृताः ॥' Kavyaprakasa—*under* Ullasa V.

नाट्य एवाष्टौ, लोके तु शृङ्गारादीनां कियतामेव, पूर्व्वोक्तरसलक्षणा-श्रयत्वात् ।

अथ नाट्यरसानां भेदेषु शृङ्गारत्वादित्वेन समुचितेऽपि प्राङ्निर्द्देशे सविशेषवर्णनीयत्वात्, अलौकिकत्वेनैव प्रतिपादनीयत्वाच्च पश्चादेव निरूपणं करिष्यते । सम्प्रति वीरक्रमेणाह—तत्र च प्राकृताप्राकृतत्वेन स्थापितेऽपि भेदेऽप्राकृतमेवोदाहरिष्यामः (प) ।

अप्राकृतोऽपि द्विविधः प्रत्यालम्बनभेदतः ।
सजातीयं विजातीयं प्रत्यालम्बनमिष्यते ॥ ७२का

तत्र विजातीयालम्बनोऽप्राकृतवीरो यथा—

गुणं कर्णाकृष्टं करकिसलयं तूणशिखरे
धनुश्चक्रीभूतं निपतदिषुवृन्दं तत इतः ।

अथेति—यद्यपि शृङ्गाररसस्य परमसुखत्वेनादौ तस्यैव निर्द्देशः समुचित, तथापि तस्याङ्गानामतिबाहुल्येन पश्चान्निरूपणं भविष्यति। सम्प्रति सूचीकटाहन्यायेनादौ वीरादिरसवर्णनमेवाह—तत्र चेति ।

गुणमिति—जरासन्धस्य युद्धे देवसमूहे श्रीकृष्णस्य युद्धलाघवं पश्यन्ति सति श्रीकृष्णस्य गुणवीर्य्यञ्जयति। युद्धलाघवमेवाह (११)—यदा देवानां गुणे दृष्टिस्तदा कर्णनिकटे सर्व्वदा गुणं पश्यन्ति। यदा तु दक्षिणे करे दृष्टिस्तदा सर्व्वदैव बाणग्रहणार्थं तूणे कर-किसलयम्पश्यन्ति। यदा तु धनुषि दृष्टिस्तदा सर्व्वदैवेतस्ततो निपतितान् बाणसमूहान् पश्यन्ति। यदा विपक्षसमूहे दृष्टिस्तदा सर्व्वदैव तान् भूमौ निपतितान् पश्यन्ति।

इति तु दर्शितमेवास्माभिः। 'वस्तुतस्तु तेषां शान्तित्वेनेत्यादि' टीकायां यच्चक्रवर्त्तिपरस्य-रस्तं तत् शान्तयोगतो भक्तियोगस्य श्रेयस्त्वप्रदर्शनाय—निर्व्विकल्पध्यानसमाधिमाद्यधाना परमानन्दं नास्वादयन्तीति तु तत्त्वतो रिक्तं वचः ।

(प) अप्राकृतमेवोदाहरिष्याम इति—सर्व्वेषां लक्ष्याणामत्र श्रीकृष्णचरितनिष्ठत्वात्, न तु तावत् 'प्राकृते रसो नास्ती'ति हेतोः। तच्च 'प्राकृताप्राकृतत्वेन स्थापितेऽपि भेदे' इति प्रतीकात् सुस्पष्टमेव ।

(११) एव (ग) (क) पुस्तकयो पाठः। "सर्व्वदैव बाणायेपार्थं गुण कर्णाकृष्टं पश्यन्ति। यदा तूणे दृष्टिस्तदे"त्यादि पाठ (क) पुस्तके, "यदा करकिसलये दृष्टिस्तदे"त्यादि (ख) पुस्तके, (क) पुस्तकेऽत्र-मध्योऽशतः पतित ।

रिपून् भूमौ सुप्तान् कलयति समं देवनिकरे
जरासन्धस्याजौ जयति भुजवीर्य्यं मुरभिदः ॥ १

अत्र प्रकृते उत्साहः स्थायी—स च द्विनिष्ठः । आलम्बनविभावो जरासन्धस्तस्य च कृष्णः । उद्दीपनमन्योन्यशौटीर्य्यादि । अनुभावो बाणवर्षणे हस्तलाघवम् । व्यभिचारी गर्व्वौग्रताऽमर्षचपलताऽऽदिः । एतैः परिपुष्टः स्थायी रसतां प्राप्तः । स चानुकार्य्ये भगवति प्रकृते परोक्षः, काव्यश्रवणात् सामाजिके प्रत्यक्ष इति सर्व्वत्रोन्नेयम् । सजातीयालम्बनस्तूह्यः । कैश्चित् सखिभिः सह युद्धमुदाह्रियते—तत्तु लीलाविशेष इति प्रकृते न लिख्यते (क) ।

एष च युद्धदानदयाधर्म्मपूर्व्वत्वाच्चतुर्द्धा । सर्व्वत्रोत्साहः स्थायी । ऊह्यान्युदाहरणानि ।

एवञ्च हस्तस्यातिलाघवात् सर्व्वाः क्रियाः सर्व्वैरेवालातचक्रवत् पश्यन्तीति भावः । तस्य जरासन्धस्य विजातीयालम्बनः श्रीकृष्णः । प्रकृते, न तु नटवत् कृत्रिमे । एवम्भूते भगवति स एव इदानीन्तनलीलानां लीलाश्रयाणाञ्च सर्व्वेषामप्राकट्येन परोक्षः, सामाजिकानान्तु साक्षादाह्लादमयभूतस्य स्थायिनोऽचिन्त्या शक्तिरीदृशी याऽप्रकटामपि तत्तल्लीलां काव्यनाटकगतां साक्षात्कारत्वेन प्रकाशयति—अतस्तेषां स रसः प्रत्यक्षरूपः । सजातीयालम्बनो महादेवादिः । सखिभिः श्रीदामादिभिः सजातीयालम्बनैः सह श्रीकृष्णस्य युद्धमुदाह्रियते । लीलाविशेष इति—जरासन्धस्य यथा वैरक्रोधादिजन्ययुद्धतत्परत्वम् उत्साहः स्थायी तथा श्रीदामादीनां न, किन्तु कौतुकविशेष इत्यर्थः ।

एष चेति—युद्धवीर दानवीर दयावीर धर्म्मवीरा इति चतुर्द्धैव रसो भवतीत्यर्थः ।

---

(क) कश्चिदिति—वैष्णवालङ्कारिकैरिति शेषः । वस्तुतस्तु सखिभिः सह युद्धे न तावत्तत्र विजयादिकर्म्मणि तात्त्विकं किमपि तात्पर्य्यम्, यतो तस्यागमनमेव परम— श्रीकृष्णस्य निर्लिप्तमेव सख्यं लीलाविलसितमिति चेत्—दार्शनिकसुलभप्रौढोक्तिरियं, न च पद्यः रसस्यैकध्यमेव प्रमापयति, न तदभावकमर्थान्तरं, परं भेदश्चेत् कर्त्तव्यो रसानां तदा सखिभिः सह कलहयुद्धस्य वीररसमध्येऽन्तर्भावो न युज्यते इति । एषु रसानां प्रत्यय-प्रसङ्गे कारिकासन्दर्भव्यक्तेर्वर्णसत्यदैवतानुभावादीनि तत्त्वानि द्रष्टव्य रसार्णवसुधाकरादितो लभ्यानि । अत्र युद्धवीरस्यैवोदाहरणोपन्यासः—इतरेषां सकलसुचरितनिरूपायमाणे श्रीकृष्णे तत्त्वे सम्भवेऽपि न वैशद्येनेह प्रदर्शनम् । दानवीरो जामदग्न्यः, दयावीरो नागानन्दनायको जीमूतवाहनः धर्म्मवीरो युधिष्ठिर इत्यन्ये—तत्तद्विषयकाण्युदाहरणानि तेष्वेव मोघयत्नेन दर्शितानि ।

अथ करुणः—

दौर्गत्यायां मधुविजयिनो हा कथं द्वारवत्या-
मन्यायोऽस्यामयमुदभवद्धन्त निष्कण्टकायाम्।
जातं जातं सुतमुपहरत्येव मेऽकालमृत्युः
को मां त्राता हरिहरि हता हा हता हा हताः स्मः॥ २

अत्र शोकः स्थायी। एष एकनिष्ठः। पुत्रनाश आलम्बनम्। पुत्रगतममताद्युद्दीपनम्। अनुभावः शिरस्ताडनादि। व्यभिचारी विषाददैन्यग्लान्यादिः। अयन्तु सामाजिकगत एव, नानुकार्य्यगतः परोक्षोऽपि। अयं सामाजिकगतोऽप्यप्राकृत', लक्ष्याश्रयत्वात्।

अथाद्भुतः—

आलोकः सखि! लोकलोचनमुदामुद्रेकमुद्भावयन्
सोमस्तोमनिदाघधामनिवहप्रद्योतसद्योहरः।
मेघे माधवने मयावपि द्रुणानिर्व्याहको नीलिमा
सामानाधिकरण्यमत्र किमहो चित्रं तमस्तेजसोः॥ ३

अत्र विस्मयः स्थायी। एष एकनिष्ठः। आलम्बनं श्रीकृष्णः। उद्दीपनं तल्लावण्यादि। अनुभावो रोमाञ्चादिः। व्यभिचारी आवेगमतिचपलताऽदिः। अयं परोक्षोऽनुकार्य्यगतः, प्रत्यक्षः सामाजिकगत'। अयमप्राकृत एव (अ)।

यस्यां द्वारवत्यामयमन्याय उदभवत्। अन्यायमेवाह—जातमिति। नानुकार्य्यगत इति—पुत्रमरणजन्योत्कटदुःखमानन्दरूपस्य रसस्याविर्भावे प्रतिबन्धकमिति भावः।

आलोक इति—हे सखि! विरुद्धयोरपि तमस्तेजसोः सामानाधिकरण्यं यथा एकस्थ एव वर्त्तते इत्यहो चमत्कारः। श्रीकृष्णे तयोः सामानाधिकरण्यमाह—कृष्णे वर्त्तमानो आलोकः प्रकाशः स लोकलोचनानामानन्दोद्रेकमुद्भावयन् सन् सोमस्तोमश्चन्द्रसमूहः निदाघधामनिवहः सूर्य्यसमूहस्तयोः प्रद्योतानां प्रकाशानां सद्योहर्त्ता। 'आलोको दर्शनोद्द्योता'विति नानार्थः।

---

(अ) अत्र प्रकृते विरुद्धधर्म्मयोरेकत्र स्थितेरेव विस्मयः—स चालौकिकचमत्कारमयः, अप्राकृतत्वात्तदङ्गताश्रयश्च। 'लोकलोचनमुदा'मिति बहुत्वोक्तेस्तदन्तर्भावितसर्वजनानामखिलानामेवानन्ददायकत्वं, 'स्तोम' निवह'पदाभ्यां तस्यानुपमत्वञ्च सूचितम्। नीलिमप्रघर्षणेन तद्गतश्यामवर्णस्य लावण्यललितता सूचिता। नामस्यन एवैतद्वैचस्याच्छादकता

अथ हासः—

उन्मत्ताभिर्वसन्तोत्सवरभसमदैर्गोदुहां कन्यकाभिः
घोटैः सिन्दूरचन्द्रागुरुमलयरुहां हा धिगन्धीकृतोऽस्मि ।
जाड्यं गन्धाम्बुसेकैरजनि तत इतो धावितुं नास्मि शक्तो
व्यापद्येऽहं वयस्य ! प्रियसखमव मां मास्त्विह ब्रह्महत्या ॥ ४

अत्र भगवत्सखो विदूषको ब्राह्मणवटुर्मधुमङ्गलो वक्ता । हासः स्थायी । एष वञ्चितः । आलम्बनं वसन्तोत्सवः । उद्दीपनं विदूषकस्य वैक्लव्यम् । अनुभावो नयनस्फारताऽऽदिः । व्यभिचारी श्रममदचपलताग्लान्यादिः ।

उन्मत्तेति—वसन्तोत्सवजन्यहर्षमदैः करणैरुन्मत्ताभिर्गोपीभिर्मलयरुहां चन्दनानां घोटैश्चूर्णैरन्धीकृतोऽस्मि । तथा जलसेकैर्मम जाड्यमप्यजनि, अतः पलायितुमपि न शक्तोऽस्मि । हे वयस्य ! कृष्ण ! अहं व्यापद्ये, म्रिये, अतो मामव रक्ष ।

---

वैष्णवकविसम्प्रदायवर्णिता—तस्याश्चात्र रूपनिष्ठवर्णमाधुर्यस्य प्रकटनं, यथौगौरवं श्रीकृष्णचैतन्यविग्रहे 'कृष्णवर्णं त्विषाऽकृष्ण'मित्यादिना सूचिते श्रीकृष्णचैतन्ये च सुमहदन्तरं इति साधकधनानामुपासकानामनुभवमिह, वैष्णवकवीनां परा मोहोपनिषच्च तद्रूपजीविनीति सर्वमवदातम् । "नवजलधरवर्णं चम्पकोद्भासिकर्णं विकसितनलिनास्यं विस्फुरन्मन्दहास्यम् । कनकरुचिदुकूलं चारुबर्हावचूलं कमपि निखिलसारं नौमि गोपीकुमारम् ॥" इति मुकुन्दमुक्तावल्यामस्यैव नवजलधरवर्णोऽपीतघटीदुकूलधारस्य यथास्तुत्यवलम्बिन्याराधना । 'अंभोजाभिनवामञ्जुलमधरं मन्दोन्नतभ्रूलतं किञ्चित्कुञ्चितकोमलाधरपुटं साचिप्रसारेक्षणम् । आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा मूले कल्पतरोस्त्रिभङ्गललितं जाने जगन्मोहनम् ॥' 'कस्तूरीतिलकं ललाटफलके वक्षःस्थले कौस्तुभं नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम् । सर्वाङ्गे हरिचन्दनञ्च कलयन् कण्ठे च मुक्तावलीं गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः ॥' इति श्रीलघुकर्णामृतादावलौकिकस्यापि तस्यैव रूपप्रकर्षस्य लौकिकवत् प्रत्याय्यमानत्वम् । 'अमिया माथारे मिथान करिया साधिय मनेरि माथा । मरिया हइब श्रीनन्दनन्दन तोमारे करिब राधा ॥' 'ढल ढल काँचा अङ्गेर लावनी अवनी बहिया याय ॥' इत्यादि गौडीयवैष्णवकवीनामनुपद्मिते प्रतिभाऽऽगतहारिणो रूपवर्णनोद्भटस्य माधुर्यमाहात्म्याविष्कारस्य निदर्शनोऽस्य नः कृतिनयनतारोचनि । रूपमय्यापुनरवक्रिणत्वेषु चार्वाक्षिण भगवत्प्रणाऽनुगृहीतमचिद्रूपमपि जगदनुकरणकरूपस्य विषयस्य ग्रहाराधना उपभोग्योपभोक्तृविरहमन्त्रभेदनः—

Into the Elysian fields of thought enters no satisfaction but brings with it youth and strength and ardour ; nor is there a thing in this world

एष त्रिविधः—स्मितं हासः प्रहासश्चेति (भ) ।

अधरोष्ठस्फारतया श्लक्ष्णयोरेव विस्फुरत् ।
अलक्षितद्विजं धीरा उत्तमानां स्मितं विदुः ॥
विकसद्दशनद्योतो गण्डाभोगे प्रफुल्लता ।
किञ्चित्कलः कण्ठरवो यत्र हासः स मध्यमः ॥
सघर्म्मः साश्रुताम्राक्षः स्फुटघोरकटुस्वनः ।
व्याप्ताननो व्यक्तदन्तः प्रहासो ग्राम्य उच्यते ॥ ७४का

अथ भयानकः—

दंष्ट्राकोटिकठोरकूटकटुना ब्रह्माण्डभाण्डस्थितं
सर्व्वं चर्व्वयसीव हन्त वदनेनोद्गीर्णपूर्णार्चिषा ।
जिह्वाग्रेण समग्रमुग्रमहसा लेलिह्यसे रोदसी
त्रस्तं मामिह पाहि पाहि भगवन् पार्थोऽप्यपार्थोऽभवम् (म) ॥५

दंष्ट्रेति—वदनेन कथम्भूतेन ? दंष्ट्रायाः कोटिभिरग्रभागैः कारणैः कठोरात्कूटादपि कटुना । रोदसी द्यावापृथिव्यौ जिह्वया लेलिह्यसे । अतस्त्वं मां पाहि । पार्थोऽप्यहम् अपार्थो व्यर्थोऽभवम् अनुकार्य्योऽर्ज्जुनोऽपि । आश्रयानुभवेन कारणेन सकरुणस्य भयं विना नानन्दोत्पत्तिः । यदि धैर्य्यं सति आश्रयेऽपि नैवानन्दस्तदोत्साह एव स्थायी ।

---

on which the mind thrives more readily than *the ecstasy, nay the debauch, of eagerness, comprehension and wonder* The Buried Temple of Maeterlinck translated by A Sutro

(भ) 'भोग्यार्थानतिवेषाणां क्रियायाश्च विकारतः । कौतुकादेश्च परस्थानामेषामनुहासेरिति । विकारश्चेतसो हास' इति हासलक्षणं रसार्णवसुधाकरे । द्विविधश्चायम्—'आत्मस्थः परस्थश्च । यदा स्वयं हसति तदाऽऽत्मस्थः, यदा परं हासयति तदा परस्थः ।' इति भरतीये नाट्यशास्त्रे । एष चाप्राकृतनिष्ठ उत्तमपात्रविजृम्भितो वा सुतरां पोषमेति । मुनीन्द्रोऽप्येवमाह—'स्त्रीनीचप्रकृतावेष भूयिष्ठं दृश्यते रसः ।' मुनीन्द्रादीनां मतेऽस्य षड्भेदा विज्ञेयाः, ते नामतो लक्षणतश्च नाट्यशास्त्रादिग्रन्थाकरेष्वेव द्रष्टव्याः । अप्राकृताश्रितस्यास्य उत्तममध्यमाधमप्रकृतिभेदेन वैरूप्यमपि तत्र दर्शितम् । अप्राकृतनिष्ठस्य हासस्य दिङ्मात्रमुदाहरणं शार्ङ्गधरपद्धत्यामुद्धृतोऽयोदर्शितः श्लोक—'भोजनं प्राप्य दुर्बुद्धे मा प्राणेषु दयां कुरु । दुर्लभानि परान्नानि प्राणा जन्मनि जन्मनि ॥'

(म) विश्वरूपदर्शनत्रस्तस्यार्ज्जुनस्य कातरोक्तिरियम्—तथा च श्रीमद्भगवद्गीतायाम्—

अत्रार्जुनस्य भयं स्थायि। स चैकनिष्ठः। आलम्बनं विश्वरूपप्रदर्शकः श्रीकृष्णः। उद्दीपनन्तु तद्दंष्ट्रादि। अनुभावः 'पाहि पाही'ति-कातर्य्यम्। व्यभिचारी 'अपार्थोऽभव'मिति दैन्यम्। एवं च कृष्णालम्बनत्वात् सामग्री-सान्निध्येनानुकार्य्येऽपि रसतां प्राक् प्राप्त एव। भयेऽपि कृष्णस्फूर्त्तेस्तत्-सम्बन्धादानन्द एवेत्यप्राकृत एव। न तु मालत्यादौ शार्द्दूलाद्यालम्बनेन मकरन्दस्य भयं विनाऽनन्दः। सति शौर्य्ये उत्साह एव स्थायी भवति। तेन कदाचिदानन्दो जायते, न भयतः। तेन प्राकृते न रसता (घ)।

अथ वीभत्सः—

दैत्येन्द्राणां मथितवपुषामन्त्रमेदोऽस्थिमज्जा-
मांसासृक्कल्कखपुटपटलीस्वादमोदप्रमत्ताः।
कौमोदक्या मधुविजयिनः कीर्त्तिमुत्कीर्त्तयन्तः
सार्द्धं गृध्रैर्विदधति मुदं प्रेतरक्षःपिशाचाः॥ ६

कौमोदक्या गदया मथितवपुषां दैत्येन्द्राणाम्। कल्क 'गाँद' इति प्रसिद्धः, खपुटं नाडी-ग्रन्थिविशेषः—तेषां पटलीनां समूहानामास्वादेनालीनो यो मोदस्तेन प्रमत्ताः प्रेतरक्षा मुदं विदधति।

---

'लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः। तेजोभिरापूर्य्य जगत् समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो॥' 'दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि। दिशो न जाने न लभे च शर्म्म प्रसीद देवेश जगन्निवास॥' इति। प्राकृताश्रितो भयानकरसः प्रायः स्त्रीनीचप्रकृतिः, परमप्राकृताश्रिते तस्मिन् यथेह ऊर्ज्जस्विनः सव्यसाचिनस्तस्यापि भीतिजनने न किमप्यशोभनम्। लोकभयहृतः कालाद्भीतिर्न कदापि कस्यापि गर्हणीयम्।

(घ) न रसता—किमभिप्रायमेतदभिधानमिति पृच्छायां वयं ब्रूमः—यदत्र प्राकृतामयिकि भयानकरसे रसता न तावदपह्नूयते कौस्तुभकृद्भिः, परं प्राकृतेऽनुकार्य्ये सञ्चारिभयेनानन्दस्य बाधात् रसस्यानन्दमयत्वात् न रससत्ता सम्भवति। उभयत्रापि सामाजिकानामानन्दो-दोधानद्योपलब्धिरिति तु नान्यथ्यमिति प्रागेव दर्शितमस्माभिः। 'भयानकवीभत्सादेः काव्य-नाट्ययोरेव रसते'ति (१९८ पृष्ठायाम्) ग्रन्थकृदुक्तत्वादेतत् सुप्रतीतमपि टीकाकृता मतनिर्णयप्रागल्भ्यप्रकटनाय पुनरुल्लिख्यते। सर्व्वेषां रसानामप्राकृताधिकारित्वकथने न काऽपि हानिः—यतो निखिलरसमूर्त्तिरमन्दस्फूर्त्तिः स्वानन्दरसमयः श्रीकृष्ण इत्यनेकमयं सर्व्वेषां, परं तेषां प्राकृताश्रयत्वनिराशे हानिरेव गाढं स्यात्। 'यदभिहितं रघोरामादीनां रौद्रो रसः, किमन्येषां नास्ति? उच्यते। अस्त्यन्येषामपि--किन्त्वधिकारोऽत्र गृह्यते, ते हि

अत्र देवासुरसंग्रामावसानमालोकयतां व्योमचारिणां जुगुप्सा स्थायी। स चैकनिष्ठः। शवशरीराद्यालम्बनम्। प्रेतरङ्गाद्युद्दीपनम्। अनुभावो मुखवैकृत्यादिः। व्यभिचारी ग्लानिदैन्यादिः। एतैः परिपुष्टा जुगुप्सा जुगुप्सैव यद्यपि तथापि भगवतः क्षतिरियमिति भगवत्स्मरणाद्देवानन्दः। प्राकृते नटानन्दः, अपि तु नटव्यापारदर्शनात् सामाजिकानामेव तत्र रसः।

यथा वा—

द्रुतैव करुणार्द्रया सहचरान् समुज्जीवय-
न्नघस्य जठरं गतो गरलजातवेदोऽप्यसून्।
तदन्त्रधमनीवसारुधिरमज्जलालादिभिः
प्लुतोऽप्यनवलिप्तवच्छुचिरुचिः स जीयाद्धरिः॥ ७

अत्र भगवत एवानन्दत्वात्तदन्त्रादिदर्शनेनाप्यानन्द एव लीलावतां, तथात्वात् भक्तानाञ्च तस्य स्फूर्त्तिरेव।

अथ रौद्रः—

स्वर्गेणापि न वेद्य एव भवता मृत्योर्मुखं गच्छता
किं दोर्दण्डनचण्डिमैव भवते विज्ञापनीयो मया।
येनाखण्डलगोण्डखण्डनकृता गेण्डूकृतोऽयं गिरिः
किं रे कष्टमरिष्ट दुष्ट तनुषे गोष्ठस्य नस्तिष्ठ रे (२)॥ ८

द्रुतैवेति—गरलरूपेण जातवेदसाऽग्निना असून् विगतप्राणान् मूर्च्छितानित्यर्थः, तेषां पार्षदत्वेन नित्यत्वान्न वास्तवप्राणत्यागः सम्भवतीति। प्लुतोऽपि व्याप्तोऽप्यनवलिप्त इव शुचिः शुभ्रा रुचिः कान्तिर्यस्य सः 'सुन्दरे किमसुन्दर'मित्युक्तेः—उक्तञ्च दशमे—'मन्दान्धतामरुचिरं मिति'। नवेति—भगवत आनन्दरूपत्वाल्लीलावतां पार्षदानामपि तथात्वादानन्दरूपत्वात्। अत्र ह्यत्रानन्दोद्रेकस्याधिक्येनान्त्रादिदर्शनेनानन्दोत्पत्तिरेव—

---

स्वभावत एव रौद्राः (नाट्यशास्त्रे षष्ठाध्याये) इतिवचनाद्दुःशास्त्रेऽपि मतपरिणामः सुधीकः, सुसहस्वेत्यलं पिष्टपेषणेन।

(२) अरिष्टवध, श्रीमद्भागवतसंहितोदितः अन्यकृतकृते आनन्दवृन्दावने पञ्चदशे स्तबके लक्षणीयः। स्वाधिदैवतादमद्भुतकर्मक्रियात्मकत्वादस्य रौद्र इति संज्ञेति भरतः। क्रोधः स्थायिभावो रक्षोदानवोद्धतमनुष्यप्रकृतिकः संग्रामहेतुकश्चायं रसः। रक्ताक्षनेत्रता भ्रुकुटीकरण दन्तौष्ठपीडन गण्डस्फुरण हस्ताग्रनिष्पेषादिभिरनुभावैरस्य प्रायशः सामाजिक

अत्र कोपः स्थायी । एष एकनिष्ठ उभयनिष्ठश्च—अत्र तूभयनिष्ठ एव । आलम्बनमन्योन्यम् । उद्दीपनमन्योन्यविक्रमः । अनुभावो वागाडम्बर्यादिः । व्यभिचारी गर्वादिः । एवं स्फुटोऽयं रसः—स च भगवति परोक्षः, सामाजिके प्रत्यक्षः । आद्ये विजातीयालम्बनोऽप्राकृतः ; द्वितीयेऽप्राकृत एव ।

अथ शान्तः—

वयो जीर्णं जाता धिक् तदपि न हि जीर्णो मदभरः
श्रयं चर्माङ्गेभ्यस्तदपि न हि रागः स्मय इव ।
रदाः शीर्णास्तदपि न हि मोहः, कथमयं
जनः कंसारातेश्चरणकमलाय स्पृहयतु (ल) ॥ ८

न तु प्राकृतानामिव दुःखं, तेषां दुःखरूपत्वेन भयानकबीभत्सवृत्तिवस्तुदर्शने दुःखमेवोत्पद्यत इति विशेषो ज्ञेयः ।

स्पर्शेनेति—मत्कर्तृकस्पर्शेनापि हेतुना मृत्योर्मुखं गच्छता भवताऽहं न वेद्यः न ज्ञातुं शक्य एव—तथा च मद्विषयकज्ञानमेव तव न भविष्यति, किं दोश्चण्डिमा मया भवते विज्ञापनीय इति भावः । इन्द्रपराक्रमखण्डनकृता येन दोर्दण्डेनायं गोवर्धनगिरिरुद्धृतः । आद्ये असुरमात्रनिष्ठे कोपे विजातीयालम्बनो भगवान् । द्वितीये उभयनिष्ठे, तदा सुतरां भगवानप्राकृत एव ।

---

प्रत्यक्षता । विजातीयालम्बनोऽप्राकृतः—विजातीयोऽरिरालम्बनं यस्य स भगवानप्राकृतः । अत्र चतुर्थचरणे 'ट'वर्गयुक्तवर्णानां निवेशनेन रसानुगुण्यं प्रकटम् ।

(ल) वयो जीर्णमिति—एतमप्याचार्यशङ्करो समग्रे मोहमुद्गरे विधित्स्य 'अङ्गं गलितं पलितं मुण्डं दन्तविहीनं जातं तुण्डमिति' पञ्झटिकायां निर्वेदमेवोपदिदेश । तदुक्त्या समाधिमध्येकान्ततः चात्र विश्रमति । आह च भगवान् भरतः—'योगीव ध्यानरतो भवति हि निर्वेदवान् पुरुषः ।' भरतीये तु निर्वेदस्य व्यभिचारिभावरूपेण परिग्रहः, न तु स्थायिभावतया—तेन तन्मतेऽष्टावेव रसाः । मतचेत्तु प्रागेवालोचितमस्माभिः—यथार्थदीपमभावयुक्तिषु इत्यमपाला दृश्ये—'युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः । रसतामेति तदस्मिन् सञ्चार्यादेः स्थितिश्च न विरुद्धा ॥' इति । अत एव ध्वनिकारादिमतानुसारिभिः शमस्य स्थायित्वमुक्त्वा शान्तरसस्य प्राधान्यज्ञापनाय अचेष्टि । एवमभिदधुः पाल्ङ्कारिकचूडामणयो लोचनकृतोऽभिनवगुप्तपादाः—"मोक्षफलत्वेन चायं परमपुरुषार्थनिष्ठत्वात् सर्वरसेभ्यः प्रधानतमः स चायं शान्तरसः" इति । भर्तृहरिकृतवैराग्यप्रसङ्गे भक्तचन्द्रचिन्तामणिकृत्स्ने च रसस्यास्य बहुलः प्रसारस्तत्रैव स सहृदयास्वादनीयः शिवमोपच सहृदयैः ।

यत्र निर्व्वेदः स्थायी । स चैकनिष्ठः । आलम्बनं संसारदुःखम् । उद्दीपनं पुण्यतीर्थादि । अनुभावो विषयाद्यभिलाषः । व्यभिचारी मतिधृतिहृष्टादिः । एष रसोऽनुकार्य्ये परोक्षः, सामाजिके प्रत्यक्षः । चमत्कारी चायम् ।

तथा च—

"यच्च कामसुखं लोके यच्च दिव्यसुखं महत् । Mahabharata
तृष्णाक्षयसुखस्यैते नार्हतः षोड़शीं कलाम् ॥"

चमत्कारातिशयेनानन्दातिशयः । अयं श्रीकृष्णभक्त्युपयुक्तो यदि भवति तदाऽप्राकृत एव । यथाऽयं निर्व्वेदो व्यभिचारी सन्नपि शान्तरसे स्थायितां प्राप्य रसतामाप्नोति तथा सैव देवादिविषया रति'र्भाव' इति पारिभाषिकोऽपि भावः (१२) स्थायी सन् तत्तद्विभावादिसामग्रीसमवेतो भूत्वा 'भक्तिरस' इति (च) द्वादश रसा भवन्ति । स पुनर्भक्तिरसः श्रीकृष्णाश्रयो भवन् रत्यादिभिः स्थायिभिर्दशविधो भवति । तदन्यत्रोह्यम् ।

यच्च इति—अङ्गेभ्यः सकाशाच्चर्म्म यथा, तदपि रागः यथा इव श्रयतुल्योऽपि न भवति । केचिच्छान्तस्य रसत्वं न मन्यन्ते, तन्मतं दूषयितुमाह—अयमिति । चमत्कारित्वे हेतुं प्राचीनानां श्लोकमाह—तथा चेति । तृष्णाक्षयसुखरूपचन्द्रस्य षोड़शीमेकां कलामपीति मर्त्यलोकस्यस्वर्गस्थसुखे नार्हतः—तस्माच्चमत्कारत्वं तस्य रसत्वमवश्यमङ्गीकार्य्यं 'रसे सारश्चमत्कार' इत्युक्तेः । द्वादश रसा इति—पूर्व्वमेकादश रसा उक्ताः, अयमेको रसो मिलित्वा द्वादश भवन्तीत्यर्थः । कस्यचिन्मतेऽसौ भक्तिरस एव श्रीकृष्णाश्रयो भवन् स्थायिभेदेन दशविधो भवति, तस्य स्वरूपलक्षणोदाहरणमन्यत्र तस्यैव ग्रन्थे ज्ञेयम् ।

(च) रतिर्भाव इति पारिभाषिकोऽपीति—व्यापकत्वात् 'रति'पदेन प्रीतिस्नेहानां निखिलानां चित्तवृत्तीनां परिग्रहः । पारिभाषिकस्य तस्येत्थमर्थो निर्दिष्टो रसामृतसिन्धौ—'मिथो हरेर्मृगाक्ष्याश्च सम्भोगस्यादिकारणम् । मधुरापरपर्य्याया प्रियताख्योदिता रतिः ॥" 'भाव'पदेन रतिशोकोत्साहक्रोधशमादीनां सर्व्वेषामेव व्यापकत्वात् परिग्रहः, पारिभाषिकात्तस्मात् 'सञ्चारिणः प्रधानानि देवादिविषया रतिः । उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ॥' इत्युक्तलक्षणपदार्थग्रहः । अत्र लक्षणे देवादौ'आदि'पदेन पुत्रादिविषया रतिरपि गृह्यतेति केचित् । रसगङ्गाधरकृद्ध्येवम् । तन्मते वात्सल्यस्य रसत्वेन न पृथग्गणना । परं श्रीकृष्णविषया सा परो रसः—भक्तिरस इति तस्य संज्ञा । एतच्च प्रागेवास्माभी रसस्वरूपसंख्यादालोचनप्रस्तावे सम्यग्विवेचितमिति न पुनरत्रतात्स्तस्याम कृतः ।

(१२) 'पारिभाषिको भाव.' इति (क) (ङ) पुस्तकयोः ।

अथ वात्सल्यम्—

आराद्बालानुकरोपसर्पणपरो जातस्मितं सत्वर-
व्रङ्कारोहमनाप्नुवन् रुदितपाविम्लानचन्द्राननः ।
अभ्यासार्थमुपेक्षितोऽपसरणप्रक्रान्तया सत्वरं
कण्ठेकृतग्र यशोदया न न न नेताश्लिष्टो बालो हरिः ॥ १०

अत्र ममकारः स्थायी । एष एकनिष्ठः । आलम्बनं श्रीकृष्णः, उद्दीपनं तद्गतचङ्क्रमणादि । अनुभावः कण्ठेकृतग्राश्लिष्टनादिः । व्यभिचारी हर्षादिः । एष परोक्षो व्रजेश्वरीनिष्ठः, प्रत्यक्षः सामाजिकनिष्ठः । उभयथैवाऽयमप्राकृतः ।

अथ प्रेमरसः—

प्रेयांस्तेऽहं त्वमपि च मम प्रेयसीति प्रवाद-
स्त्वं मे प्राणा अहमपि तवास्मीति हन्त प्रलापः ।
त्वं मे ते स्यामहमिति च यत्तच्च नो साधु राधे !
व्याहारे नौ न हि समुचितो युष्मदस्मत्प्रयोगः ॥ ११

अत्र चित्तद्रवः स्थायी । स चोभयनिष्ठः । आलम्बनमन्योन्यम् । उद्दीपनमन्योन्यगुणपरिमलः । अनुभावो विशिष्य निर्वचनाभावः । व्यभिचारी मतौत्सुक्यादिः । परोक्षः श्रीकृष्णराधयोः, सामाजिकानां प्रत्यक्षः । प्रेमरसे मर्म्मं रसा अन्तर्भवन्तीतात्र महीयानेव प्रपञ्चः । ग्रन्थगौरवभयाद्दिङ्मात्र

आरादिति—आरान्निकटे बालुकराभ्यां गमनपरो बालः श्रीकृष्णो मातुरङ्कारोहणार्थं अयतन्, यशोदयाऽपि गमनप्रक्रियायामभ्यासार्थं पुत्रानयनाय सम्मुखगमनं विहायापसरणे तस्य पश्चाद्देशगमने प्रक्रान्तयोपचितः श्रीकृष्णो मातुरङ्कारोहमप्राप्य रुदितम्लानमुखः पश्चाद्यशोदया सत्वरं यथा स्यात्तथा कण्ठेकृत्याश्लिष्टः ।

प्रेयांस्तेऽहमिति—श्रीकृष्ण आह—हे राधेऽहन्ते तव प्रेयान्, त्वं मे प्रेयसी त्वं मे प्राणाः, अहमपि तव प्राणा अस्मीति । त्वं मे मम, ते तवाहं स्यामिति च यत् तत् मर्म्मं न साधु, यतो नावायोर्व्याहारे कथाप्रसङ्गे युष्मदस्मत्प्रयोगो न समुचितः—आत्मनोर्द्वि-

दारङ्गीति कथं भवन्ति ते, तदप्यनादरकोपध्यामपूर्वमेवातैव दर्शितम् । स पुनर्भक्तिरसो द्विविधो भवतीति—प्राप्त प्रीति प्रेयो वत्सल मधुराख्यभेदैः पञ्च, स्वार्थं परार्थेति प्रत्येकं द्वौ । अतो दशैव न । आत्मगोप्यम्—श्रीकृष्णोऽभ्यामिप्रश्नोनां विवक्षेत्विति प्रेमः ।

मुक्तम् (13)। केषाञ्चिन्मते श्रीराधाकृष्णयोः शृङ्गार एव रसः (घ)—तन्मतेऽप्येतदुदारणं नासङ्गतम्। शृङ्गारोऽङ्गी प्रेमाऽङ्गम्, अङ्गस्यापि क्वचिदुद्रिक्तता। वयन्तु प्रेमाऽङ्गी, शृङ्गारोऽङ्गमिति विशेषः। तथा च—

उन्मज्जन्ति निमज्जन्ति प्रेम्न्यखण्डरसत्वतः।
सर्वे रसाश्च भावाश्च तरङ्गा इव वारिधौ (ङ) ॥ १२

देहत्व एव तादृशः प्रयोगः सङ्गतो भवति। अत्र तु द्वयमपीतदेहद्वययोरेक एवात्मा—यथैकस्मात् कमलनालाद्वृत्तयं नीलपीतकमलद्वयं, तद्वदिति ज्ञेयम्। उद्रिक्तता—अङ्गिरसापेक्षयाऽङ्गरसस्याधिक्यम्। एतदभिप्रायेण वयमपि शृङ्गारोऽङ्गमिति ब्रूमः।

अखण्डरसत्वतोऽखण्डरसत्वात् सर्वे उन्मज्जन्ति निमज्जन्ति समुद्रे तरङ्गा इव।

(घ) प्रेमरसे चित्तद्रवत्वपर्विशिष्टाया रतेर्बोधस्य व्यापकत्वं शृङ्गाररसात् यथाकथञ्चिदपि बृहत्वात् साधारणात् रतिभावमयत्वमिति केचित्—अपरेस्तु तेनैव मार्गेण प्रेमरसस्य व्याप्तिरधिकेत्यनुमीयते। (If the connotation decreases, the denotation increases and *vice versa*) तन्मते प्रेमाऽङ्गी, शृङ्गारोऽङ्गमिति। वस्तुतस्तु यत्किञ्चिदपि पार्थक्यमुपकल्प्यैतयोः विमानविस्तारः। अत्येव प्राक् सप्तविधगौणरसीनां वीरादारभ्य रौद्रं यावद्दर्शितानामुपन्यासः, पश्चात् शान्त-वात्सल्य-प्रेयो-भक्ति प्रीतीनां पञ्चानां मुख्यरतीनां एषदिङ्दर्शः खमनन्दायमततात्पर्यमञ्चयाय, ग्रन्थकृत्त्वितरालङ्कारिका इव मयैव रसा इति स्वमतं मूर्च्छितवान्—स्वेच्छया लिखितं किञ्चित् किञ्चिदत्र परेच्छया। यत् पूर्वापरसंबन्धं तत् पूर्वमपरं परम्।'—अग्रे श्रीकृष्णस्य सर्वरसात्मकत्वं सूचयितुं रचितः श्लोकोऽपि तदाशयक एव। मधुरेणैव प्रयत्नः—मधुरोपनामकस्य भक्तिरसस्यैव महत्प्रपञ्चत्वं श्रीमद्रूपगोस्वामिनां ग्रन्थे—ग्रन्थावसाने सविनयमुक्तिश्च—'अतलत्वादपारत्वादाप्तोऽसौ दुर्विगाहताम्। स्पृष्टः परं तटस्थेन रसाब्धिर्मधुरो मया।' इति।

(ङ) 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वय'मितिवत् प्रेमरसस्याखण्डत्वमितरेषां खण्डरसत्वाऽंशांशः सूचिता। प्रेमरसे हि भूमस्वरूपस्य भगवतः शक्तिर्निहिता—यदि शृङ्गाररसत इतरेषां रसानां विपर्ययासः सुकरः, कथं न तत्सारभूतात् प्रेम्ण एतत्सम्भवः? अतो नात्र केवलं प्रौढ़िः। मानवहृदये वैरं तथाऽस्तु, घृणा वाऽस्तु, सर्वमेतत् प्रेमप्रशमैकमूलं, प्रेम्णि निलीने हृदये सर्वेषां साधीयान् लय इति नात्साधारणसंवेद्यं तत्त्वम्। प्रेम्णो वारिधिसाम्यं कथञ्चिदुदाहरणद्वाराऽनुमीयते—वैष्णवकुलशेखरजयदेवसुहृदुमापतिधरस्याधोदर्शितः श्लोको रसस्यैकस्याखण्डत्वं निपुणमनुमापयतीत्यस्मात् प्रतिभानम्—'रत्नच्छायाच्छुरितजलधौ मन्दिरे द्वारकाया रुक्मिण्याऽपि प्रबलपुलकोद्भेदमा-

(13) 'दृष्यगौरवतया दिङ्मात्र'मिति मुद्रितपुस्तके, 'दृष्यगौरवं दिङ्मात्र'मिति (क) (ख) पुस्तकयोः, 'ग्रन्थगौरवमपादि'त्यादि (ग) (घ) (च) पुस्तकेषु।

'रसः शृङ्गारनामाऽयं श्यामलः कृष्णदैवतः ।' Rasasudhakara (P)

एवञ्च सर्व्वेषामेव रसानां वर्णा देवताश्च बोद्धव्याः ।

सर्व्वरसात्मकत्वं श्रीकृष्णस्य यथा—

शृङ्गारी राधिकायां, सखिषु सकरुणः स्नेहदग्धेष्वघाद्यैः,-
र्बीभत्सी तस्य गर्भे, व्रजकुलतनयाचेलचौर्य्ये प्रहासी ।
वीरो दैत्येषु, रौद्री कुपितवति सुरासाह्वि, हैयङ्गवीन-
स्तेये भीमान्, विचित्री निजमहसि, शमी दामबन्धे, स जीयात् (च) ॥ १२

अथ शृङ्गारः—

धृते पाणिद्वन्द्वे झटिति झणितं रत्नवलयै-
र्धृते नीवीग्रन्थौ मुखरितममन्दं रसनया ।

शृङ्गारीति—शृङ्गारी शृङ्गाररसविशिष्टः, अघादिभिर्विषदग्धेषु सखिषु करुणरसविशिष्टः, तस्याघासुरस्य गर्भे प्रविष्टः कृष्णो बीभत्सरसविशिष्टः, सुराणामीन्द्रे कुपितवति सति रौद्ररसविशिष्टः, निजतेजसि विस्मयरसवान्,—यदापि दर्पणे यदा स्वकान्तिम्पश्यति तदा तस्य महान् विस्मयो जायत इति भावः, शमी शान्तरसविशिष्टः ।

धृत इति—श्रीकृष्णस्य सम्भोगात्मनो य आनन्दस्तस्य तु प्रतिहतधियो विगतबोधाया

---

भावभूता श्रीराधा । एवमपि रसान्तरविन्यासो सर्व्वरसात्मकत्वेऽपि श्रीकृष्णस्य तस्मिन् मधुररसस्यैव विषयत्वमधिकं सूचितम् । सर्व्वरसकदम्बेति—अस्य नानारसात्मकत्वं तत्तत् नियतालम्बनविभावकत्वमुपजीव्य वर्त्तते । एवमाह रसतरङ्गिण्यां श्रीमन्नारायणभट्टः,—'शान्ते ब्राह्मण एव स्यात् प्रीते दासः प्रकीर्त्तितः । प्रेयसि स्युः सखायो हि यशोदा वत्सले मता । मधुरे राधिका ज्ञेया हास्ये स्यान्मधुमङ्गलः । सखीयूथोऽद्भुते ज्ञेयो वीरे चानूरमो (?) ष्टिकाः । करुणे वत्सवत्सादिर्व्यक्तिलाद्यास्तु रौद्रके । गोवर्द्धनोऽभिमन्युश्च भयानक उदाहृतौ । तपस्विन्यादयो ह्यत्र बीभत्से परिकीर्त्तिताः । अनन्या नियता ज्ञेया आलम्बनविभावकाः ॥' रसानां वर्णदेवतानिर्द्देशो भरतीयादिषु द्रष्टव्यः । 'शृङ्गारे तु नीलमणिः श्यामवर्णो देवते त्वनुभवमात्रिकं तत्त्वम् ।

(च) अत्र नव रसा लक्षिताः—एवमपि रुद्रभट्टीयशृङ्गारतिलकस्यावतरणिकायाम् शृङ्गारी गिरिजानने भकरुणो रत्यां प्रवीरः स्मरे बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्त्या श्रुतत्वाङ्गया । रौद्रो दक्षविमर्द्दने च हसकृन्नग्नः प्रशान्तश्चिरादित्थं सर्व्वरसात्मकः पशुपतिर्भूयात् स वो भूतये ।' इत्यत्र रसा लक्षिताः प्रागुदाहृते 'मल्लानामशनि'रित्यादिश्लोके । ग्रन्थकर्तृकृतानन्दवृन्दावनचम्पूकाव्ये 'शृङ्गारीति' श्लोके उद्दिष्टानां बहूनां वार्त्ताऽनुसन्धेया, येषान्तु श्रीमद्भागवतपुराण एव कथा लभ्यते ।

प्रियायाः स्वानन्दप्रतिहतधियः, किन्त्वपघनो
घनोत्कण्ठं कृष्णं प्रति समतनोत्सज्जनमिव ॥ १४

यथा वा—

मृदुमन्दं लीलाकरकिशलयोत्कम्पमुदयत्-
प्रसूनेषुक्रीडाविभ्रममुदितालिव्रजसुखम् ।
अमन्दीकुर्वाणाङ्किमपि कलकण्ठध्वनिकलां
सिषेवे राधाङ्गं हरिरिव वसन्तानिलमिव ॥ १५

चिरस्य क्षणमात्रनिर्हृतिकरो तस्या मुखं चित्रितं
सद्यः पद्ममभूत्ततः परमहो पूर्णेन्दुरङ्कोज्झितः (14) ।
आनन्दामृतमण्डलम्पुनरभूदिङ्मा ततोऽभूदिद-
न्तत्पश्चाद्यदभूत तदत्र सखे । मत्संविदो गोचरः ॥ १६

अथोऽऽनन्दमूर्च्छितायाः राधाया अपघनो देह एव सम्भोगे घनोत्कण्ठं कृष्णं निवारयितुं सज्जनमिव समतनोत्, तस्यास्तर्जनेऽसामर्थ्येऽपि तत्परिजनरूपो देह एव श्रीकृष्णं तर्जयतीत्युत्प्रेक्षा । वस्तुतस्तु आऽनन्देनैवाङ्गेन वाम्यादिकमपि कर्तुं न प्रभवतीत्युत्प्रेक्षाऽलङ्कारगम्यो वस्तुध्वनिः । तर्जनमेवाह—श्रीकृष्णेन तस्याः पाणिद्वन्द्वे धृते सति रत्नवलयैर्झटिति झणितं, तथा च रत्नवलयानामलङ्कारशब्देनैव वस्तुरूपो देहः श्रीकृष्णं तर्जते ।

यथा वेति—हरी राधाया अङ्गं सिषेवे—यथा 'महाप्रसादान्नं सिषेवे' इत्युक्ते महाप्रसादस्य भोजनमेव सेवनं बुध्यते, तथैवात्राप्यस्य सम्भोग एव सेवेति ज्ञेयम् । अङ्गं कीदृशम् ? वसन्तकालस्यानिलमिव । साधर्म्यमाह—तत्सम्भोगसमये मृदुमन्दं, वसन्तानिलमपि मृदुमन्दं, शिवारणलीलया करकिशलययोरुत्कम्पो यत्र, अनिलपक्षे लीलाकरः कौतुककरः किशलयस्य नवीनपल्लवस्योत्कम्पो यत्र, उदयन्ती प्रसूनेषोः कन्दर्पस्य या क्रीडा तया विभ्रमः, उदितानामालीव्रजानां सखीसमूहानां सुखं यत्र, पक्षेऽलिव्रजानां भ्रमरसमूहानाम् । कण्ठो मधुरास्फुटो 'न ने नि' कण्ठध्वनिस्तस्य कलां पेशलां किमप्यनिर्वचनीयं यथास्यात्तथाऽमन्दीकुर्वाणं सर्वोत्कृष्टं कुर्वाणं, पक्षे कलकण्ठः कोकिलः ।

श्रीराधाविरहेण व्याकुलः श्रीकृष्णः सुबलं प्रत्याह—चिरस्येति । पद्ममभूदिति—पद्मदर्शनस्य ग्लानमहासुखरञ्जकत्वेन तच्चिन्तितं पद्ममभूदित्यर्थः । पश्चाच्चिरदर्शनेन जाता या तस्याः साक्षाद्दर्शनसमुत्कण्ठा तया सा चित्रं चित्तदाहकत्वेन विषमभूत् । तदनन्तरं यदभूत्तत्तु मत्संविदो ज्ञानस्य गोचरो न भवति—तया च विरहपीडया मूर्च्छां प्राप्तेति भावः ।

(14) 'परमहो पुनः सुधांशुर्विनिर्गतः' (क) (ख) पुस्तकयोः पाठः ।

मुग्धां सुधांशुकिरणे जालगते भवनदीपचकिताक्षी ।
पादान्तमेवधिलेखं प्रविशति भवनं निवार्य सख्यालीः (छ) ॥ १७

एतौ पूर्वौ सम्भोगे, परौ विप्रलम्भे । सर्वत्र रतिः स्थायी—स चोभयनिष्ठः, अन्योन्यमालम्बनम्, उद्दीपनमन्योन्यलावण्यादि विजनस्थानादि च, अनुभावः करग्रहणादिः, व्यभिचारी श्रमजडताऽऽदिः । विप्रलम्भे च रतिरेव स्थायी, स चोभयनिष्ठः, विप्रकर्षेऽपि रतेस्तथैव सतःसिद्धत्वात्, आलम्बनं पूर्ववत्, उद्दीपनं विप्रकर्षोऽन्योन्यदुःखानुभवसन्देशचन्दनपवनादिषु, अनुभावश्चित्रलेखादिः । उभयोरेवानन्दधर्मत्वाद्रसत्वम्—आनन्दस्यात्मधर्मत्वादात्मनश्च बहिरिन्द्रियापेक्षित्वमात्रत्वाभावात् स्फूर्तिपर एवानन्दः (ढ) ।

अथ माथुरविरहैव्याप्यकथाकुलाया राधाया गवाक्षद्वारा गृहमध्ये प्रविष्टचन्द्रकिरणाम् दाहकत्वादिमत्त्वेन जानन्त्यास्तस्याश्चेष्टामाह । चन्द्रकिरणस्याग्नित्वेन भ्रान्ता मुग्धा । भ्रमरस्तुतिश्च राधयोक्तं 'मधुप कितवबन्धो' (भागवते १० । ४७।१२) इत्यादि पद्यसुधारसमाश्रुत्वा व्याकुलेन श्रीकृष्णेन तस्याः प्राणरक्षार्थं कापि दग्धपत्री प्रेषितेति ज्ञेयं, जीवनहेतुभूता सा पत्री गृहमध्य आसीत्, तदानयनार्थं सा भवनं प्रविशति । सख्यान्तोः सखीर्निवार्येति—अनेन पत्रानयनार्थं गृहे गत्वा दाहो भवति चेद्भवतु, सखीनां दाहो माऽभूदिति तस्या अभिप्रायः ।

---

(छ) सुधांशुकिरणांशुच्छायाग्नौ विरहिणीं संतापयतीति हि कविसम्प्रदायसमयः । निवार्य सख्यान्तोः—मम प्रेम्णो निदर्शनं फलमहमेव सहिष्ये, कथं मत्प्राणप्रियाः सख्यो मद्येऽनर्थं प्राप्येरन् इति चिन्तया तासां निवारणम्—वस्तुतस्तु तत्रावधिलेखे लिखितस्यावधेर्दर्शनकौतूहलमपि त्वरायां हेतुः—स च लेख इत्थमस्ति इवं प्राणारामः प्रिय एव सततं गोप्यो भवतीति कामिनामाचारः । प्रतिक्षणमनुभूता अप्यपूर्वायमाणा निरवधिमधुरास्तास्ताः प्रेमलीला केवलमस्तः कारिता वा भवेयुरिति ।

(ढ) उभयोरेवेत्यादि—सम्भोगरतावानन्दः स्फूर्तिर्वा बहिरिन्द्रियवृत्तिगोचरः—विप्रलम्भे प्रियप्राप्त्याकाङ्क्षाजनित आनन्द उपलेशो वा वर्तते । तथा च चौरकवेरभिसारिणि पद्ये—'प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा पर्यङ्के सा दिशि दिशि च सा तद्वियोगातुरस्य । हंहो चेतः प्रकृतिरपरा नास्ति ते कापि सा सा सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥' विप्रलम्भे बहिरिन्द्रियजन्यस्पर्शाभावादानन्दो नास्तीति वक्तुं न शक्यते, यत आनन्द आत्मधर्मः—'न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।' स्फूर्तिपर एव—प्रकाशप्रधान एवानन्दः, स च प्रकाशो बहुधा बहुधा भवति । स्फूर्तिस्त्वन्तःकरणधर्मस्त्वं निरवधि परा काष्ठा ।

यथा—

अभिलाषश्चिन्तनञ्च स्मृतिश्च गुणकीर्त्तनम् ।
उद्वेगश्च प्रलापश्चोन्मादश्च व्याधिरष्टमः ।
जड़ता नवमो ज्ञेया मरणं दशमं स्मृतम् (था) ॥ ७६का

विरहस्तु भावी भवन् भूतश्चेति त्रिधा ।
ईर्ष्यामन्योऽत्र मानपरः—स च द्वेधा । (15)

ईर्ष्याप्रणयसम्भूतो द्वेधा मानः प्रकीर्त्तितः ।
अन्यासक्ते प्रियतमे ईर्ष्यामानो भवेत् स्त्रियाः ॥
द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि ।
प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना ॥ ७७ का

तथा च—

नदीनाञ्च वधूनाञ्च भुजगानाञ्च सर्व्वदा ।
प्रेम्णामपि गतिर्व्वक्रा कारणमत्र नेष्यते ॥   Rasasudhakara.

स च मानो द्विधा भवति—एक ईर्ष्यासम्भूतः, द्वितीयः प्रणयसम्भवः। ननु कान्तस्यापराधो माने कारणं, प्रणयकालेऽपराधस्य सम्भावनाऽपि नास्ति, कुतो मानप्रवृत्तिः, तत्राह—द्वयोरिति। कान्ताकान्तयोर्मध्ये प्रमोदेऽपि कारणं विनाऽपि प्रणयमानः स्यात्। प्रेम्णः कुटिलगामित्वे प्राचीनानामुदाहरणमाह—तथा चेति।

विभागश्चाप्यस्मैव कृत्यः, न सा मानकथनाऽनाश्रिता, यतः समर्थाया रतेरेव पञ्चस्वपि भेदेषूक्तो दृश्यते।

(था) समञ्जसरतिरूपस्य पूर्व्वरागस्येमा एव दशा यथाक्रमं नीलमण्यादौ दर्शिताः। साधारणरतिरूपस्य तु उन्मादादिवर्ज्जमभिलाषादिकाः प्रथमनिर्दिष्टाः षट्। समर्थरतिरूपस्य प्रौढ़ाख्यस्य पूर्व्वरागस्य लालसोद्वेगजागर्य्यातानवजड़िमवैयग्र्यव्याधिन्मादमोह-मृत्युक्रमेण दर्शिते च सम। न च तावत् प्रकृतं किमपि वैलक्षण्यमेतस्य 'नयनप्रीतिश्चिन्ते'-त्यादाग्र उदाहृतात् केश्चिद्दर्शितात् दशापारम्पर्यात् । परं स्थानविशेषतोऽवस्थाविशेषतश्च भिन्ना संज्ञा—नातः परं किमपि।

(15) इतः परात् 'वधूनां'मित्यधिक. पाठ (ख) (च) पुस्तकयोरपलभ्यते ।

भूतविरहेण सह प्रवासावान्तरभेदो यथोदाहरणं स्फुटीभविष्यति।

अथोभयोरेव सम्भोगविप्रलम्भयोः परस्परावलोकनाधरपानाद्यभिलाषादीनां क्रमेणोदाहरणानि।

तत्र परस्परावलोकनं यथा—

एहीति पृष्ठगसखीच्छलकैतवेन
व्याहृत्य यो मयि तया निहितः कटाक्षः।
प्रत्यक्षवन्मम कटाक्षमवाप्य भ्रान्तो
ऽप्यन्तर्बिभेद स निशातशराद्वरम्मे ॥ १८

अपि च—

तस्याः सखीभिरपि वीक्ष्य सुजातमन्त-
र्भावोदयं कमपि चञ्चललोचनान्ते।
धन्यो भवानिति कृता मम सम्मुखीभि-
रिन्दीवरच्छदमयी (16) मयि पुष्पवृष्टिः ॥ १९

परस्पराधरपानं यथा—

पाअअदि पिअदि वाअसं पेअसि ललिदे कहिं सीदि।
सान्द्रानन्दविनिद्रितराधास्वप्नायितञ्जयति (ड़) (17) ॥ २०

यथोदाहरणमिति—उदाहरणे द्रष्टव्ये।

एहीति—एहि पृष्ठस्थितसखीदर्शनमिषेण मयि निहितो यः कटाक्षः स प्रत्यक्षवन्मत्कटाक्षं प्राप्य भ्रान्तोऽपि ममान्तःकरणं बिभेद। अत्र दृष्टान्तमाह—निशातेति। प्रत्यक्षविद्धशरस्य वेधे तथा पीडा न जायते यथा भ्रमस्थितो योऽहं शरस्तस्य वेध इत्यर्थः। इदञ्च चायस्कान्तमनुभवसिद्धमेव। कमपि सखायमुद्दिश्य भीरुत्वस्योक्तिरियमिति बोध्यम्।

यथा तस्याः कटाक्षशरेणाहं विद्धस्तथा मत्कटाक्षशरेणापि विद्धायास्तस्याः कमप्यन्तर्भावोदयं वीक्ष्य तस्याः सखीभिरपि धन्यो भवानित्यर्थबोधकेन तत एव मदाभावेन परेषामविषयचञ्चललोचनान्तैः करणैर्मयि नीलकमलदलमयी पुष्पवृष्टिः कृता।

(ड़) अनेनोदाहरणे गौणसम्भोगशृङ्गारस्य सूचनम्। न केवल पद्येऽस्मिन्नौपम्यादिप्राप्तत अनतुलनस्य भावप्रपञ्चस्याव्याहतं प्रकृत भक्तहृदये भगवत्सम्भ्रमसुखानन्दवार्त्तोदयं,

(16) 'इन्दीवरच्छविमयी'ति (ख) (ग) पुस्तकयोः पाठः। स च टीकाकृन्मतेनापरादृष्टस्य।

(17) 'सान्द्रानन्दविनिद्रितराधाशावद जयदि' इति मुद्रितपुस्तक एव प्राकृतभाषामयः पाठः। न चान्येन ॥—वैपुल्य टिप्पण्यामप्युक्ता।

यथा वा—

अर्धाकुञ्चितानिमेषनयनं निस्पन्दतारं किय-
द्दीर्घश्वासमलक्ष्यकण्ठनिनदं सानन्दतन्द्रायिता ।
कृष्णे पाययति स्वकीयमधरं प्रागेव पीताधरे
किञ्चित्त्वं ललिते ! पिबेति किमपि स्वप्नायते राधिका ॥ २१

परस्परचुम्बनं यथा—

अङ्घ्र्यङ्घ्रि स्खलनं कराकरि मनःसंवादसंवेदनं
कर्णाकर्णि कथाकथासु युगपच्चुम्बाः शतं गण्डयोः ।
स्कन्धास्कन्धि भुजौ मुखामुखि मुहुर्माध्वीकपानक्रमो
राधामाधवयोर्मधौ मधुमदक्रीडा जरीजृम्भते ॥ २२

राधायाः स्वप्नायितं जयति । निद्रावस्थायामसङ्गतसङ्गतनानाऽर्थबोधकशब्दोच्चारण-मेव स्वप्नायितं, तदेवाह । हे ललिते ! प्रेयसि ! श्रीकृष्णो स्वीयास्यं मां पाययति इति ममास्यं स्वयं पिबति इति त्वं तु सुताऽसीति स्वप्नायितम् ।

अर्द्धेति—प्राक् प्रथमं पीतो मदीयाधरो येन तथाभूते श्रीकृष्णे स्वकीयाधरं मां पाययति सति हे ललिते ! त्वमपि किञ्चित् पिबेति किमपि स्वप्नायते राधिका । स्वप्नायन-स्यैव क्रियाविशेषणान्याह—नेत्रार्द्धं व्याप्याकुञ्चिते ईषन्मुद्रिते एवं निमेषरहिते नयने यत्र तद्यथा स्यात्तथा, स्पन्दरहिता नेत्रतारा यत्र स्यात्, कियन्तो दीर्घश्वासा यत्र, अलक्ष्योऽस्पष्टः कण्ठनिनदो यत्र ।

मधौ वसन्ते राधामाधवयोर्वसन्तकालीनमदेन जाता या क्रीडा सा जरीजृम्भते अतिशयेन प्रकाशते । क्रीडामेवाह—तयोः स्खलनमङ्घ्र्यङ्घ्रि अङ्घ्रेणाङ्घ्रेण निर्वृत्तं, तथा च मधुमदेन राधाया अङ्के श्रीकृष्णः पतति, श्रीकृष्णस्याङ्के राधा पततीत्यर्थः । मनसः संवादोऽभिप्रायस्तस्य संवेदनं ज्ञानं कराकरि कराभ्यां कराभ्यां निर्वृत्तं, तथा च श्रीकृष्णस्य हस्तोद्गमादेव तस्य मनोऽभिप्रायो राधिकया ज्ञातः एवं राधाया अपीति ज्ञेयम् । कर्णाभ्यां कर्णाभ्यां निर्वृत्तासु कथाकथासु सतीषु परस्परगण्डयोः शतसंख्यकचुम्बनम् । भुजौ स्कन्धास्कन्धि—तथा च तयोर्भुजौ परस्परस्कन्धे निक्षिप्तावित्यर्थः । मधुपानोपक्रमो मुखामुखि मुखेन मुखेन निर्वृत्तः ।

---

तदुपचितानन्दस्य भागाहरणायान्यथाऽन्यदा च कल्पितानां प्रतिद्वन्द्विभक्तत्वेन चैतरेषां प्रायशोऽपि मधुरमधुरमाघ्राणम् । अत्रार्यायाः द्वितीयार्द्धेऽन्योक्तिसूचककविवाक्यनिर्मितिः संस्कृतेनैव भवितुमर्हा । टीकाकृद्धृतप्राकृतसन्दर्भगतच्छायाऽपि नात्र प्रसरतीति निखिल-मवदातम् ।

परस्परनखक्षतानि यथा—

जाताङ्कुराणि किममून्यनुरागबीजा-
न्युप्तानि नूनमुरसोरुभयोरुभाभ्याम् ।
आर्द्राणि कोमलतराण्यरुणानि भुग्ना-
न्याभान्ति यस्य ललिते ! नखलक्ष्मणानि ॥ २३

परस्परदशनक्षतं यथा—

माध्वीकापानमहोत्सवे कुतुकिनोरन्योन्यदत्तच्छदा-
वन्योन्येन कृतोपदंशरचनौ यौ राधिकाकृष्णयोः ।
क्षुण्णौ च द्विजकुड्मलैरभवतामच्छुब्धलक्ष्मीभरौ
पीतौ चार्पितौ बभूवतुरहो प्रेम्णो विचित्रा गतिः (१) ॥ २४

नीवीमोक्षो यथा—

निर्यातायां त्वयि विरमितो मालया रत्नदीपः
क्षण्णे चोलं चपयति मया स्वस्तिकः सन्निबद्धः ।

तयोः परस्परनखक्षतानि परस्परानुरागरूपबीजस्याङ्कुरत्वेनोत्प्रेक्षते—जातेति । आर्द्राणि स्निग्धानि भुग्नानि किञ्चिद्वक्रीभूतानि—वक्रीणामङ्कुराणामुत्पत्तिकाले सम्भवतीति ध्येयम् ।

माध्वीकेति—मधुकोटरेभ्यो निःसृतोऽत्यन्तमादको रसः माध्वीकः, तस्य पानोत्सवे कुतुकिनो राधाकृष्णयोरन्योन्यौष्ठाधरौ—कथम्भूतौ ? अन्योन्येन कृता मद्यपानस्योपदंशरचना यत्र तथाभूतौ. मद्यपानैर्मादकवस्तुपानानन्तरं किमपि भक्ष्यवस्तु भुज्यते, तस्यैव संज्ञा उपदंशः, लोके 'मज्जल' इति तस्य प्रसिद्धिः—आभ्यान्तु परस्पराधरपानमेवोपदंशत्वे रचितम् ; द्विजकुड्मलैः क्षुण्णावभवतां, तथापि तावोष्ठाधरौ अहो आश्चर्यमच्छक्षोभाभरौ बभूवतुः—उभयाभ्यां पीतावपि परस्पराधरावर्पितौ बभूवतुः ।

हे सखि ! त्वयि कुञ्जगृहान्निर्यातायां शय्यामेकाकिन्या मया स्वच्छकान्धकार-निर्माणार्थं रत्नप्रदीपो मालया विरमित आच्छादितः—तदपि बलात्कारेण मम कञ्चुकीं मोक्षयितुं चपयति सति कुचद्वयाच्छादनार्थं हस्ताभ्यां मया स्वस्तिकः सन्निबद्धः । संकेतोऽत्र यथायथा मयोपविष्टम्. कथमयं मिलितोऽस्यौपदेशनेनेव परिधेयवस्त्र-

(१) उपदंशस्य गौडभाषायां 'चाट्' इति संज्ञा । क्षुण्णावप्यच्छक्षोभाभराविति, 'पीतावप्यर्पितौ'विति च द्वैयर्थ्ये विरोधमयमर्थाविशेषात् प्रेम्णो विचित्रगतित्वकथनं सम्पादितमिति । 'कुतुकिनो'रित्यत्र 'पुमान् स्त्रिया' इत्येकशेषः ।

नीवीग्रन्थिं हरति सहसा संहतोरुप्रविष्टं
मुहेरयाहं सखि । समधिका वल्लभस्ते बलेन ॥ २५

आदिशब्दाद्वनविहार-जलविहार-मधुपान सङ्गीतादि । तत्र वनविहारो यथा—

अर्घं कुड्मलकैर्मरन्दपटलैः पाद्यं परागैर्मृदु-
स्यन्दार्द्रैरनुलेपनं किसलयैः पुष्पैश्च भूषां फलैः ।
नैवेद्यं पवनाहतैरवयवैर्नृत्यं मदालिस्वने-
र्गीतं कल्पयता हरिर्वनगतो वल्लीचयेनार्चितः ॥ २६

अपि च—

एकेनानिलचपलेन पल्लवहस्तेनारौत्सीत् स्तवकपयोधरं परेण ।
आक्षेपं न न म न नेति चञ्चलालिभ्रूभङ्ग्या व्यधित हरिं विलोक्य वल्ली ॥ २७
सन्त्रासं किसलयपाणिकम्पनेन प्रोत्साहं कुसुममयेन सुस्मितेन ।
रोषञ्च भ्रमरघटाकटाक्षपातैरासन्ने मधुभिदि वीरुधोऽभ्यनैषुः ॥ २८

सीमन्तोपरि बन्धुजीवकुसुमं सिन्दूरबिन्दूकृतं
चित्रैर्मैथ्यदलैर्व्यरचायि मकरी गण्डे मखाग्रक्षतैः ।
चक्रे कञ्चुलिका पयोधरभरे नानाप्रसूनच्छदैः
कृष्णेन प्रणयातिरेकरभसस्तस्यामभिव्यञ्जितः ॥ २९

कार्य्यमपि हृतमित्यर्थः । अतएव ते तव वल्लभः श्रीकृष्णो बलेनाधिको नतु बुद्ध्या— बलस्याग्रे बुद्धेः प्रभावो न तिष्ठतीति । मद्बुद्धिवशादभूदिति ध्वनिः ।

एतैः करणैः पाद्यादिकङ्कल्पयता लतासमूहेन श्रीकृष्णोऽर्चितः, एतदेवाह—कुड्मलकैः पुष्पस्तवकैः, मधुस्वरयोनादैः परागैः पुष्परजोभिरनुलेपनम् ।

वल्लीरूपा नायिका सम्भोगोन्मुखं नायकमिव हरिं चञ्चलभ्रमररूपया प्रणयकोपव्यञ्जकभङ्ग्या विलोक्य स्तवकरूपं स्तनमरौत्सीत् रुद्धमकरोत् ।

अधुना वल्लीरूपनायिकायाः कृष्णदर्शनाज्जातमनेकेषां व्यभिचारिभावानां शावल्यमाह—सन्त्रासमिति । श्रीकृष्ण आसन्ने सति वीरुधो वल्ली धाम्यसङ्कसन्त्रासं पल्लवरूपपाणिकम्पेनाभ्यनैषुरभ्यासाभिनयञ्चकुरित्यर्थः । एवं पुष्परूपस्मितेनाभिलाषव्यञ्जकमुत्साहमभ्यनैषुः ।

श्रीकृष्णेन तस्यां राधायामेतैः करणैः प्रणयातिशयवेगोऽभिव्यञ्जितः । प्रणयातिशय-

जलविहारो यथा—

कृष्णे कर्षति कोकयुग्मकमिदं दोर्भ्यां व्यधात् स्वस्तिकं
कण्ठे चारुमृणालमर्पयति सा बाहू दधे कुञ्चितौ ।
पद्मं जिघ्रति पाणिनास्यमनयोरित्थं जले खेलतो-
रस्पर्शा सुरतिस्तयोः प्रियसखीवृन्दस्य रस्याभवत् (उ) ॥ २०

मधुपाने यथा—

'आलि ! प्रेयान् हरिरतिशठः' 'कृष्ण ! मे सम्प्रसीद'
'श्यामे ! स त्वामभिसरति किं' 'नाथ ! दासी तवास्मि ।'
इत्यन्योन्यप्रकृतिविकृती भावतोऽनन्वितोक्ती
राधाकृष्णौ मधुमदमुदा मोहितौ वः पुनीताम् ॥ २१

चक्रकं पुष्पमयभूषणमाह—सीमन्तेति । सिन्दूरबिन्दुस्थानीयत्वं, नखाग्रक्षतैश्चित्रैर्मालावद्-इन्दुलेखाकारौ मकर्याकारचित्रं गण्डे यथापि—नानापुष्पदलैः स्तनपयोधरे कञ्चुलिका चक्रे ।

अथ जलक्रीडायां राधाकृष्णयोः स्पर्शं विनैव दूरे तिष्ठतोस्तयोः क्रीडामाह—कृष्णे इति । स्तनस्पर्शकाङ्क्षया चक्रवाकयुग्मं कृष्णे आकर्षति सतीयं राधा स्तन-सम्मतिसूचकं स्तनाच्छादकं स्वस्तिकं दोर्भ्यां व्यधात् । राधिकाया हस्ताभ्यां स्वकण्ठ-स्यालिङ्गनाकाङ्क्षया श्रीकृष्णे स्वकण्ठे चारु मृणालमर्पयति सति साऽपि तदसम्मति-सूचकौ कुञ्चितौ बाहू दधार । अस्पर्शा स्पर्शरहिता शोभना रतिः सखीसमूहस्य रस्याऽऽस्वादनीयाऽभवत् ।

मधुपानजन्येन मदेन कृतौ विकृती कथयन्तौ । तासात् कृष्णविरहाच्योऽधिकाधिकैः कृष्णविरहविलापैः कल्पैरन्योन्यं श्रुत्वा व्याहरन्तौ । 'धरणिपतिते'ति पाठे 'धर्षे'त्यधि-कारे रेफविकारो न स्तः, अतः दूषितापाठम् ।

(उ) श्लोकोऽयमेतदनन्तरो ऽपि, 'एकेनाभिनवपल्लवेने'ति (२०) श्लोकस्थानन्दवृन्दावने माध्वीक-पान जलविहार वसन्तोत्सवादिप्रसङ्गेषु वर्तन्ते । 'अद्भुतकालमेघस'मित्यादि श्लोक [illegible] यद्यपि मूल'लङ्कारविधायकस्यैतस्य गत्यादिकस्य वैशिष्ट्यं नात्र वर्तते, तथापि वचनभङ्गया विशिष्टतिरूपभोग्यत्वस्योपमत्वायत्वम् । 'हा कष्ट'मिति पदवर्तिनि श्लोके तृतीयचरणे 'अधिकतमिते'रिति अकारस्य संयुक्ताक्षरस्यावस्थानात् 'प्रह्वे वे'त्यनुशासनात्-पूर्ववर्तिनो लघुवर्णस्य वैकल्पिकं लघुत्वमिति छन्दःशास्त्रदामाश्रयात् लघुत्वं न दोषाय । एतेषु श्लोकेषु यथायोग्यं श्रीकृष्णो पूर्वरागी दक्षिण ईषत्प्रगल्भो नायको वा, नायिका-शिरोमणी राधा च पूर्वरागवती मुग्धा मध्या नायिका वा—इत्यपि वस्तु समायाति उभयो-रलौकिकनधेयत्वम् ।

यथा वा—

हा कष्टं द्यौः पपतति कथं हन्त घूर्घूर्णते भू-
रालम्बे त्वां धधध-पतिता कम्पते गात्रयष्टिः।
इत्यन्यासादधिकश्वसितैरुच्चरैर्व्याहरन्तौ
कृत्वान्योन्यं मधुमदजितौ नौमि राधामुकुन्दौ ॥ ३२

अथ विप्रलम्भः—

स्वप्नाद्वा श्रवणाद्वापि चित्राद्व्वा विलोकनात्।
साक्षादाकस्मिकाद्वापि दर्शनाद्दुर्लभे जने ॥
प्राक्तनी रतिरुद्भूता सम्प्राप्तेः पूर्व्वमेव सा।
पाकद्वयान्तरे पूर्व्वरागतां प्रतिपद्यते (ज) ॥७८ का

पाकद्वयान्तर इति—

भावः पूर्व्वरागश्चेति पाकद्वयं, तदन्तरे तन्मध्ये। तत्र स्वप्नद्वारा यथा—

इन्दीवरादपि सुकोमलमिन्द्रनीला-
दप्युज्ज्वलं जलधरादपि मेदुरन्तत्।
स्वप्नः स किं सखि! महो यदसौ समेत्य
मद्यापि नो नयनयोः पदवीञ्जहाति ॥३३॥

श्रीकृष्णस्य प्राप्तेः पूर्व्वमेव दुर्लभे श्रीकृष्णे प्राक्तनी अवतारात् पूर्व्वमेव स्वभावसिद्धा, किन्त्वेतैः कारणैरुद्भूता या रतिः सा पूर्व्वरागतां प्रतिपद्यते। भाव पूर्व्वराग रूपपाकद्वयान्तरे मध्ये अर्थाद्भावमवि व्याप्येत्यर्थः।

अथ स्वप्ने श्रीकृष्णस्य दर्शनं प्राप्य तद्दर्शनस्यातिचमत्कारित्वेन साक्षाद्दर्शनमेव जानती श्रीराधिका सखीं प्रत्याह—हे सखि! स किं स्वप्नः, अपि तु स्वप्नो न भवति, किन्तु साक्षाद्दर्शनमेव—यदमादिदं महस्तेज,स्वरूपमद्यावधुनाऽपि नेत्रपदवीं न त्यजति। तन्महः वीष्टयन्नित्याह—इन्दीवरादित्यादि। मेदुरं स्निग्धम्।

(ज) प्राक्तनीति—'व्यतिषजति पदार्थानान्तरः कोऽपि हेतु'रिति—स च हेतुः पूर्व्व संस्कारभित्तिकः। संप्राप्तेः पूर्व्वं कथमस्य 'राग' इति चित्तवस्त्रस्यरञ्जनी संज्ञेति? अत्राहुर्नीलमणिकाराः—'दुःखमप्यधिकं चित्ते सुखत्वेनैव व्यज्यते। ततस्तु प्रणयोत्कर्षात् स राग इति कीर्त्यते।' भावपाकस्य लक्षणन्तत्रैव—'अनुरागः स्वसंवेद्यदशां प्राप्य

श्रवणद्वारा यथा—

तमालनीलं किमपि त्वदुक्ताद्विम्बोष्ठि ! कर्णेति पदाद्दुदीर्णम् ।
अन्तः प्रविश्य श्रुतिवर्त्मना मे न वेद्मि तद्धाम किमातनोति ॥२४

चित्रदर्शनद्वारा यथा—

व्रजभुवि किमलोकि सञ्चरन्त्या यदिह विलिख्य पटे ममोपनीतम् ।
कुतुकिनि ! कुतुकेन ते समस्तं मम गतमेव हि जातिजीवनञ्च ॥२५

साक्षाद्दर्शनद्वारा यथा—

नो वा दृष्टचरी न वा श्रुतचरी नामापि न ज्ञायते
यस्याः काचन सा व्यलोकि विपिने मेघद्युतिर्देवता ।
आनन्दद्रववर्षिणः किमथवा ज्वालाहलोल्लासिनः
सौहित्यञ्च रुजञ्च नो विदधते यस्याः कटाक्षोर्मयः ॥२६

अथास्य दश दशाः । तत्राभिलाषो यथा—

मा किं निशा सखि ! भविष्यति सर्व्वदा मे
स्वापः स किं सुमुखि ! तत्र सदैव भूयात् ।
कश्चित्तमालदलनीलतमः स यस्मि-
न्नालोकि लोकरमणो रमणीयमूर्त्तिः ॥२७

हे बिम्बोष्ठि ! त्वदुक्तात् कर्णेति पदादुदीर्णमुत्पन्नं तमालवन्नीलं किमपि धाम तेजःस्वरूपं ममान्तःकरणं प्रविश्य किमपि क्षोभादिकमातनोति, तन्न वेद्मि ।

हे कुतुकिनि ! व्रजभुवि सञ्चरन्त्या त्वया किमद्भुतमलोकि यदद्भुतं यल्लिख चित्रपटे विलिख्य ममाग्रे उपनीतम् । तव कुतुकेनैव मम जातिजीवनञ्च समस्तं गतम् ।

यस्याः श्यामदेवतायाः कटाक्षोर्मयो मम सौहित्यं सुखं कुर्व्वन्तीति हेतोः किमानन्दद्रववर्षिणः, अथवा मम पीड़ां कुर्व्वन्तीति ज्वालाहलोल्लासिनः ।

सा निशायां किं सदैव स्वप्नो भूयात् यस्मिन् स्वप्ने स नीलतमो मयाऽलोकि ।

---

प्रकाशितः । यावदाश्रयशक्तिभेदाश्च इत्यभिधीयते ।' अत्र श्रीवमोस्वामिमतमधोदर्शितं तयो पूर्वरागयोरुदाहार्य्यम्—'अतएवात्र शास्त्रेषु श्रूयते राधिकादिषु । पूर्व्वराग-प्रसङ्गेऽपि प्रकटं रागलक्षणम्' । तत्रयात्र तयोरुदाहृते श्लोकत्रये 'इन्दीवराक्षी'त्यादौ वेणुस्वरविरचितेषु गीतेषु च नादश्रावण्यो रसः पूर्वरागास्वादनीयः । 'इन्दीवराक्षी'त्यादि श्लोकः कविकर्णपूरगोस्वामिपरम्परा श्लोकमध्ये प्रथम नायकार्थं ।

अथ चिन्तनम्—

आसंगो सिविणगओ मम्मप्फंसी महं क्खु अणुराओ ।
पिअपरिअणो ण चउरो जीअण तुह णत्थि जीअणोवाओ (ऋ) ॥ ३८

स्मृतिः—'इन्दीवरा'दित्यादि ( ३३ श्लोकः ) ।

गुणकीर्त्तनम्—

धाम श्याममयातयाममधुरन्त्वल्लोचनानन्दनं
कस्तूरीघनसारकुङ्कुमरसामोदो य गात्रानिलः ।
आलापः स सुधाम्बुधेरपि तिरस्कारी बभूवाधुना
सम्मोहाय विनोदनाय मनसः क्षोभाय लोभाय च ॥ ३९

अथोद्वेगः—

नो विघ्नः किमु गौरवं गुरुकुले, कौलीन्यरक्षाविधौ
न श्रद्धा किमु, दुर्ज्जनोक्तिगरलज्वालासु किं नो भयम् ।
उद्वेगादलश्लथितं मम मनः कस्यापि मेघत्विषो
यूनः श्रोत्रगतैः घुणैरिव गुणैरस्तः क्षतं जर्ज्जरम् ॥ ४०

आसङ्गः स्वप्नगतो मर्म्मस्पर्शी महान् खल्वनुरागः । प्रियपरिजनो न चतुरो जीवन ! तव नास्ति जीवनोपायः । स्वाप्निकवस्तुनः शीघ्रं विस्मरणं भवत्वत आह—मर्म्मस्पर्शी विस्मर्तुं न शक्तोऽस्मीत्यर्थः । कुतोऽङ्गनायास्तवाभिलाष एवानुचितस्तत्राह—महाननुरागः । परिजनस्य चातुर्य्ये चेत्तदा तेन सह सङ्गसम्भावनया जीवनं रक्षितुं समर्थाऽस्मीत्यपि नास्तीत्याह—प्रियपरिजन इत्यादि ।

तद्धाम कान्तिविशेषः । ननु मधुरवस्त्वपि पुनः पुनरास्वादनेन गतरसम्भवति, तत्राह—अयातयाममधुरं 'यातयामो गतरस' इत्यमरः । घनसारश्चन्दनः—एतेषां रसानामामोद इव च आमोदस्तद्विशिष्टः । अधुना तत्सर्व्वमेव मनसः सम्मोहाद्यर्थमेव बभूव ।

'नो विघ्न' इत्यादौ शिरश्चालने नञ्, गुरुकुलस्य गौरवं किं न विघ्नः अपि तु आगौमं

---

(ऋ) 'त्यजतु रात्रौ शतावलखरकलः प्रशो'त्यादि मालत्यां स्थितात् भावात्, 'दुल्लहजणाणुराओ लज्जा गरुई परव्वसो अप्पा । पिअसहि विसमं पेम्म मरणं सरणं णवरि एक्कं ॥', इत्यादितो वा रत्नावल्यां नायिकायाः सेरोक्तिविजृम्भणेनैतावाप्यन्तरार्त्तिव्यञ्जितवतानमत्रजीविता सुतरामुत्तमतीति तत्त्वम् । 'आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि' इति तु स्वाभाविकातुलाप्रथयत्यन्ते, यदा तु उत्कटा मनोरुजा, माहमनिर्धारय मनस्तदेव स्वभावमभिधानं, नच कार्योत्कर्षं नितरां जनयति ।

पूर्व्वरागः कृष्णस्यापि स्यात्—इत्यतःपरं तथैव दर्श्यते। तत्र प्रलापः—

उदयति शशी, श्रीराधाया न तन्मुखमण्डलं

स्खलति तिमिरं, प्रायेण्वर्य्या न नीलनिचोलकः।

हसति हरिताचक्रं, तस्या न नाम सखीगणो,

भ्रमति भुवने ज्योत्स्नैवास्या न देहरुचिच्छटा (ऋ) ॥ ४१

उन्मादः—

हे वासन्ति! विलोकिताद्य सुमुखी राधा त्वयास्मिन् वने ?

वातान्दोलितपल्लवैः करतलैर्'नो नेति (१९) किं भाषसे ?

यातानेन पथैव सा परिमलैस्तस्या यदन्धोत्कता-

स्त्वत्पुष्पेषु पतन्त्यहो न मधुपा भ्राम्यन्ति सर्व्वा दिशः ॥ ४२

एव। एवं कालीयरच्छायामपि श्रद्धाऽस्त्येव, किं कर्त्तव्यम्। उद्वेगान्मम मनोऽनवस्थितं जातं, ततस्तत्तत्करणे प्रतिबन्धकं भवतीत्यर्थः। तस्मात् कस्यापि यत्नो गुणैर्ममान्तःकरणं जर्ज्जरं कृतम्—घुणैरिवेति—घुणाः कीटविशेषा यथा काष्ठं जर्ज्जरं कुर्व्वन्ति।

तदानीमेवोदितचन्द्रं राधिकामुखं मत्वा हर्षो जातः, पश्चात्तस्मिन् वैगुण्यं दृष्ट्वा कृष्णः सखेदमाह—उदयतीति। अयं राधामुखमण्डलं न भवति, किन्तु शशी चन्द्रः, यतोऽधुनैवोदयति, तन्मुखमण्डलन्तु सदा प्रकाशमानमेव। एवमन्धकारं रात्रिकालीनवस्त्रं मत्वाऽह। इदं प्रायेण्वर्य्या निकृष्टमपि नीलवस्त्रं न भवति, किन्तु तिमिरं, यतश्चन्द्रोदयात्तु स्खलति, इदन्तु न। तस्याः सखीगणो न, अपि तु हरितां दिशाचक्रं, यतश्चन्द्रोदयेनैव हसति प्रकाशते, तेषान्तु सर्व्वदैव प्रकाशः। एवमियन्तस्या देहरुचिच्छटा न भवति, किन्तु ज्योत्स्नेव—यतो भुवनमध्य इतस्ततो भ्रमति, सा तु सदैकरूपैव (१८)।

हे वासन्तीति। नो नेतीति—मया राधिका न दृष्टेति प्रभाषसे चेत्तदा त्वद्वचनं मिथ्यैव,

(ऋ) निश्चयान्तेन सन्देहालङ्कारेण सूचितो कृष्णो नायकस्य—'नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः' इतिवदुपमोग्यः। 'तत्' 'असौ' इत्यादि पदेन पूर्व्वानुभूतानामामोदरूपवनयनां भावराशीनां परामर्शः। तेन च सूचितेन वैसादृश्येन तदानीन्तनवैधुर्य्यस्य प्रकाशः। अत्र विधेयाविमर्शदोषस्पर्शः पद्यमेतत् कथञ्चित् गर्ह्यं करोति।

(१८) एव (ग) (ङ) पुस्तकयोः। 'सदैकस्वरूपैवेति (क) पुस्तके,'सदैकरसस्वरूपैवेति (ख) (ङ) पुस्तकयोः।

(१९) 'ना नेति' इति (ग) (घ) पुस्तकयोः पाठः। तत्रत्यं 'ना' इत्याकारान्तत्वान्यस्य पदस्य कोऽपि इष्टत्वे, यतो मूर्धे योऽकारादिककारामकस्यसाधनाय कल्पितोऽप्रयोग्यमाणादाश्रयमवलार्थोपरिदर्शितं पाठ एव ग्रेयान्।

अथ व्याधिः—

नो कथ्यते किमु कथाविषयो यदि स्या-
न्नो गोप्यते किमु भवेद्यदि गोपनीयः।
आपच्यमान इव हृद्व्रण एष भावः
कृष्णस्य कामपि दशां भजते न विद्मः॥ ४३

जड़ता—त्वां स्वप्रलब्धमवलोकयितुं विलिख्य
वैवर्ण्यमाप तव वर्णविलोकनेन।
तूलीग्रहे सति क्षणाजनि तूलिकेव
चित्रोद्यताजनि हरे! स्वयमेव चित्रम्॥ ४४

मरणममङ्गलत्वेन न वर्ण्यते, भङ्ग्या तु वर्ण्यते। तद्यथा—

निखिलेन्द्रियसंवर्त्ते श्यामसुधाधाममधुरिमावर्त्ते।
मग्नानन्दविवर्त्ते मातर्नातः परं वर्त्ते॥ ४४

केचित्तु—"नयनप्रीतिश्चिन्ता सङ्कल्पः स्वप्नविच्छेदः।
कार्श्यं विषयनिवृत्तिर्ह्रीनाशः स्यादथोन्मादः॥ Rasasudhakara

• किन्त्वनेनैव पथा सा राधिका गता, यस्मात्तस्याः परिमलैरन्धीकृता भ्रमरास्तत्पुष्पेषु न पतन्ति, किन्तु तस्याः सुगन्धग्रहणार्थं भ्राम्यन्ति।

यदि कश्चिदयं, कथाविषयः स्यात्तदा किं सोऽर्थो न कथ्यते अपि तु कथ्यत एव। एवं यदि गोपनीयः स्यात्तदा किं न गोप्यत, अपि तु गोप्यत एव। कष्टेन तु हृदिस्थभावस्य निर्व्वचनासामर्थ्यात् स तावन्न कथ्यते न वा गोप्यते। अतः कृष्णस्य भावः कामनिर्व्वचनीयां दशां प्राप्नोतीति न विद्मः। एष भावः कीदृशः? ईषत्पच्यमानहृद्व्रण इव—स यथा सर्व्वैरदृश्यः सन्नन्तरे पीडां जनयति तद्वत्।

वर्ण्यते—हे हरे। त्वां विलिख्यावलोकयितुं तव चित्रोपयोगिवर्णादर्शनमात्रेणैव वैवर्ण्यस्वरूपमात्त्विकविकारमपि। तदनन्तरञ्चित्रार्थन्तूलीग्रहणे सति क्षणाज्जनि। तदनन्तर चित्रायोद्यता सती स्वयमेव चित्रमजनि जडा बभूवेत्यर्थः।

अधुना पूर्व्वरागावस्थयाऽत्यन्तव्याकुला श्रीराधा सखीं प्रत्याह—हे मातः सखि। सर्व्वेन्द्रियाणां संवर्त्तः, प्रलयो यत्र तथाभूतानन्दविवर्त्ते। कथम्भूते? श्यामसुधामयदेहस्य माधुर्य्यरूप आवर्त्ते भ्रमियत्ने। तत्र निमग्नाऽहमतःपरं न वर्त्ते न जीवामीत्यर्थः तत्क्षणे मूर्च्छिता बभूवेति भावः। 'संवर्त्तः प्रलयः कल्प' इत्यमरः। एवं सति नित्यसिद्धानां मूर्च्छापर्य्यन्तदशा वर्णित, ततोऽधिका नास्तीति ज्ञेयम् (ञ्च)।

मूर्च्छा मृतिरिति कथिता दशा दशैमास्तु पूर्व्वरागस्य ।
स च ललनायाः पूर्व्वं पश्चान्नेतुः समाख्येयः (ख) ॥"

अथ नैलः कौसुम्भो माञ्जिष्ठश्चाथ हारिद्रः ।
रागश्चतुर्व्विधोऽतश्चातुर्व्विध्येन हि प्रकृतेः ॥ ७८ का

अतः पूर्व्वरागात् पाकत इत्यर्थः । नैलो नील्या रक्तः ।

नैलः स एष कथितो न कदाचिद्ध्रसति शोभतेऽत्यर्थम् ।
कौसुम्भः स हि विदितः स्थित्वाऽपैति प्रशोभते पूर्व्वम् ॥
माञ्जिष्ठः स हि यः किल नापैत्येवातिशोभतेऽजस्रम् ।
हारिद्रः स तु बोध्यो यात्यपि न च शोभते यस्तु (ग) ॥ का

स्वप्नविच्छेदो निद्राक्षयः । केषाञ्चिन्मते पूर्व्वरागस्येमा दश दशाः कथिताः । स च पूर्व्वराग आदौ नायिकायाः पश्चान्नेतुर्नायकस्य कथितः । इदानीं पूर्व्वरागवर्णनप्रसङ्गे पूर्व्वोक्तो यः पूर्व्वरागपाकाज्जातो रागस्तस्य भेदचतुष्टयमाह—अथेति । प्रकृतेर्नायिकानायकयोः स्वभावस्य चातुर्व्विध्येन । नीलद्रव्यस्य धर्म्मेण जातो वर्णको नीलो उच्यते । यथा नीलीवस्त्रस्य बहुप्रक्षालनेनापि नीलिमा न ह्रसति, प्रत्युत शोभते च, तथा नैलरागोऽपि । यथा कौसुम्भवस्त्रस्य कौसुम्भरागः पूर्व्वं शोभते पश्चाद्वर्णकाचे तु स्वत एव ह्रसति,

---

(ख) 'आदौ वाच्यः स्त्रियो रागः पुंसः पश्चात्तदिङ्गितैः ।' इति लौकिकपक्षे शोभना रीतिरित्यालङ्कारिकसम्मता, तस्या एवात्राश्रयः कृतः । सकलनायकचूडामणौ श्रीकृष्णे च तस्यैवं निर्द्दिष्टो दार्शनिकमतविरोधं कमपि वहन्नपि बोद्धव्यः—तथा चोज्ज्वलनीलमणौ दार्शनिकशिरोमणिश्रीरूपगोस्वामिचरणाः—'अपि माधवरागस्य प्रागुक्तौ सम्भवत्यपि । आदौ रागे मृगाक्षीणां प्रोक्तः स्याच्चारुताऽधिका ।' इत्यनेन काव्यदर्शनयोर्भेदविलासः ।

(ग) लोकरीत्याऽनुमितवर्णस्थितिसादृश्यादिकमुपमानमाश्रित्येयं भेदकल्पना । एवमपि दशरूपकदर्पणादिनिबन्धेषु । 'न चातिशोभते यन्नापैति प्रेम मनोगतम् । तन्नीली रागमाख्याति यथा श्रीरामसीतयोः ।' इति दर्पणे नीलीरागमात्रं तदुदाहरणञ्च । "कुसुम्भरागः स ज्ञेयो यश्चित्ते सज्जति द्रुतम् । अन्यरागाश्रयविश्लो शोभते च यथोचितम् । मदाधारविशेषेषु कौसुम्भोऽपि स्थिरो भवेत् । इति कृष्णप्रियायेषु हानिरस्य न युज्यते ।" "अहार्य्योऽप्यनाशी यो यः कान्त्या वर्द्धते सदा । भवेन्माञ्जिष्ठरागोऽसौ राधामाधवयोर्यथा ।", [illegible] इति [illegible] ज्ञेयम् । हारिद्ररागस्य [illegible] 'श्यामाराग' इति संज्ञा, परं मत्र किमपि भेदविनिमय [illegible]—न [illegible] [illegible] न प्रपञ्च [illegible] । तत्र [illegible] ।

अथ विरहः—स च त्रिविधः, भावी भवन् भूतश्चेति । तत्र भावी यथा—

यास्यामि श्वः सुमुखि ! मथुरामागतो राजदूतः ।
प्रत्यायातुं कति नु घटिका हन्त भावी विलम्बः ।
नो जानीमः, प्रकृतिकठिनः कार्य्यभावस्तथा चेत्
साद्धं यान्तः प्रिय ! मदसवः क्वापि कार्य्ये नियोज्याः ॥ ४६

भवन् यथा—

यामीति कृष्णवचने|प्राणैर्विनिरुद्धकण्ठकुहरायाः ।
बहिरिव भवितुमशक्तं प्रत्युत्तरमन्तरेव विजघूर्णे ॥ ४७

भूतो यथा—

साद्धं यन्निजदैवतेन न गतं दौरात्म्यमेतद्धि वो
जानीतावधिवासरश्च गणनागम्योऽस्ति लेखासु यः ।
इत्याकर्ण्य वियुक्तगोपसुदृशः प्राणैः समं सद्दया-
मिथैकां प्रतिवासरं प्रियसखी रेखां रहो लुम्पति ॥ ४८

तद्वदापि । कौसुम्भरागः शोभते, माञ्जिष्ठरागस्त्वसमतिशयेन शोभत इति भेदो ज्ञेयः । यस्तु न शोभते शीघ्रं याति च स हरिद्रारागो ज्ञेयः । तेषां मध्ये कौसुम्भ, हारिद्रश्च प्राकृते, अप्राकृते तु केवलो माञ्जिष्ठ इति भेदो ज्ञेयः ।

अधुना विप्रलम्भस्यावान्तरभेदं पूर्व्वरागं वर्णयित्वा क्रमप्राप्तस्यैव भेदान्तरं विरहं वर्णयति—अथेति । प्रत्यायातुमत्र पुनः प्रत्यागमने कति घटिका व्याप्य विलम्बो भावी ? राजकार्य्यभावः प्रकृत्या स्वभावेन कठिनः ।

भवन् वर्त्तमानो विरहः । अधुनैवाऽहं यामीति कृष्णस्य वचने सति स्वस्याः हृदयं समग्रा प्राणाः कण्ठगता बभूवुः—अतस्तैरेव प्राणै रुद्धकण्ठकुहरायास्तस्याः कण्ठरोधेनैव प्रत्युत्तरं बहिरिव भवितुमशक्तं सदन्तर्हृदयमध्य एव विजघूर्णे । अत्र विरहजन्यपीडया ऽसामर्थ्यादेव तथा नोक्तं प्रत्युत्तरं, कवीश्वरेण तु प्राणकर्त्तृककण्ठरोधनेनैव प्रत्युत्तर-स्फूर्त्तानिर्गतमित्युत्प्रेक्षितम् ।

हे प्राणा भवद्भिर्निजदैवतेन सह मथुरागमनसमये यन्न गतम्, एतदेव वो युष्माकं दौरात्म्यं मया ज्ञातम् । स इति तेन कान्तेन मत्प्राणरक्षार्थं प्रेषिता या पत्री तत्र अद्यारभ्य त्रिंशद्दिवसे त्वन्निकटे मया गन्तव्यमिति योऽवधिवासरो वर्त्तते स तु भित्तौ मया दीयमानासु रेखासु गणनया गम्यो भवति, अतस्तं वासरं यूयं जानीत, ज्ञात्वा च तस्मिन् दिवसे तस्यागमने सति भवद्भिः शीघ्रमेव मद्देहात गन्तव्यम्—इति प्राणैः सह वियोगयुक्ताया

अथ प्रणयमानः—

मानस्तिष्ठतु राधिके ! तव हृतं रक्तं मनो देहि मे,

तत् केनापि हृतं, (२०) त्वया, न हि, न हि यदा पतस्ते मम ।

अङ्के चेन्नव दृश्यते, भवति चेन्नूनन्त्वयैवार्पितं

नीला गच्छ, मुखे तवास्ति यदयं रागस्तदाङ्कजः ॥ ४९

ईर्ष्यामानो यथा—

सहजमरुणं नेत्रद्वन्द्वं तवाधरपल्लवः

सततमुरलीनादक्रीडाविधौ तव सव्रणः । A little differently read as Kirana III (sl 27)

वनविहरणे रात्रौ गात्रं सकण्टकलाञ्छनं

कथमिह विना दोषं जातापराध इव स्थितः ॥ ५०

अथ प्रवासः—भूतविरहप्रवासयोः कालदेशकृत एव भेदः ।

नानाकौशलतः शतानि सुहृदां हन्तेन नानन्दतो

गव्यान्यपि, तया कवोष्णमधिकं राधे ! श्वसितैरथ सः ।

गोपसुहृदः कथामाकर्ण्य प्रियसखो प्रतिदिनं रह एकान्त आगत्य मिलितस्तिमभिकेको देशां विंशद्दिवमस्य समागमाभावार्थं लुम्पति ।

मानस्तिष्ठत्विति—मानकारणमीर्ष्यादिकं विनैव प्रेम्णः कुटिलगामित्वात् प्रणयातिरेकेणैव मान इत्यर्थः । हे राधे ! तव मानस्तिष्ठतु, मम रक्तं रागविशिष्टं श्लेषेणैव रागस्य रक्तत्वमारोप्य रक्तपदार्थविशिष्टं मनो देहि । राधाऽऽह—तन्मनः केनापहृतम् ? श्रीकृष्ण आह—त्वयेति । राधाऽऽह—न होति । पुनः श्रीकृष्ण आह—तवाङ्के यद्य तिष्ठति मम मनः तदि चेन्न दृश्यते तदा किं भविष्यति ? राधाऽऽह—ममाङ्के चेद्भवति तदा त्वन्मनस्त्वयैवार्पितं स्वमेव नीत्वा गच्छ । तच्छ्रुत्वा श्रीकृष्णः सहर्षमाह—तव मदीयरक्तमनमस्त्वदधरेण सह सम्बन्धात्तो यो रागः स तु तव मुखमध्येऽस्त्येवास्ति, अतो मनोधर्मरागस्य दर्शनेन मन्मनोऽपि तवैव वर्तते, अतएव त्वद्वाक्यं मदत्र यन्मनोऽत्यन्तं तदर्थं यथाविधि गम्योऽर्थो बोध्यः । प्रणयजन्यमाने नायिकायाः सम्प्रति किञ्चिदपि कार्यं दोषो नास्तीत्यपि ज्ञेयम् ।

सहजेति—तव नेत्रद्वन्द्वं सहजमरुणं, न तु तस्याजागरणाजन्यम् । एवमधरपल्लवोऽपि सततं मुरलीक्रीडयैव सव्रणः, न तु तस्या दन्ताघातेन । वनविहरणे एव रात्रौ सकण्टकलिङ्गं, न तु तस्याः नखाघातम् । अतो दोषं विना जातापराधवत् स्थितोऽसि,

त्वत्पल्लीप्रतिवेशपण्यजनताक्रय्यन्तु दध्यादिकं
क्रीत्वा सम्प्रतिपादितं प्रियजनैरश्नाति हृष्टान्तरः ॥ ५१

अथ सामान्यतो वर्णितस्य विभावस्यालौकिकतया विशेषमाह—

तत्रालम्बनं नायको नायिकाश्च ।

तत्र कोऽसौ नायकः काच नायिका इत्यपेक्षायां नायकमाह—

**सर्व्वशुद्धरसछन्दकन्दलः सर्व्वनायकघटाकिरीटगः ।**
**अत्यलौकिकगुणैरलङ्कृतो गोकुलेन्द्रतनयः सुनायकः (ऐ)॥८०का**

सर्व्वशुद्धरसछन्दकन्दलत्वं यथा—'शृङ्गारी राधिकाया'मित्यादि (१श्य श्लोके)।

'सर्व्वनायकघटे'ति सर्व्वशब्दो धूर्त्तनायकवर्ज्जनपरः। 'अत्यलौकिकगुणै'-रिति विरुद्धाविरुद्धचमत्कारिगुणवान्। विरुद्धयन्नाप्यते, न तु विरुद्धः स विरुद्धाविरुद्धः—'एकोऽनेकः परिच्छिन्नो व्यापी'त्यादिवदलौकिकगुणवति लौकिकगुणा अपि ज्ञेयाः।

एतावद्दिनपर्य्यन्तं कान्तेन सह विच्छेदो जातः, अवधिवासरे पुनरपि तेन मेलनं भविष्यतीति कालकृतविरहो भूतविरहः। मां विहाय श्रीकृष्णो दूरदेशे स्थित इति देशघटितविरहः प्रवासः। हे राधे! त्वद्विरहेण व्याकुलः श्रीकृष्णः सुन्दरीं यादवादीनां वृन्देन शतानि गच्छन्ति मानस्तेनास्ति। तथा सेदानीं कवोष्णं दुग्धादिकमधिकं न भुङ्क्ते, किन्तु प्राणरक्षार्थं यत् किञ्चिदेव—अतएव केवलं श्वसित्येव जीवत्येव, न तु तस्य किञ्चिदपि सुखमत्र वर्त्तते। किन्तु तव पल्लीग्रामस्तत्रस्था या प्रतिवेशपण्यजनता क्रयविक्रयादि-व्यवहारविशिष्टजनसमूहस्तेषां क्रय्यं क्रये प्रसारितं दध्यादिकं तस्याभिप्रायविद्भिः प्रियपरिजनैर्म्मधुमङ्गलादिभिः क्रीत्वा सम्प्रतिपादितं यत्नेन संस्कृतं तदेव हृष्टान्तरः सन्नश्नाति।

---

(ऐ) 'तत्रालम्बनं नायको नायिकाश्चे' त्यत्र नायकपदे यदेकवचनप्रयोग इतरत्र बहुवचन-विन्यासश्च तत् ग्रन्थकृतो स्वसम्प्रदायिमतसम्मतिं स्फुटमावेदयति। नचानेन तावदितरा-लङ्कारिकवर्गकल्पिते प्राकृतनायकसङ्घे दोषदृष्टिराघुष्यते यतस्तस्मिन्नपि महनीय-महिमत्वादिगुणगणभूषितता वरीवर्त्ति। तथापि 'सर्व्वशुद्धे'त्यादिपदैस्तावदेकस्यैव परामर्शो भवति—स चायं साक्षात् भगवान् श्रीकृष्णोऽत्यन्वर्थनामरूपच्छन्नो मन्मथजनकोऽपि स्वयं मन्मथमन्मथः। श्रीमद्भागवतमहापुराणे भक्तिशास्त्रे च बहुधा विजृम्भित-स्तस्य निर्द्देशक्रम इत्यलम्। 'सर्व्वशुद्धरसे'त्यादि पदस्यैकधा व्याख्या मूले लक्षिता, अन्यथा

ते यथा—

कृती कुलीनः सश्रीकस्त्यागी यौवनरूपभाक् ।
दक्षोऽनुरक्त उत्साही तेजोवैदग्ध्यभूषितः ॥ ८०(क)का

A little differently read in Bhagavata-purana-I. 16. 26 29.

अधिकास्तु—

सत्यं शौचं दया कान्तिरास्तिक्यं धैर्य्यमेव च ।
औदार्य्यं प्रश्रयः शीलं क्षान्तिः प्रज्ञोऽनहङ्कृतिः ॥ ८०(ख) का

इत्यादयो नित्याः ।

तत्र 'नायकघटे'ति तद्भेदानाह—

उदात्त उद्धतश्चैव प्रशान्तो ललितस्तथा ।
सर्व्वेऽमी धीरशब्दाद्याश्चत्वारो नायकाः स्मृताः ॥ ८१का॰

सर्व्वशब्द इति—धृतनायकं वर्णयित्वा या सर्व्वनायकघटा तस्याः सङ्कटमपि । यद्यपि धीरोद्धतस्य गुणाः धीरप्रशान्तस्य गुणाश्च परस्परं विरुद्धा भवन्ति तथापि श्रीकृष्णे तेषां विरोधो नास्ति—यथा श्रीकृष्ण एकः सन्ननेकोऽपि भवति, एवं परिच्छिन्नः सन् व्यापकोऽपि भवति, तथैव विरुद्धगुणाश्रयोऽपि भवति । अलौकिकगुणवतीति—लोके न प्रसिद्धा ये गुणास्तद्वति श्रीकृष्णे लोकप्रसिद्धा गुणा अपि ज्ञेयाः, किन्तु लोकस्यासौ मायिकाः, भगवन्निष्ठा अमायिका इति भेदो ज्ञेयः ।

प्रश्नो गम्यता । अमी उदात्तादयश्चत्वारो 'धीर' शब्द आद्य आदौ येषां तथाभूताः । तथा च धीरोदात्त धीरोद्धत धीरशान्त-धीरललिता इतिसंज्ञा भवन्तीत्यर्थः ।

---

च वैष्णवरसशास्त्रकारैः पदं तदाकृतं, तथात्वे 'शुरद्वर'पदेन मधुररसस्यैव परिग्रहः, मम्मतो—तस्मादितररसानामनुपपत्तिः प्रागेवास्माभिरुल्लिखिता । 'वृन्दारण्ये विहरते' इत्यादि स्कन्दपुराणीयं पूर्वप्रदर्शितं पद्यं, 'कैतवरहितं पेम्मो णहि होइ माणुषे लोए । जइ होइ कस्स विरहो विरहे होन्तम्मि को जीअइ ।' इति 'जयति ते' इत्यादिकस्य श्रीमद्भागवतीयस्य (१०।३१।१) श्लोकस्य तात्पर्य्यप्रकटनप्रसङ्गे तोषणीकृता धृतञ्च व्यायत्तमार्थं प्रमाणम् । 'गोकुलेन्द्रतनये'ति विशेषणेन व्रजपुरसम्बन्धस्य शृङ्गारकृत्ये निदानमिति च सूचितमिति प्रतिभाति । 'स्फुरितोष्ठपुटम्' इत्यादि गौतमीयतन्त्रे गोपीशवर्णनं व्रजपुरीयाद्यपिधानाभिप्रायकम् । भक्तिरसस्य प्राधान्येन मुख्यत्वेन च तत्रैव प्रकटनम् । 'गोगोप-गोपिकासङ्गे यत्र क्रीडति कंसहा' इति 'व्रजपुरवनितानां

धीरशब्दाद्या इति—धीरोदात्तादय इत्यर्थः। तत्र धीरोदात्तो यथा—

आत्मश्लाघारहितः क्षमी गभीरो महासत्त्वः।
धीरोदात्तः स्थेयान्निगूढ़मानो दृढ़व्रतः सुवचाः॥ ८२ का
आत्मश्लाघानिरतो मायी चण्डश्च चपलश्च।
धीरोद्धतः स कथितोऽहङ्कृतिभङ्कारनिःशङ्कः॥ ८३का
उभयगुणव्यतिरिक्तो भूयान् साधारणैस्तु गुणैः।
धीरप्रशान्तसंज्ञो भवति द्विजवैश्यादिकः साधुः॥ ८४ का
मृदुलः कलाकलापी निश्चिन्तो मधुरवैदग्धः।
प्रथमरसप्रधानो ललितकथो धीरललितः स्यात्॥ ८५का
सर्व्वोऽनुकूल-दक्षिण-शठ-धृष्टत्वेन षोड़शधा॥ ८६ का

तेषां चिन्मते धीरललितस्यैवानुकूलादिभेदाः, न सर्व्वेषाम्।

महासत्त्वः उदारचित्तः, स्थेयानतिशयस्थिरः। अहङ्कृतिरहङ्कारस्तेन यो भङ्कार आत्मश्लाघाबोधकशब्दप्रयोगस्तत्र निःशङ्कः। उभयगुणाभ्यां धीरोदात्तगुणधीरोद्धतगुणाभ्यां रहितो धीरशान्तः साधुर्व्वाग्दर्शितसाधारणगुणैर्व्विशिष्टः स भूयान्, धीरोदात्तादिः स्वल्पः, तथा च ब्राह्मण-वैश्यादयो बहव एव धीरशान्ता ज्ञेयाः। कलेति—रमोपयोगिचतुःषष्टिकलाभिर्भूषित इत्यर्थः। मधुरे शृङ्गाररसे वैदग्ध्यं यस्य, शृङ्गाररस एव प्रधानं यस्य।

---

वर्द्धयन् कामदेव'मित्यादि च तदैश्वर्यं तदैकान्तिकत्वं च सूचयतः। 'सर्व्वनायकघटे'ति 'सर्व्व'शब्दो धूर्त्तनायकवर्ज्जनपर' इति हर्षी यत् पश्यन्ततो मतं । तत् सार्व्वत्रिकं सर्व्ववादिसम्मतञ्च। तथा च 'गोक्तो धूर्त्तादिभेदस्तु हरेः सम्भवभावतः' 'शाठ्यधार्ष्ट्य परं नान्यप्रोक्त उपपतेरभे। हरौ तु सर्व्वं नायुक्तं तत्तद्भावस्य सम्भवात्॥' इति श्रीमतो नीलमणिकारामाशयव्याख्यानपुरःसरमभिधानम्। इह कौस्तुभेऽपि च 'लीलावशात् कदाचन धृष्टोऽपि शठश्च क्वापि" (८८ का)। नवतारुण्यत्व-नारीमोहनत्व-नित्यनूतनत्वातुल्यकेलिसौन्दर्य्यप्रष्टवंशीस्वनाढ्यत्वादयो बहवस्तत्रालौकिकगुणाः प्रामाणिकरसग्रन्थान्तरतो लभ्याः। 'यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्ति। कुर्व्वन्ति चैषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने॥" इति श्रीमद्भागवते साधारण्येन, हृत्तिप्रतीकप्रदर्शितेन विरुद्धाविरुद्धनित्यचमत्कारिगुणवत्त्वेन ।वा तेषां

एषां लक्षणम्—

एकाश्रितोऽनुकूलः समरागो दक्षिणस्तु सर्व्वासु।
शठ एकत्रैव रतो वहिरन्यत्र प्रियोऽप्रियो मनसि॥ ८७क॥
अपराद्धश्च विशङ्को दृष्टे दोषेऽपि मिथ्यावाक्।
तर्ज्जनताड़नयोरपि कृतयोर्न्निर्लज्ज एव धृष्टः स्यात्॥८८क॥
षोड़शविधास्त एते पुनस्त्रिधा चोत्तमादिभेदेन।
अष्टाधिकचत्वारिंशद्भेदा नायकाः कथिताः॥
पुनरेते खलु दिव्या दिव्यादिव्या अदिव्याश्च।
स चतुश्चत्वारिंशच्छतमेकं तेन तद्भेदाः॥

एषामनुकूलादीनां लक्षणमाह—एकामेव नायिकामाश्रितोऽनुकूलः, सर्व्वासु नायिकासु समरागो दक्षिणः, एकस्यामेव नायिकायां रतोऽन्यत्र नायिकायां मनस्यप्रियः, वहिस्तु कपटेन प्रियः शठः।

पुनरेतेऽष्टचत्वारिंशद्भेदा नायका दिव्या अदिव्या दिव्यादिव्याश्च भवन्ति, तेन चतुश्चत्वारिंशता सहैकशतं नायकभेदा भवन्ति।

---

परामर्शः। एषान्तु वैष्णवशास्त्रनिरूपितेन 'लीला'पदेन प्रायशः परिचयो भवति। श्रानन्दचन्द्रिकोद्धृतवचो 'लीला प्रेम्णा प्रियाधिक्यं माधुर्यं वेणुरूपयोः। इत्यसाधारणं प्रोक्तं गोविन्दस्य चतुष्टयम्॥' सेयं लीला नित्यैव—तथा हि "यथा च सूर्यस्य वर्षदेश-विशेषवशात् सदैवोदयः सदैव पूर्व्वाह्णः सदैव मध्याह्न इत्यादि तथैव कृष्णस्यापि ब्रह्माण्डभेद-वशात् सदैव जन्म सदैव बाल्यं सदैव वकासुरमोक्षं सदैव मथुराप्रस्थानमित्येवं सर्व्वा एव प्रकटलीला नित्या एव' इति ग्रन्थान्तरे। लीलयैवाभिव्यक्तिर्भगवतो भक्तसाधक-सम्प्रदायस्वकार्ये भवति। प्राकृतनायकेषु मदोन्मत्तत्वादिलौकिकगुणानां सम्भवेऽपि न नैष्ठिकभक्तिरिमाः विनाश्य व्यवहारिणि वादं तथम्। एवमपि च कश्चित् प्रतीच्यभावुक-सुधामनिः (mystic) प्रबन्धान्तरे—

'If in the emotion that this sight cause you, you do not proclaim that it is beautiful and if turning your gaze into your own heart, you do not then feel the charm of beauty, it is vain for you in such a mood to seek for intelligible beauty, for you would only seek it with what is impure and ugly.'—Plotinus

धीरप्रशान्तशठयोर्दृष्टस्य च भेदवर्ज्जितैरपरैः ।
लीलावशतः सर्व्वै रविरुद्धत्वादिह रूढेऽपि ।
गोकुलराजकुमारस्तेन परं सर्व्वनायकाधीशः ॥
धीरोदात्तो गुरुषु ज्ञातिषु धीरोद्धतो विपक्षेषु ।
मायाविषु नियतमसौ व्रजपुर्य्यां धीरललितः स्यात् ॥
अनुकूलो राधायां सर्व्वास्वपरासु दक्षिणः कथितः ।
लीलावशात् कदाचन धृष्टोऽपि शठश्च कुत्रापि॥(ञो)८६का

अथानुकूलादीनां क्रमेणोदाहरणानि—तत्रानुकूलो यथा—
नान्यस्याः सदनं (२१) प्रयाति स मया सम्प्रार्थ्यमानोऽपि च
प्रायो मे हृदयन्दुनोति ललिते ! तासां मनस्तापतः ।

धीरप्रशान्त-शठ भेदभिन्नैरपरैर्धीरललितधीरोदात्तादिभिर्भेदैर्विशिष्टो गोकुलराजकुमारः कदाचिल्लीलावशादिहरूढाविरुद्धधीरप्रशान्तादिभिः सर्व्वैरेव भेदैर्विशिष्टश्च भवति। तेषां परस्परविरोधेऽपि सति लीलयाऽविरुद्धत्वात्तेन हेतुना लीलया एव परं सर्व्वनायकाधीशः। एतदेवाह—गुरुषु ज्ञातिषु च धीरोदात्तः, विपक्षेषु मायाविषु च धीरोद्धतः, धीरप्रशान्तो भक्तेषु, व्रजपुर्य्यान्तु सदैव धीरललितः।

---

referred to by Maeterlinck in his *Le Tresor des Humbles* and translated and discussed by M. Clark in his *Maurice Maeterlinck—Poet and Philosopher.*)

(ञो) नन्दनन्दनस्य वृन्दावनरसकन्दस्यातुलगुणवृन्दारिकाधिकतरानन्दचिन्मकरन्दस्य गोपीरतिरसरोचिष्णो मेदुरजलधरशोभिनः सकलकलाकलापश्रीधरस्य पुरुषवरस्य विभिन्नभावदेशाश्रयेणैव तावन्नानात्वतो निर्द्देशः।

भरतनाट्यशास्त्र-शृङ्गारतिलक-दशरूपक-भावप्रकाश-रसमञ्जरी-रसार्णवसुधाकर-साहित्यदर्पण-रसामृतसिन्धूज्ज्वलनीलमण्यादिषु निबन्धेष्विव परमिहापि नायकभेदप्रस्तावावतरणम्। तथाच भगवतः सुनायकत्वं परमन्येषां प्राकृतानां नायकत्वं न शाश्वतमिति प्रदर्शयितुं तद्भेदावतारः कृतो वा। भरतीये रसामृतसिन्ध्वादिग्रन्थेषु चतुर्णामेव धीरोदात्तादीनामुल्लेखः। भरतीये तु नाट्यप्रोक्तेषु नायकभेदेषु 'देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता

---

(२१) 'सदयं प्रयातीति मुद्रितपुस्तके दृष्ट' पाठो दृश्यते ।

आरामे रमते ममैव सततं मद्वर्त्म संवीक्षते
स्वप्नेऽपि प्रतिकूलतां न गतवान् कृष्णः सतृष्णो मयि ॥ ५२

एवमेकत्र श्लोकेऽप्यलौकिकनायकत्वाद्दक्षिणोऽपि। तद्यथा—

श्यामाङ्के चरणौ कलोरुफलके ग्रीवां सुरेखाङ्गुली
केशांश्चामरचालिकाभुजतटे दृष्टिं प्रियोक्तौ श्रुतिम्।
ताम्बूलार्पणिकाकरे करपुटीं कस्तूरिकोरस्थल-
चन्द्रावल्यपि पृष्ठमर्पयदहो निद्राति नीलं महः ॥ ५३

एवं दक्षिणोऽपि लीलावशात् कदाचिद्धृष्टोऽपि भवति। तद्यथा—

चन्द्रावलीति कपटेन निगद्य राधां
जातापराध इव सङ्कुचितः सखीभिः।
सम्भर्त्सितोऽपि स तया श्रवणोत्पलेन
सन्ताडितोऽपि विजहास न सम्बिभाय ॥ ५४

स ममैवारामे उपवने रमते।

महारासान्ते स्वयमेव बहुश्रमं नर्त्तित्वा विश्रामं कुर्वतः श्रीकृष्णस्य वर्णनमिदं 'श्यामाङ्के' इति पद्यम्। कला चन्द्रावल्याः सखी तस्या ऊरुप्रदेशे ग्रीवाम्, एवं सुरेखा काचिद्गोपी तस्या अङ्गुलौ केशान् समर्पयन् सन्नीलं महः श्रीकृष्णो निद्रातीत्यन्वयः। प्रिया श्रीराधिका, तस्या उक्तौ चपलम् अपिदधातीति यावत् श्रुतिम्। कस्तूरिका श्रीराधिकायाः सखी तन्निर्देशवशा, अतएव तस्या वक्षःस्थले श्रीकृष्णस्योरः वक्षःस्थलम्। अत्र दक्षिणपार्श्वे वामपार्श्वे वा सुप्तस्य श्रीकृष्णस्य पृष्ठदेशलग्ना चन्द्रावली, सम्मुखे वक्षःस्थललग्ना कस्तूरिका, ग्रीवालग्ना कलाया ऊरुदेश एव—एवम्प्रकारेण शयनक्रमो ज्ञेयः।

राधामुद्दिश्य 'हे प्रिये चन्द्रावली'ति कपटेन निगद्य जातापराधेव, मत्सपराधेन कदापि भीतो नाभूदित्यर्थः।

---

ष्टाः। शैलार्णवसमाद्याश्च धीरोदात्ताः प्रकीर्त्तिताः। आख्या चक्रिणश्चैव प्रोक्ता धीर-प्रशान्तकाः॥' इति कथञ्चित् विभिन्नग्रन्थालोचनमिश्रक्रमः कोऽपि विभागो दर्शितः। दक्षिणपक्षे धीरोदात्तादिभिश्चतुर्भिर्दक्षिणादिचतुर्भिर्विभेदैरष्टधा षोडशधा भागो लक्षितः। [illegible] एवं श्रीकृष्णो [illegible] प्रतिष्ठापितम्, एव [illegible] भेदः। 'पतिश्चोपपतिश्चेति प्रभेदाविह विश्रुतौ।'

एवं कुत्रचिच्छठोऽपि । यथा—

एकत्रैव लताघने निजनिजैरालीजनैः कुत्रचित्
क्रीडाकुञ्जगृहाङ्गने व्यवहितौ दूरेण दृष्ट्वा प्रिये ।
वंशीकूजितसूचितातिनिभृतं चन्द्रावलीं लम्भयन्
सङ्केतन्त्वरसा रसादभिसरन् राधां हरिः पातु वः ॥ ५५

अथ विभावप्रसङ्गे नायकस्य सहायाः सखायः, एवं नायिकायाः सख्यः । तेनादौ नायकस्य सहाया लक्ष्यन्ते ।

**सहायाः स्युः सहचरास्ते भवन्ति चतुर्विधाः ।**
**सखायश्च प्रियसखास्तथा नर्मसखा अपि ॥**

अथैकस्मिन् कुञ्जे सखीभिः सह राधाचन्द्रावल्यौ । लताऽद्यैर्व्यवहितः श्रीकृष्णो दूरत एव दृष्ट्वा राधां चन्द्रावलीवियुक्तां कर्तुं दूरे सङ्केतकुञ्जं गत्वा मुरलीशब्देन चन्द्रावलीमाजुहाव, तं शब्दं चन्द्रावल्येव शृणोति, नान्या तस्या अचिन्त्यप्रभावत्वात् । तच्छ्रुत्वाऽति हृष्टा चन्द्रावली सखीभिः सहिता केनचिन्मिषेण तत उत्थाय तदैव सङ्केतस्थलं जगाम । ततः श्रीकृष्णः सुखेन राधिकामभिससार । एतदेवाह-एकत्रैवेति । एकत्रैव लताघनं याभ्यामित्यनूर्ति प्रिये राधाचन्द्रावल्यौ लताऽद्यैर्व्यवहितः श्रीकृष्णो दूर एव दृष्ट्वा वंशीशब्देन सूचितमतिनिभृतं सङ्केतस्थलं लम्भयन् अत्यन्तरसा वेगेन रसादानन्दात् राधामभिसरन् वो युष्मान् पातु ।

---

'उदात्ताद्यैश्चतुर्भेदैस्त्रिभिः पूर्णतमादिभिः (पूर्णः पूर्णतर-पूर्णतमाख्यैरिति) । द्वादशात्मा चतुर्विंशत्यात्मा पत्यादियुग्मतः । नायकः सोऽनुकूलाद्यैः स्यात् षण्णवतिधोचितः ॥' इत्युज्ज्वलनीलमणौ । तत्र नीलमणौ कृष्णे उत्तमादिभेदकल्पनं न सम्यक्, अतस्तत्स्थले पूर्णतमादितारतम्येन भेदकल्पना । दिव्यादिभेदस्यापि स न विषयः—इतरनायकेष्विव न तत्रौपपत्यासङ्गतिरपि, अतः संख्यानयनवैमत्यमित्यलं बहुना । एषां भेदानां प्रत्येकशो भिन्नान्युदाहरणानि दर्पणनीलमण्यादिषु निबन्धेषु स्पष्टानि । अनुकूलनायकस्य विश्वप्रसिद्धमुदाहरणं रामायणकथानायकः सच्चरितनिकषो दिव्यादिव्यः श्रीरामचन्द्रः, वैष्णवतन्त्रस्थितौ तु 'राधायामेव कृष्णस्य सुप्रसिद्धाऽनुकूलता । यदालोके कदाप्यस्य नान्यासङ्गः स्मृतिं भजेत् ॥' इति कृत्वा तस्यैव तथात्वेन निर्देशो ज्ञेयः एवमेव श्रीगीतगोविन्दे "राधामाधाय हृदये तत्याज व्रजसुन्दरीः ॥" अनुकूलस्य दक्षिणस्य च तस्य देशपात्रकालादिप्रभूततमभेदकलनया धृष्टत्वं शठत्वं वा कादाचित्कमिति नान्याय्यम् । मधुररसकदम्बस्य भगवतो धृष्टत्वेन

प्रियनर्म्मसखाख्यान्ये तेषु दूतस्त्रिधा मतः ।
निसृष्टार्थो मितार्थश्च (२२) तथा सन्देशहारकः ॥
द्वयोरिङ्गितमादाय स्वयमुत्तरदायकः ।
सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थः स उच्यते ॥
प्रमितं वक्ति कार्य्यस्य चान्तं याति मितार्थकः ।
यथोक्तमेव वदति यः स सन्देशहारकः ॥ ९०का

एषं दूत्योऽपि—यथोदाहरिष्यन्ते (पो) ।

तेषु सखिषु मध्ये प्रियनर्म्मसखा एव दूताः, नान्ये—ते दूतास्त्रिधा भवन्ति । निसृष्टो दत्तोऽर्थः कार्य्यभारो यस्मै तथा ताभ्यां किमपि न वक्तव्यम्, यावदयोर्म्मिलनं यथा भवति तथा त्वयैव बुद्ध्या कर्त्तव्यमिति विन्यस्तकार्य्यभारो निसृष्टार्थ इत्यर्थः । प्रमितस्ताभ्यां यद्यदुक्तन्तदेव परिमितं वक्ति, किन्तु द्वयोर्मिलनरूपकार्य्यस्यान्तं सीमानं याति प्राप्नोति, तथा च कार्य्यमवश्यङ्करोतीत्यर्थः । ताभ्यां यथोक्तं तथैवोभयोर्निकटे गत्वा वदति, कार्य्यं भवतु मा भवतु वेति कोऽपि भारस्तस्मिन्नास्तीति सन्देशहारकः । यथा पुरुषा दूतास्तथा स्त्रियोऽपि दूत्यः सन्ति । उदाहरणे तासां दूत्यं व्यक्तीभविष्यतीत्यर्थः ।

शठत्वेन या वर्णनया नायिकास्वानीयभक्तचयस्वान्तेष्वधिकतरा चमत्कृतिरुदेतीति च निपुणविभाव्यं तत्त्वम् ।

(पौ) मधुरापरपर्य्यायशृङ्गाररसभेदे सुख्यरसं प्रकल्प्य चेट-विट विदूषक पीठमर्द-प्रियनर्म्मसखाः पञ्च नायकसहाया इति वक्तव्ये—'चतुर्व्विधाः सहायोऽत्र चेटः किङ्कर इष्यते' इति नीलमणौ । सहायगुणाश्च तत्रैव मोदाहरणं दर्शिताः । अत्र चेटविटानां न प्रस्ताव विस्तारः । गोकुले कडाराद्या विटाः, भङ्गुर-भृङ्गाराद्याश्चेटाः, मधुमङ्गलो विदूषकः, श्रीदामा पीठमर्दः, सखीभावं समाश्रितः सुबलः प्रियनर्म्मसख इति वैष्णवतन्त्रोक्तिः, तत्र 'उत्तमा पीठमर्द्दाद्या मध्यौ विटविदूषकौ । तथा शकारचेटाद्या अधमाः परिकीर्त्तिताः ।' इति दर्शनं । कृतदूतीविभागविस्तारो नीलमण्यानेव सत्यः । प्रियनर्म्म सखस्य सन्देशः कार्य्यनि दायो वनाय वा [illegible] । सा कथनि निसृष्टार्थां सर्व्वप्रकाशकान्ते दूती ।

[illegible] । वंशीदूती, वीरावृन्दादिरामदूती, पौर्णमास्यादिर्लिङ्गिनी दूती—एताभिरपि नायिकासम्मोदयोगिनि निविशमसदानम् ।

(२२) 'निसृष्टार्थो मितार्थश्च' इति (क) (ख) (ग) पुस्तकेषु पाठः । एवं कारिकायां [illegible] 'सार्थक [illegible]' इति [illegible] पाठः । [illegible] पाठ [illegible] ।

अथ नायकानामुक्तनियतसामान्यगुणादतिरिक्ताः सत्त्वजा गुणा उच्यन्ते—

शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी ।
औदार्य्यं ललितञ्चेति गुणा अष्टैव सात्त्विकाः ॥ ६१ का

तत्र शोभा (23)—

शौर्य्यं दाक्ष्यञ्च सत्यञ्च महोत्साहोऽनुरक्तता ।
घृणा नीचेऽधिके श्रद्धा (A) सा शोभा मिलितोच्यते ॥ ६२ का

यथा— शौर्य्यं शत्रुषु दाक्ष्यमत्र कुहने सत्यं भुवो धूःक्षये
रागो गोकुलमध्यवर्त्तिषु महोत्साहो गिरेर्धारणे ।
स्नेहं पितृमातृबन्धुषु हरे शोभैव ते सर्व्वथा (24)
नीचे मय्यघृणेति केवलमसावेकाङ्गहीनाऽभवत् ॥ ५६

सत्त्वजा इति- शुद्धसत्त्वाच्चित्ताज्जाता इत्यर्थः।
मिलितेति—शौर्य्यादय, परस्परं मिलिता, सन्त एकाधिकरणे वर्त्तन्ते चेत्तदा शोभोच्यते।
व्याजकुहने रासारम्भे गोपीभिः सह प्रेमपरीक्षार्थं छलनकपटे दाक्ष्यं सम्यक्तया क्षिप्रकारित्वमित्यर्थः। भुवः पृथिव्या भारक्षये। हे हरे! मयि नीचे ते तवाघृणा अकृपा, अतस्तव शोभैकाङ्गहीनाऽभवत्।

---

(A) भरतनाट्यशास्त्र दशरूपक रसार्णवसुधाकरादिग्रन्थेषां विस्तारः। यद्यप्यर्वाचीन-ग्रन्थेभ्य आकरादितो लक्षणलक्ष्ये किमपि वैलक्षण्यं न तत् सर्वंशानुपादेयम्। वस्तुतस्तु सुनिश्चितलक्षणानां भित्तिमूलत्वे स्वीकृतेऽपि स्मृतिमान्द्यात् व्याख्यानभेदात् मतान्तर-कल्पनस्याप्यादरणीयत्वान्न किमपि सिद्धान्तपक्षे लक्षणवैलक्षण्यविवादावसरे वक्तव्यमस्ति। लक्षणवैलक्षण्यमपि सगुणलक्षण एव सुतरां परीवर्त्ति। 'अधिके स्पर्द्धे'ति दर्पणकारादीनां लक्षणे पाठो लभ्यते। 'अधिके श्रद्धे'ति कौस्तुभकृतः। इदानीन्तनलब्धे भरतीये नाट्यशास्त्रे २४शाध्याये ( निर्णयसागरमुद्रिते तु २२शाध्याये ) शोभालक्षणमित्थमुद्दिष्टम्—'दाक्ष्यं शौर्य्यं मथोत्साहो नीचार्थेषु जुगुप्सनम्। उत्तमैश्च गुणैः स्पर्द्धा यत्र शोभेति सा स्मृता॥' स्पर्द्धास्थाने श्रद्धायाः ग्रहणं वैषम्याचारसम्पन्नमिति नास्ति कापि विप्रतिपत्तिः, उदाहरणे च चमत्कारिताप्रसङ्गोऽस्मादेव कारणाल्लक्ष्यः। एवमपि विलासादिगुणानां प्राचीनमत

---

(23) अयमंशः (ख) (ङ) पुस्तकयोर्नास्ति।

(24) 'सर्व्वदेति, (क) (ख) (ङ) पुस्तकेषु पाठः।

रम्यवेशविभूषाद्यैर्विलासः शिल्पकौशलम् । ६३का-

तच्च स्वविषयमन्यविषयञ्च । यथा

क्वचिद् गुञ्जाधातुस्तवकदलबर्हप्रभृतिभि-
र्वनेऽनल्पाकल्पैः प्रणयिसखिभिर्भूषिततनुः ।
स्वयञ्चैषा वेशानतिकुतुकतः शिल्पकुशल-
स्ततोऽप्युच्चैर्विलासान् हरिरहह तेनैव तनुते ॥ ५७

अन्यविषयेऽन्यदपि ।

गुञ्जाशिखण्डगिरिधातुदलप्रसूनै
राधां विभूष्य मुरलीञ्च करे निधाय ।
पीताम्बरञ्च परिवेष्ट्य हरिः प्रमोद
हे कृष्ण मय्यनुगते कृपयेत्यवादीत् ॥ ५८

'संक्षोभेऽपि निरुद्वेगभावो माधुर्य्यमिष्यते ।' इति केचित् ।
केचित्तु 'सर्व्वावस्थाविशेषेषु माधुर्य्यं रमणीयता ।' Sahityadarpana Chap III under भावादिबालङ्कार ।

वस्तुतस्तु

येन केनापि वेशेन माधुर्य्यं रमणीयता (A) । ६४का

यथा—

क्व रत्नालङ्काराः क्वचन वनवेशो (25) मुरहरे
न तत् पश्याम्यस्मिन् यदतिमधुरत्वं न लभते ॥ ५९

**भीशोकक्रोधहर्षाद्यैर्गाम्भीर्य्यमविकारिता। ९५ का**

'नो कथ्यते किमु कथाविषयो यदि स्या'दित्यादि (४३श्लोके)।

**स्वभावादप्रतिच्यावो धैर्य्यं शोके महत्यपि ॥ ९६ का**

यथा— किमेषा तापिञ्छद्रुमलतिकया मञ्जुधिया
स्वकण्ठं तन्वङ्गी शिवशिव दृढं पीड़ितवती।
स्थिता वा कालिन्दीपयसि मम वक्षःस्थलधिये-
त्यमुष्येते तर्काः परमहह जीर्य्यन्ति हृदये ॥ ६०

**अवक्षेपावमानादेः प्रयुक्तस्य परेण यत्।**
**निर्वापकं भवेत्तेजः— ९७का**

यथा— मदान्धेनेन्द्रेण स्वमखविधिभङ्गव्यसनिना
महावृष्टिं सृष्टां व्रजनगरनाशाय कलयन्।
गिरीन्द्रं श्रीकृष्णः करकिसलयाग्रेण मृदुना
सलीलम्बिभ्राणो व्रजमवितवांस्तञ्च जितवान् ॥ ६१

स्वमतमाह—वस्तुतस्त्वित्यादि। उरसि वक्षःस्थले गुञ्जादाम एवं स्तवकयुक्तलताखण्डश्च—अस्मिन् श्रीकृष्णे तद्वस्तु न पश्यामि यदतिमधुरत्वं न लभते।

महत्यपि शोके स्वभावादप्रतिच्यावोऽचलनं धैर्य्यम्। माथुरविरहेऽत्यन्तव्याकुलां राधां मत्वा स्वयमपि व्याकुलः श्रीकृष्णः स्वगतमाह—किमेषेति। एषा मञ्जुबुद्धा तमालद्रुमस्य शाखया स्वकण्ठं पीड़ितवती, अथवा मद्वक्षःस्थलधिया कालिन्दीजले स्थितेति नानाविधतर्का अमुष्य श्रीकृष्णस्य हृदय एव जीर्य्यां भवन्ति—न तु बहिः कोऽपि विकारः प्रकटीभवतीति भावः।

परेण कृतस्यावक्षेपावमानादेः प्रतिकारं विनैव स्वत एव निर्व्वाणजनकं यद्भवति तत्तेजः। स्वस्य मखस्य भङ्गाज्जातं व्यसनं श्रीकृष्णे कटूक्त्यादिकं यस्य। तेन सृष्टां वृष्टिं पश्यन्।

---

धैर्य्यादि लक्षणं दशरूपकादिसम्मतं, द्वितीयन्तु नाट्यशास्त्रादौ नायिकासात्त्विकभावानामन्यतमस्य माधुर्य्यस्य निदर्शकम्। इत्थं कुत्रचित् ग्रन्थकृन्नायकगुणलक्षणविचारे प्राचीनोक्तनायिकागुणसंवादस्थेच्छितः, स च न सर्व्वथा शोभन इत्यलम्।

---

(25) 'क्व वनचरवेश' इति (क) पुस्तके पाठः।

अथ नायिकाभेदाः—

तत्र 'परोढ़ां गणिकाञ्चापि वर्जयित्वाऽत्र नायिका'इति परोढ़ागणिकयोः साधारणेन रसाभासपरत्वमेवेति (26) लौकिक एव । अलौकिके तु कृष्णाधिकरणक-रतेस्तदेकमात्रनिष्ठत्वान्न रसाभासः, 'अनौचित्यप्रवर्त्तिता आभासा' इति, तदभावात् (27) (D), प्रत्युतौचित्यमेव । तेन परकीयाऽवान्तरभेदमात्रं परोढ़ात्वमङ्गीकृत्य नायिकाभेदानाह—

स्वकीया परकीयेति नायिकाऽसौ द्विधा मता ।
मुग्धा मध्या प्रगल्भेति स्वकीया तु त्रिधा भवेत् ।
मध्याप्रगल्भयोर्भेदाः षड् धीरादिप्रभेदतः ॥ १०० का
धीरा, अधीरा, धीराधीरा - इति भेदास्त्रयः ।
कनिष्ठज्येष्ठरूपत्वात्तयोर्द्वादशधा मतम् । १०१का

अनौचित्येन नरकमन्यादकत्वपारिमित्यादिदोषेण प्राकृते प्रवर्त्तिता रसा आभासा भवन्तीत्यर्थः । पारिमित्यन्तु स्त्रियाः सम्पूर्णाग्रहसमये पुरुषस्यासामर्थ्यरूपं, श्रीकृष्णे त्वनन्तकोटिगोपीभिः सह विहारेऽपि सम्पूर्णसामर्थ्यम्, अतस्तासामेव पराभवो न तु कृष्णस्य, अतोऽत्र सम्पूर्णरस एव, अतएव कृष्णे तदभाव।दीश्वरत्वेनानौचित्यदोषाभावात् । परोढ़ात्वमिति—अप्राकृते परोढ़रमण्यामपि रसमङ्गीकृत्येत्यर्थः ।

---

पुष्णाति । देवानां कृष्णपक्षप्रपथत्वं कल्प्यम् । देवतानां मध्ये कृष्णदेवता वा श्यामतरु-दलप्रशोभिनी ।

(D) अत्र 'तद्भावादि'ति पाठे कृष्णाधिकरणक रतेरनौचित्यभङ्गेन प्रकृतरसपरत्वादित्याकारोऽर्थः कल्प्यः । अप्राकृते रसाभासादिविचारोऽस्माभी रसस्वरूपोद्घाटन एव विहितः । अत्र तत्त्वे 'आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम् । या दुस्त्यजं स्वजनमार्यपथञ्च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥' इति श्रीमद्भागवत-पुराणीयो ग्रन्थः, 'नेष्टा यदङ्गिनि रसे कविभिः परोढ़ा तद् गोकुलाम्बुजदृशां कुलमन्तरेण । आशंसया रसविधेरवतारितानां कंसारिणा रसिकमण्डलशेखरेण ॥' इति प्राचां मतञ्च प्रमाणम् ।

---

(25) 'परत्वमेवेति प्रमादो लौकिक एवे'ति पाठः (क) (ख) (घ) पुस्तकेषु ।

(27) 'तद्भावादि'ति (क) (ख) (घ) पुस्तकेषु पाठः । स च टीकाकृदसम्मत इति प्रतिभाति ।

तयोः षट्प्रकारयोर्मध्याप्रगल्भयोः कनिष्ठज्येष्ठत्वं श्रीकृष्णप्रेमतारतम्येनैव, न तु वयसा। मुग्धाया एकरूपत्वेनानयोर्द्वादशत्वेन—

तेन त्रयोदश स्वीयाः—१०२ का

परोढ़ा स्यादलौकिकी।

त्रयोदशविधा साऽपि—१०२ (क) का

यतोऽलौकिके परोढ़ाऽपि मन्यते, ततः साऽपि त्रयोदशविधा।

तेन षड्विंशतिर्भिदा ।१०२ (ख) का

तेन मिलित्वेत्यर्थः।

अवस्थाभिरथाष्टाभिरष्टोत्तरशतद्वयी।
कन्याज्येष्ठकनिष्ठत्वान्मृदुमध्यमृदुत्वतः॥
चतुर्भेदास्ततस्तासां सद्वादशशतद्वयी।
अत्युत्तम-प्रकृत्यादितया ताः स्युः पुनस्त्रिधा।
षट्त्रिंशत्सहिता तेन षट्शती नायिकाभिदा॥१०२(ग)का

अत्युत्तमा, उत्तमा, मध्यमेति त्रैधम्।

तत्र सिद्धाः सुसिद्धाश्च नित्यसिद्धा इति त्रिधा।
स्त्रियोऽवतीर्णास्तेन स्युर्वसुशून्यग्रहेन्दवः (१९०८)(E) ॥ १०२का

मुग्धाया एकरूपत्वमेव, अतो मध्याप्रगल्भयोरेव धीराऽदिभेदतः षड् भेदा उच्यन्ते। अनयोर्मध्याप्रगल्भयोः। तेनेति—स्वकीयायास्त्रयोदशभेदैः सह मिलित्वा षड्विंशतिर्भेदा उक्ताः, अभिसारिका वासकसज्जेत्याद्यष्टाभिरष्टोत्तरशतद्वयी।

परोढ़ाभिन्ना कन्या केनाप्यविवाहिता—तस्या भेदचतुष्टयमाह—कन्येति। ज्येष्ठा कनिष्ठा, अत्यन्तमृद्वी मध्यमृद्वी च।

नित्यसिद्धा इत्यस्य व्याख्या स्वभावसिद्धाः। एताः स्त्रियो गोकुलेऽवतीर्णाः, तेन पूर्वोक्तसंख्यायास्त्रिगुणीकृतेन वसुशून्यग्रहेन्दवो नायिकाभेदा भवन्ति।

---

(E) सिद्धाः सनिरूपा इत्यादि—इदञ्च वैष्णवागमस्य मतानुसारेण। भक्ताः सर्वं भगवती मायारूपा—श्रोत्रेण भगवान् लभ्यः। ऋषिभिः श्रुतिरूपाभिः देवीभिश्च स लब्धः, अतोऽयमत्र। स्कन्दमहाकौर्मादिपुराणेभ्यो विस्तरो ग्राह्यः।

सिद्धा मुनिरूपाः साधनसिद्धाश्च, सुसिद्धाः श्रुतिरूपा देव्यश्च, नित्यसिद्धा राधाद्या रुक्मिण्याद्याश्च स्वभावसिद्धाः। अथैतासामादितो लक्षणानि—

स्वकीया तु कृतोद्वाहा पित्राद्यैः स्वयमर्पिता॥
या तु व्यूढ़ाऽपि गोपेण लोकधर्मानपेक्षिणी।
कृष्णैकताना रागेण परोढ़ा व्रज एव सा (F)॥
पित्रादिदानात् प्रागेव पित्रादेरप्यसम्मतौ॥
जातानुरागा या कन्या सा भैष्मी कुण्डिने यथा॥
पितृभ्रात्रादिसङ्कोचात् स्वधार्ष्ट्याद्विभयादपि॥
गूढ़ा यस्या रतिर्गाढ़ा सर्वथा सुरसायते।
कात्यायनीव्रतपरा सा कन्या सर्वदा व्रजे (28)॥ १०४का

अथ मुग्धादेर्लक्षणम्—

अभिनवविकसितयौवनमदनविकारा मृदुर्माने।
वार्त्तायामपि सुरते पराङ्मुखी सत्रपा मुग्धा॥ १०५ का

कुण्डिनपुरे भैष्मी रुक्मिणी। व्रजस्थकात्यायनीव्रतपराणां कन्यानां स्वरूपमाह—ऽऽतृभ्रात्रेति। परोढ़ानामिव रसोत्कर्षहेतुभूतस्य पित्रादिकृतनिवारणदुर्लभताप्रच्छन्नकामत्वादेः सत्त्वात् गोपान्तरेण विवाहाभावेऽपि न क्षतिः।

---

(F) परकीयानामपि तासां श्रीकृष्णपतित्वं दर्शितं बहुशो भागवतसंहितायां यथाऽवोचाम प्राक्। तथा चानन्दचन्द्रिकायाम् 'न हि पत्यादिशब्दानां परिणेतर्य्येव केवलं शक्तिः सर्वेष्वेव रसग्रन्थेषु।' एवमेव स्वकीयासु स्वाधीनभर्त्तृकाऽऽदिरन्तर्भुक्ता।

---

(28) इतः परम् 'एवविधैव कथिमि' परकीयैव वर्ण्यते।
परपाणिग्रहीतो तु कृष्ण एव हि शोभते।
नैवान्यनायके यस्मात्तस्मान्नान्यत्र सा किल॥'
इत्यधिकोऽप्यो मुद्रितपुस्तक उपलभ्यते। स चाऽत्र प्रक्षिप्त इव प्रतिभाति।

मानी मृदुर्यथा—

सख्या शिक्षितपाठितानि सुभृशं वाम्योपदेशाचरा-
ण्ययावश्यमभीष्टसङ्गसमये सम्पादनीयानि हि ।
इत्थं चेतसि निश्चयो व्यजनि यः कृष्णस्य सन्दर्शने
सद्योऽसौ सह चेतसाऽपहृतवांस्तस्मिन् तस्या हृदः ॥ ९७

सुरतपराङ्मुखी यथा—

अयि प्राणेभ्योऽपि प्रणयवसतिस्त्वं प्रियसखी
ममैवेति प्रायो निरणयमहं पङ्कजमुखि ! ।
इदानीन्तु ज्ञातं व्रजपतिसुतस्यैव भवती
यतस्तत्प्रीत्यर्थं मदनभिमताय स्पृहयते ! ९८

अनभिमतमत्र सुरतम् ।

सत्रपा यथा—

आदृष्टा नमयति वक्त्रमीक्ष्यमाणा नेत्राब्जे मुकुलयति व्रजेशजेन ।
यान्तीषु प्रणयिसखीषु याति पश्चादनङ्गो नमयति कोमलं मनोऽस्याः ॥ ९९

**मध्या सुललितसुरता मध्यमसमुदीर्णयौवना नीचैः ।**
**व्रीड़ावतीषदीषद्प्रागल्भ्या निभृतवैदग्ध्या ॥ १०६ का**

तत्र सुललितसुरता यथा—'निर्यातान्त्वयो'त्यादि (२५ श्लोकः) ।

मध्यमसमुदीर्णयौवना यथा—

काचिद्यूथेश्वरी स्वमतमाह—सखेति। असौ निश्चयश्चेतसा सह हरो मम हृदयादप हृतवान्, अतस्तस्याः सख्याः सकाशादहं तस्मास्मि, न जाने सा किं वदिष्यतीति शङ्काकुलाऽस्मीत्यर्थः।

अयि पङ्कजमुखि! प्राणेभ्योऽपि प्रेमपात्री त्वं ममैव प्रियसखीत्यहं निरणयं निर्णयं कृतवती। यतस्तस्य श्रीकृष्णस्य प्रीत्यर्थं ममानभिमतं सुरतं वाञ्छति।

श्रीकृष्णेन दृष्टा सा वक्त्रं नमयति, तेनेक्ष्यमाणा सती नेत्राब्जे मुकुलयति मुद्रिते करोति, तस्मादस्याः कोमलं मनः कन्दर्पो न नमयति, कोमलत्वान्मनः कदाचित्त्रुट्यत्यपीति भयान्न नमयतीत्यर्थः।

मध्याया लक्षणमाह—नीचैरपि तु ईषद्व्रीडावती।

हे राधे! त्वं कन्दर्पस्य भुवि स्थिता कल्पवल्ली भवसि। कल्पवल्लीसाधर्म्यमाह—तव

स्तनौ स्तवकविभ्रमौ विहसितं प्रसूनोद्गति-
र्वचो मधुरसो दृशावभिमुखस्थितौ खञ्जनौ ।
भ्रुवौ भ्रमरमण्डली करपदं नवाः पल्लवा-
स्त्वमेव सखि राधिके ! मदनकल्पवल्ली भुवि ॥ ७०

नीचैर्व्रीडावती यथा—

आकृष्टे रमणेन नीलवसने (१९) निर्मोचितैरायतैः
केशौघैर्निरवाहयं सखि ! तनोः साम्मुख्यसङ्गोपनम् ।
जिह्रेमि स्मरणेऽपि तस्य यदियं कृष्णाष्टमी यामिनी-
वासीत् सुन्दरि ! सम्मुखार्धतिमिरा पश्चार्धचन्द्रप्रभा ॥ ७१

ईषत्प्रागल्भ्या यथा—

मम श्रोत्रे शब्दः सुरतमिति हे कृष्ण ! न गतः
सखीभ्यो याचित्वा यदि भवति दास्यामि भवते ।
इति श्लोकं प्रातः शुकयुवतिभिर्भाषितमसौ
कयेदं वः प्रोक्तं वच इति सखीष्वेव निदधे ॥ ७२

स्तनौ स्तवकविभ्रमौ पुष्पगुच्छविलासवन्तौ। परस्परसम्मुखतया स्थितौ कल्पवल्लीनिष्ठ-खञ्जनौ तव दृशौ। तव भ्रुवौ कल्पवल्लीस्थितभ्रमरमण्डली। 'करपद'मिति प्राण्यङ्गत्वात् समाहारद्वन्द्वः।

श्रीकृष्णेन मम नीलवस्त्रे आकृष्टे सति तदात्मानं नग्नां दृष्ट्वा निर्मोचितैः केशसमूहैः करणैः सम्मुखदेशस्य सङ्गोपनं निरवाहयं निर्वाहं कृतवती। तस्य सङ्गोपनस्य। यत् यस्मादियं मे तनुर्यामचतुष्टयात्मिका कृष्णाष्टमी यामिनीवासीत्—सा यथा पूर्वं प्रहरद्वयं व्याप्य चन्द्राभावेनार्धतिमिरा पश्चादर्धचन्द्रप्रभा तथैवाहमप्यभवम्।

हे सुरतरङ्गिणि ! सुरताभिलाषिणे मह्यं सुरतं दास्यसि नवेति श्रीकृष्णेन पृष्टा काचित् वृषेश्वरी प्राह—'सुरत'मिति शब्दः मम श्रोत्रगतोऽपि न इति प्रथमवचनं, तदनन्तरं 'युष्माकं सुरतमस्ति मया श्रुत'मिति श्रीकृष्णस्य वचनं श्रुत्वा सा पुनराह—'मयि सम्भावना-ऽपि नास्ति, किन्तु सखीषु भवति चेत्ताभ्यो याचित्वा दिनान्तरे भवते दास्यामि।' एतदर्थं पद्यमात्मीयं स्थिताभिः शुकाङ्गनाभिः कण्ठस्थं कृत्वा प्रातःकाले सखीनामग्रे पठितं, तच्छ्रुत्वासौ वृषेश्वरी श्लोकमपि वचो यो युष्माकं मध्ये कयोक्तमित्युक्त्वा सखीष्वेव निदधे। तया च प्रोक्तं वचस्तया सखीनां शिरसि निक्षिप्तम्।

(१९) 'कञ्चुकार्धेन वसने' इति (ख) (ग) पुस्तकयोः पाठः ।

विश्रब्धवैदग्ध्या यथा—

परीरम्भं वेद्दि कथमपि सुखाम्भोजमधुनः
प्रपाणे ना नेति (३०) व्यधित करकम्पं किमपि या ।
स्वयं लब्धोच्छ्वासं जघनभुवि वासः स्थगयितुं
स्वयं सा श्रोकृष्णं किमपि परिरेभे दृढ़तरम् ॥ ७३

अथ प्रगल्भा—

तरुणी मदनमदान्धा रतिरणकुशला दरव्रीड़ा ।
भावोन्नता प्रगल्भा वैदग्ध्याक्रान्तनायका कथिता ॥ १०७का

तत्र तरुणी यथा—

हाटोसीर्णसुवर्णपूर्णकलसौ वक्षोजयोर्युग्मकं
स्मेरेन्दीवरदामतोरणततिः स्निग्धाः कटाक्षोर्मयः ।
श्रोणिः शिल्पतरङ्गमङ्गलमयं सिंहासनं निर्मिता
■ कामोत्सवमण्डलैकरचना केनासि चन्द्रावलि ! ॥ ७४

मदनमदान्धा यथा—

श्लिष्टा श्लिष्यति गोकुलेन्द्रतनयेनाचुम्बिता चुम्बति
स्वच्छन्दं लिखिता नखैर्नखपदैराभूययत्यङ्ककम् ।

अथ कुञ्जपद्यात् किञ्चिन्निमिषेण सखीषु निर्गतास्वेकाकिनीं यूथेश्वरीं प्राप्य श्रीकृष्णस्तया सह विलासारम्भं कृतवान्, गवाक्षद्वारा तं विलासं दृष्ट्वा काचित् सखी स्वसखीं प्रत्याह । या श्रीकृष्णकृतपरोरम्भं कथमपि कृतिमदुःखव्यञ्जनेन वेद्दि अधरमधुपानेऽपि 'ना ने'ति वाक्यबोधककरकम्पञ्चकार, अधुना सा वाक्यं विहाय श्रीकृष्णस्य व्यापारं विनैव कामोन्मादेन स्वयमेव नीवीबन्धनान्लब्धमोक्षं परिधेयवस्त्रं जघनदेशे स्थगयितुं स्थिरीकर्त्तुं तन्निमित्य स्वयमेव श्रीकृष्णं दृढ़तरं परिरेभे ।

वैदग्ध्याक्रान्तो नायको यया सा प्रगल्भा कथिता ।

श्रीकृष्ण आह—हे चन्द्रावलि ! त्वं कन्दर्पस्योत्सवे केनापि मण्डलरचनानिर्मिताऽसि । तस्या रचनास्वरूपत्वमाह—हाटेति । आद्युत्सवे पूर्णकुम्भोऽपेक्षितो भवति तत्स्थानीयं तत्र स्तनयुग्मकम्, एवमोषद्विकसितेन्दीवरमालया बन्धनमालाततिरपेक्षिता भवति, तत्स्थानीयास्तत्र कटाक्षोर्मयः, एवमुत्सवे नानाविधशिल्पकौशलविशिष्टं सिंहासनमपेक्षितं भवति, तत्स्थानीयस्तत्र नितम्बदेशो भवति ।

(३०) 'ना नेति इति (क) पुस्तके पाठः ।

शिक्षिता तत एव पुष्पधनुषः संग्रामविद्यामियं
तस्य क्षोभकरी यदैष्ट तदियं विद्या गुरुक्षोभिका ॥ ७५

रतिरणकुशला यथा—

अन्योन्यप्रणयप्रकाशपरयोरन्योन्यनिर्माल्ययोः
श्यामामाधवयोर्निरीक्ष्य वपुषोर्लक्ष्मीं रजन्याः क्षये ।
सख्या एव मनोजसङ्गरजयश्रीसूचकार्थत्वे
सामानाधिकरण्यमप्रतिहतं मेने सखीनां गणः ॥ ७६

इयमेव दरव्रीडाभावोन्नताऽऽदिः ।

अथ मध्याप्रगल्भयोर्धीरादिभेदकथनम्—

तत्र मध्याधीरा—

**प्रियं वैदग्ध्यवक्रोक्त्या मध्याधीरा वदेद्रुषा । १०८**

सा यथा—

'पद्मिन्यहं कुमुदिनी किल नैव सत्य'मित्यादि (३य किरणे ३८ श्लोकः)।

**धीराधीरा तु रुदितैः—** १०६ का ।

यथा—

उत्खातं गुरुगौरवं कुलवतीमौलिश्च निःसारिता
कृष्ण ! त्वत्प्रणयेन, तत् कथमिदं कापट्यमालम्बसे ।
इत्यालप्य तदीयपीतवसनेनाहृत्य वक्त्राम्बुजं
बाला केवलमश्रुमिश्रितमुखी चाटुस्वरं रोदिति ॥ ७७

श्रीकृष्णेन मल्लैर्लिङ्गविना शिक्षिता यतो स्वयमपि नखचिह्नैः श्रीकृष्णाङ्गमाभूषयति यदद्यावधि इयं तत: श्रीकृष्णादेव कन्दर्पयुद्धविद्या शिक्षिता तस्य श्रीकृष्णस्य क्षोभकरी यतो ऐक्ष ऐश्वर्यं कृतवती तस्मादस्या इयं विद्या गुरुक्षोभिका भवति ।

अन्योन्यनिर्माल्ययोः परस्परसम्भक्तयोरत: सम्भोगजन्यश्रमेण सुप्तयोः श्यामाकृष्णयोर्वपुषो नखचिह्नादिजन्यशोभां गवाक्षद्वारा निरीक्ष्य इयोर्मध्ये सख्या एव कन्दर्पयुद्धजयसम्पत्तिसूचकार्थत्वे सामानाधिकरण्यमवैयधिकरण्यमप्रतिहतं सखीगणो मेने । तथा च सख्या एवावैयधिकरण्ये जयहेतुत्वं तु कृष्णस्य, तस्य तु युद्धे पराभवेऽपि त्वयैव जितमिति वैयधिकरण्येन जयसम्पत्तिरिति भावः ।

अथ धीरत्वादिकं मानदशायामेव प्रकटीभवतीत्यतो मानिनीष्वेव धीरादित्वं धीरादिभेदमाह—यथेति ।

—अधीरा निष्ठुरोक्तिभिः। ११०का

यथा—

साध्वादर्शिनि जीविते मम कथं श्वाध्यत्वमालम्बसे ?
धिङ्मां त्वाञ्च, धिगावयोः सुजनतां, धिक् प्रेम, धिक तद्यशः।
किं ब्रूमः, पुरुषोत्तमोऽसि, जगतां भर्त्तासि, मय्येव ते
धूर्त्तत्वं, न हि तेन ते गुणगणः किञ्चित्तरां क्षीयते॥ ७८

सत्यभामोक्तिः।

अथ प्रगल्भाधीराऽदिलक्षणम्—

यदि प्रगल्भा धीरा स्यात्छत्राकारेण हेलया।
उदास्ते प्रकृतात् कोपादादरं दर्शयेद्वहिः॥ १११ का

यथा—

किं पादान्तमुपैषि, नास्मि कुपिता, नैवापराद्धो भवान्,
निर्हेतुर्न हि जायते कृतधियां कोपोऽपराधोऽथ वा।
योग्या एव हि भोग्यतां दधति, तत्रानौचितो कापि नो,
तेनाद्यावधि गोकुलेन्द्रतनय। स्वातन्त्र्यमेवास्तु ते (31)॥ ७९

धीराधीरप्रगल्भा तु साकूतैर्वचनैर्मुहुः।
प्रियमुच्चैः खेदयति— ११२ का

अथैकस्मिन् दिवसे नारदो द्वारकामागत्यैकपारिजातपुष्पं श्रीकृष्णाय ददौ। तत् पुष्पं श्रीकृष्णेन रुक्मिण्यै दत्तं, नारदेन कौतुकार्थमेतद्वृत्तान्तं सत्यभामायै कथितम्। तच्छ्रुत्वा सत्यभामा मानिनी बभूव, तदनन्तरं तस्या मानभङ्गार्थं निकटे गत्वा श्रीकृष्ण आह—हे प्रिये, एकपुष्पस्य का कथा, पारिजाततरुसकलमेवेन्द्रपुरादानीय तुभ्यं दास्य इति वदन्तं श्रीकृष्णं कुपिता सत्याह—साध्वादिति। सत्यभामायाः प्रेम्णोऽधीनः श्रीकृष्ण इति यशोऽपि धिक्।

उदास्ते—नाहं कोपवतीत्युदासीना भवति।

योग्या एव तत्र भोग्यतां दधति भोग्या भवन्तीत्यर्थः, तथा चायोग्यत्वान्मत्सकाशागमनमनौचित इति भावः। स्वातन्त्र्यमिति—यत्र तवेच्छा तत्रैव गच्छ। सम्प्रत्यहन्तु देहादियुक्ता भविष्यामीति ध्वनिः।

---

(31) इत ऊर्ध्वं 'यद्वा या दूराद्दुत्थितमन्तिक'मित्यादि ८९तम. श्लोकोऽत्र उदाहृतो दृश्यते।

नैतावताऽपि समयेन तवोपलब्ध-
श्चेतो यदन्तरगतेव तदाहृणोति ।
तन्नेऽपि चेतसि ममाविरतं यदास्से
पूर्णाऽस्मि तेन, किमनेन बहिःस्थितेन ॥ ८०

—पराऽवौच्यैव निन्दति । ११२ का

परा अधीरप्रगल्भा । अवीच्येव अदृष्ट्वेव । यथा—

'सख्यः ! कथं परिमलो विमलः प्रसर्पी'
'श्यामो निलीय चिरमस्ति' 'कुतः स वामः ? ।'
'तस्यान्तिके तव' 'निवारयताशु, यातु,
'धूर्त्तस्य तस्य वदनं न विलोकयामि' ॥ ८१

अथासां ज्येष्ठकनिष्ठत्वभावो यथा—

एकत्रैव लतासनं स्थितवती राधा समं श्यामया,
श्यामेन प्रहितं समं सुमनसामासाद्य दामद्वयम् ।

एतावताऽपि समयेनैतावत्कालपर्य्यन्तं तव चेतो मया नोपलब्धं न प्राप्तं, यद् यस्मात् सा मम वैरिणी तवान्तःकरणं गता सती त्वच्चेत आहृणोति, तथा च सर्व्वदैव त्वच्चेतो व्याप्य सा तिष्ठति । अतो मत्स्मरणं तव कथं भवेदिति ध्वनिः । किन्तु त्वद्विरहेण तन्नेऽपि ममे चेतसि त्वं तादृग्तापमध्ये यत् सततमास्से तेन हेतुनाऽहं पूर्णाऽस्मि, ततस्त्वागमया बहिःस्थित्या किम् ? तथा च सम्प्रति तवात्रागमनं व्यर्थमिति भावः । तेन च त्वत्स्मरणमहं सततं करोमि, त्वया तु स्वप्नेऽपि न स्मर्य्यते इत्युपालम्भो ध्वनिः । क्षिप्रमिति भावसाधनं ज्ञेयम् ।

भवत्यौ यूथेश्वर्य्योरुक्तिप्रत्युक्ती आह—सख्य इति । सर्व्वत्र प्रसर्पी श्रेष्ठपरिमलः कुत आयाति ? सख्याह—श्रीकृष्णश्चिरं व्याप्य निलीयास्ति । यूथेश्वर्य्याह—स मम वामः प्रतिकूलः कुत्र ? यूयं निवारयत मत्सन्निकटात् शीघ्रं गच्छतु ।

एकत्रैवासने श्यामया सह स्थितवती राधा श्रीकृष्णेन प्रहितं समसमेकाकारं माल्यद्वयं

(H) "यत्र निषेधविशेषो दुर्लभत्वञ्च यन्मृगाक्षीणाम् । तत्रैव नागराणां निर्भरमासज्यते हृदयम् ।' इत्यभिज्ञातोक्तेः श्रीकृष्णे आपाततरायो तन्नतचित्तानां गोपीनां प्रत्ययहिः; राधाद्यासु रमणीशिरोमणिषु वाम्यकलुषास्वपि श्रीकृष्णस्य सतो भावप्रधानस्य । एवमपि गोपीषु श्रीकृष्णप्रेमसराक्रमासु राधाचन्द्रावल्यादिस्वन्यासामसुभगानां तदानीं श्रीकृष्णविरहितानां प्रकटं परां कोटिमापद्यमानं खेदाऽहमहमिकाविलसनं प्रीत्युज्जृम्भित-

श्यामावक्षसि दातुमैच्छदुभयं, साऽक्षथ तद्वक्षसि
प्रादादेकमथावतीर्य्य कबरीपूजां (H) चकारात्मनः ॥ ८२

अत्र श्यामायाः कनिष्ठत्वं व्यङ्ग्यं 'कबरी' 'पूजा' शब्दाभ्याम् ।

**मुग्धा मध्या प्रगल्भा च मिश्रभावात् पुनर्नव । ११४का**

आदिमुग्धा मध्यमुग्धा अन्तिममुग्धा—एवमन्येऽपीति नव ।

अत्र मुग्धात्रैविध्यं यथा—

मानप्राङ्गणसाधकप्रियसखीशिक्षोपरोधादसौ
तूष्णीमेव चिरं निमील्य नयने नम्रानन्नैव स्थिता ।
रोषान्धस्य मदीयदूषणकथावेशेन (I) वाचालतां
श्रुत्वा बन्धुजनस्य कातरमुखी कर्णं करेणावृणत् ॥ ८३
नेत्रे किं विनिमीलयामि, दयितस्तत्रापि सन्दृश्यते
चेतः किं कठिनीकरोमि, सततन्तत्राप्यसौ खेलति ।

प्राप्योभयमेव श्यामाया वक्षसि दातुमैच्छत् श्यामा तु माल्यद्वयमादाय राधाया वक्षसि प्रादात् पश्चादेकं माल्यं राधायाः कण्ठादवतार्य्य तेन माल्येनात्मनः कबरीपूजां चकार तन्निर्माल्येन स्वस्य मस्तकस्थसंयतकेशपूजाकरणेन श्यामायाः कनिष्ठत्वमायातमिति ज्ञेयम् ।

मिश्रभावात्—आदिशब्देन सह मिलनादादिमुग्धेत्यादि भवति । आदिमुग्धाऽव्यक्तमुग्धा, अन्तिममुग्धाऽल्पमुग्धेत्यर्थः ।

श्रीकृष्णः सुबलं प्रत्याह । मानप्राङ्गणस्थायिन्या सह वर्त्तमाना या प्रियसखी तस्याः शिक्षोपरोधात् । रोषान्धस्य बन्धुजनस्य वाचालतां श्रुत्वाऽत्यन्तमौग्ध्यवशात् प्रत्युत्तरदानेऽसामर्थ्यात् केवलं कर्णमेव रुद्धं चकारेत्यर्थः ।

---

मेव न कृत्रिमम्, यतोऽवरा एताः श्रीकृष्णदयितानां सेवातात्पर्य्यैनैव सार्थकमन्यजीविता भवन्ति । चित्राललिताश्यामाऽऽद्या बह्व्य एव नित्यास्ताः श्रीकृष्णलीलासूल्लिख्यन्ते । आसामवरत्वं प्रेमतारतम्येन वैयावामे व्यवस्थितत्वेऽपि क्वचित् कविभिरितरेच्य वयोभावादिनाऽपि दर्श्यते । तत्त्वत्वेन स्थितिवैमूढारवोम्वेवमेव तत्तल्लक्षणसङ्गतिर्भक्तिप्राणभित्तिमवलम्ब्य सुधीभिर्विभाव्या ।

(I) .उपरिदर्शिते श्लोके राधायाः समधिकमुग्धावत्त्वमेवादिमुग्धास्वभावं तस्या विनिगमयति । तदव्यवहितोत्तरे च श्लोके कोपप्रदर्शनावध्यसहायत्वव्यपदेशः स्वकीयं मध्यामुग्धत्वम्, एवमन्तिमे च पद्ये श्रीकृष्णोपरि प्रणयरसोर्ज्जितत्वात् क्रोधजलकल्पितो

दोषान् किं गणयामि तस्य, गुणतां गच्छन्ति ते तत्क्षणा-
न्मानोऽन्येन यथा भवेद्यदि, तदा सख्यः स एवोच्यताम् ॥ ८४

रोमाञ्चैः समसुत्थितं प्रथमतो, मानेन सार्द्धं द्रुतो-
ऽस्त्रु च्यावितमाननेन च समं नीतं ममांहोऽप्यधः।
सख्यश्चाभरणैः समं मुखरितास्तूष्णीकतां प्रापिता (I)
मामालोक्य चिरार्जितोऽपि सुदृशा कोपस्तया विस्मृतः॥ ८५

तत्रापि—निमीलितनेत्रेऽपि दयितः सन्दृश्यते। ते दोषास्तत्क्षणे दोषत्वेन दर्शनक्षणे गुणतां गच्छन्ति। हे सख्य भवतीभिरुपदिष्टान्मार्गान्नयादन्येन यथा यदि मानः सम्भवेत्तदा स एव पन्था उच्यताम्।

सखीभिर्यैर्वाञ्छितं मम दर्शने तत् सर्वं विपरीतमभूदिति श्रीकृष्ण आह।· प्रथमतो मामालोक्य सुदृशा तयाऽसनादुत्थितं, 'रोमाञ्चैः समसुत्थित'मित्यनेन रोमाञ्चोऽपि जात, मानस्य का कथेति भावः। च्यावितं भूमौ पातितं, 'मानेन सार्द्ध'मिति मानोऽप्यधः पातित इत्यर्थः। अंहो ममापराधोऽपि सुखेन सहाधो नीतं लज्जया सुखमपि नष्टीकृत-मिति ध्येयम्। अस्माकं निकटे माऽगच्छ, इतो दूरीभवेत्यादि वाक्यैर्मुखरिताः सख्योऽप्यन्या-पदेश·तया तूष्णीकतां प्रापिताः। 'आभरणैः सम'मिति हस्तादिचालनेन निवारण-समये· तासां कङ्कणाद्यलङ्कारा अपि मुखरिता बभूवुः—तासां तूष्णीकत्वे ते तूष्णीं बभूवुरित्यर्थः।

त्रिविधमुग्धा एव मानग्रहणेऽसामर्थ्यान्मानाक्षमा इति पूर्वमुक्तम्।

---

इत्यभिनन्दनभरो राधाया अन्तिमसुग्धाप्रकृतिमनुमापयति। एषु लक्ष्येष्वेवंविधेष्वन्येषु च पद्येषु कश्चित् प्रश्नोत्तरकौतुककृतो वेषः कश्चिदुचितभाववर्णनानिर्बन्धो वा सुतरा-मास्वादः। आसां भाववादात्म्यनिर्धारणे कृष्णप्रेमगरिमैव वरीवर्ति। आविष्कृतञ्च तदानन्दवृन्दावने कैशोरादिलीलाप्रस्तावे कयाचिदनतिप्रगल्भया गोपललनया—

मां घ्नन्ति यदि निहन्ति हन्यतां बान्धवो यदि जहाति हीयताम्।
साधवो यदि हसन्ति हस्यतां माधवः स्वयमुरीकृतो मया॥

अग्रिमदशाश्रितप्रगल्भादृष्टान्ते 'दूरादुत्थित"मित्यादौ यच्छन्नकोपाक्रतेश्चन्द्रावल्याः सुपात्र भावाकारवर्णनं तदमर्षशनकीयस्य 'एकत्रासनसंस्थितिः परिहृते'त्यादिकस्य 'चतुरया कोपः कृतार्थीकृत' इत्यन्तस्याकरग्रन्थभूहूतस्य पदस्यापाततो विभिन्नकथा-गतमपि स्वरूपतः समं समञ्जसञ्च। वस्तुतश्छन्नकोपाकृतेः पृथक् पृथक् विकाशः। गाढमानिका नायिका, इतरा तु अविगूढमाना, यथोक्तमेवेह मूले।

मतिः—गोकुलेन्द्रकुमारस्त्वं गुणरत्नाकरः स्वयम् ।
वक्तुं कर्तुमभिज्ञोऽसि त्वयि का चतुरायताम् ॥ १७६

वितर्कः—किं पीयूषं किमु विषं किं हिमं किमु वाऽनलः ।
अभूत् कृष्णानुरागोऽस्यां विरोधिद्वयधर्मकः ॥ १७७

त्रासः—उच्चैर्गर्जति मेघौघे राधा चकितलोचना ।
त्रस्यन्ती माधवं कण्ठे भुजाभ्यां परिषस्वजे ॥ १७८

पर्यायमङ्गाङ्गिभावत्वे दिग्दर्शनं यथा—
आगच्छन्नाभूः कृष्ण ! परासक्तः परीति माम् ।
केवलं नायगः प्रैति त्वाचेत्याग्रहि मे मनः ॥ १७९

अत्र पूर्वार्द्धे ग्लानिभावोऽङ्गी ग्रह्णा त्वङ्गम् । एवम्—
सर्वत्र समवर्त्तित्वं युक्तमेव महात्मनाम् ।
मय्येव समवर्त्तित्वं नान्यत्र पुरुषोत्तम ! ॥ १८०

अत्र मतिभावोऽङ्गी असूयाऽङ्गम् । एवमेकस्याङ्गिनो बहून्यङ्गानि भवन्ति ।
यथा — इयं गाढोत्कण्ठा विषमविषदिग्धेव हृदि मे
प्रसूतेर्योर्भग्ना विगिलत्फलिकेव स्थितवती ।
अतो मे प्रत्यङ्गं ज्वलयति मुदत्याकुलयती (V)
भ्रमीतं मुग्धीते जडयति च मत्वर्धयति च ॥ १८१

अत्र स्मृतिभावोऽङ्गी, मोह चपलता-ग्लानि-जड़ताप्रभृतीन्यङ्गानि। अङ्गत्वेन नैतद्भावशावल्यम्।

अथ भावोदयादि—तत्र भावोदयो यथा—

आलीजनैर्मण्डनकेलिकाले विभूष्यमाणा वृषभानुपुत्री।
उरोगते नीलमणीन्द्रहारे खिन्ना सकम्पा पुलकाकुलाऽसीत्॥ १८२

अत्र हर्षोदयः। प्रशमो यथा—

'स्नानाऽसि किं प्रेयसि!' 'मामकीनं ह्रत् पृच्छ' 'पृच्छामि तदि'त्युरोऽस्याः।
स्पृष्ट'मिदं स्वस्थ'मिति स्म कृष्णो ब्रवीति सा नम्रमुखी बभूव॥ १८३

अत्र विषादप्रशमः। शावल्यं यथा—

क्रोधान्धा गुरवो जनाः स्खलितं दुर्वारमेतन्मनो
मर्मच्छेदकरी खलोक्तिरचना रम्यः स वंशीस्वनः।
कीनाशो भवनेश्वरस्त्रिजगतीलावण्यलक्ष्मीपतिः
प्रेमानन्दरसः स एव तनुमान् कृष्णः किमीहे सखि! (W) ॥१८२

ईर्षासूयौत्सुक्यानि पृथक् पृथगेव स्थितानि।

अथ सन्धिः—'स्नानाऽसि किं प्रेयसी'त्यदौ (५म किरणे १८३ श्लोके) चतुर्थपादार्द्धे 'सा नम्रमुखी बभूवे'ति विषादनिर्गमे लज्जाऽऽगमः, अनयोः सन्धिः। यथा वा—

सुचिरमनुचरीभिः पाठितां कृष्णगाथा सदसि शुकवधूभिः शृण्वती गीयमानाम्।
प्रणयसदयमेकान्तासु विन्यस्यतीयं चकितचकितमक्ष्यन्नेत्रमास्ये गुरूणाम ॥१८५

अत्रौत्सुक्यत्रासयोः सन्धिः।

मोहादीनामङ्गत्वेन परस्परप्राधान्याभावान्नैतेषां भावशावल्यमिति ज्ञेयम्।

श्रीराधाऽऽह—मामकीनं चञ्चलमनसं पृच्छ। श्रीकृष्णस्तु 'ह्र'च्छब्दस्य हृदयवाचित्वमभिप्रेत्याह—तत्तव हृदयं पृच्छामि।

भवनेश्वरी गृहपतिः स्वामी कीनाशः कथंक इत्यसूया। किमीहे किं चेष्टे कि करोमीति यावत्। 'क्रोधान्धा' इत्यनेन भयम्, इत्येवंरीत्या सर्वत्र यथासंख्यं सम्बन्धो ज्ञेयः। एतानि पृथक् पृथगेव स्थितानि, न त्वङ्गाङ्गिभावतया, अत. शावल्यमिति बोध्यम्।

(W) अत्र 'कीनाश'पदे श्लेषोऽपि भवितुमर्हः—कीनाशः कृतान्तः। भवनपतिः कृतान्तदारुणः ग्रामीणश्च, प्रायपनिस्तु अपरूपवेशग्रन्थपसम्पत्तिमान् नागरः कलावैदग्ध्यभूषितश्चेत्यहो महानन्तयोर्भेदः। अत एव चेतस्तदभिमुखं धावतीत्यौत्सुक्यं भावः।

एते चोक्तप्रकाराः स्वयंव्यङ्ग्या अपि भावान्तरव्यञ्जकाः स्युः । यथा— 'क्वाहं गोपवधू'रित्यादौ (४र्थ किरणे ५म श्लोके)। दैन्यादिभिः प्रतिपद-व्यङ्ग्यैर्भावैरवहित्थाभाव एव व्यज्यते । यथा वा—

'नाभ्यञ्जनीयं सखि ! मे भवत्या नोद्वर्त्तनीयञ्च वपुः कदाऽपि ।
'न स्नावधाना स्तनञ्चेषसो'ति ननान्दुरग्रे निजगाद गोपी ॥ १८६

अत्र स्तनावलग्ननखक्षतगोपनं प्रत्यवहित्था व्यङ्ग्या, तया च न मे स्पृष्टपतेः सङ्गः कदाऽप्यभूत् येनैतत् सम्भावनीयं, तेन क्षणसङ्गमेवेति व्रीडा —तेनैते व्यङ्ग्या व्यङ्ग्यान्तरव्यञ्जकाश्च भवन्तीति ( )।
अथ प्रस्तारप्रकारेणोक्तानां षोड़शविधानां शावल्यानां भेदानाह ।

तत्र सन्धुरसताः—

रं प्र म स—'पादं मुञ्च' 'विमुञ्च मानिनि ! रुषं' 'प्रत्येहि, रुषमे गता,
'श्रीगोपेन्द्रसुते स्वभावकुटिले का रोषमाकाङ्क्षति ?'
इत्यन्योन्यकयास्तु ले'ग्नमयने भूयः पदे चित्तमति
श्यहाऽधिकमप्युतेन तत्करयुगेनाम्यं ढदत्यग्धात् ॥ १८७

अत्र 'पादं मुञ्च'त्यमर्षोदयः, 'विमुञ्च मानिनि ! रुष'मिति क्षणवाक्याकूतेन, 'रुषमे गते'ति रोषप्रशमः । ततः 'श्रीगोपेन्द्रसुत,' इति मतिः, 'स्वभावकुटिल' इत्यसूया, 'का रोषमाकाङ्क्षती'त्यवहित्था—एभिः शावल्यम् । 'श्रहे'त्यादिनौत्सुक्यं, 'ढदती'ति दैन्यम्—अनयोः सन्धिश्च ।

स्फूर्त्याऽनन्दलयेन तेन महता स्वाभाविकेनाप्यहो
तद्विच्छेददवोष्मणा च युगपद् द्वेधाऽभिभूतो हरिः ॥१८८

अत्र 'परिष्वजस्वे'त्यौत्सुक्यं, 'कठिने'त्यासूया, 'ते ते गुणा' इति स्मृतिः—त्रिभिः शबलता। 'तूष्णी'मिति जड़तोदयः। 'ततो निर्वृतः स्फूर्त्ये'ति पूर्वपूर्वभावप्रशमः। ततः स्फूर्त्यनन्तर'मानन्दलयेन' 'विच्छेददवोष्मणा' च 'द्वेधाऽभिभूत' इति हर्षविषादयोः सन्धिः।

*प्र श म स—'गतो मे सन्तापो' 'भवति ! हि मनस्यागत इव*

प्रियस्ते' 'हा कष्टं ! मनसि कथमद्यागत इति'।
'पुरः पश्चात् पार्श्वे मनसि च सदैवे'ति पुलकि-
न्यभूद्राधा पश्चादमृतविपनद्योः किमविशत् ॥ १८९

अत्र स्फूर्त्या स्वास्थ्यानुभवे 'गतो मे सन्ताप' इति ग्लानेः प्रशमः। ततः सखीवाक्यानन्तरं 'हा कष्ट'मिति विषादः, 'मनसि कथ'मित्यादि सखीं प्रत्यसूया,'पुरः पश्चादि'त्युन्मादः—एभिः शाबल्यम्। 'पुलकिनी'ति हर्षोदयः। 'अमृतविपनद्यो'रिति हर्षमोहयोः सन्धिः।

तूष्णीमभूत्। ततस्तदनन्तरं स्फूर्त्तिप्राप्तया तया सह मानसालिङ्गनेन निर्वृतः—तथा चागन्तुकानन्दजन्यलयसात्त्विकेनैवं स्वाभाविकेन तेन महता विच्छेददवोष्मणा च युगपदेकस्मिन्नेव काले हृष्टो विषण्णश्चेति द्विधाभूतो हरिरभूदिति।

माथुरविरहेणात्यन्तव्याकुलचित्ता श्रीराधिका सखीं प्रत्याह—मयाऽद्य श्रीकृष्णो दृष्टः, ततो मे सन्तापो गतः। सख्याह—हे भवति राधे! तव प्रियो मनस्यागत इव, कुतस्तस्य साक्षाद्दर्शनम्? इति सखीवाक्यानन्तरं साऽऽह—'हा कष्ट'मिति विषादः। पश्चादुन्मादस्यातिशयप्राबल्योदयेन सखीवाक्यमयथार्थं मत्वा कुप्यन्ती सख्याह—हे सखि! मम मनस्येव श्रीकृष्ण आगत इति त्वया कथमुक्तम्—न तु मम पुरोऽग्रे पश्चात् पार्श्वेऽपि मनसि च सदा तिष्ठत्येव, तद्दर्शनमपि मया प्राप्यत एवेत्यागन्तुकानन्देन कदाचिदमृतनद्यां तस्याः प्रवेशः, स्वाभाविकविरहस्फूर्त्या च विषनद्यां प्रवेशः। उन्मादावसानेऽद्भुतावस्थे ह्यविचारविपरीतौ यौ संयोगवियोगौ तज्जन्ययोर्हर्षमोहयोः सन्धिरित्यर्थः।

---

भारतयोस्तमोऽप्यादिमे चनादिकामतो वर्त्तमाने वेदवाक्ये चापीयं प्रथा वरीवर्त्तीति न चित्रम्। कश्चिच्छन्दतोऽपरतार्थतो वा यङ्गात् व्यञ्जकानुव्यञ्जकता। तेन 'सर्वगुणौ सन्तौ सुहृदाविव सङ्गतौ। परस्परस्य शोभायै शब्दार्थौ भवत' इति राजानककुन्तलोक्तदिशा शब्दानां व्यञ्जकानुव्यञ्जकत्वम्। अर्थस्यापि परस्परोद्भूतत्वजनितचमत्कारातिशय, कदापि यथा, 'आलिङ्गन्ते गुणवति मया! ते तुषारादिवाताः पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेत्य'स्य

प्र उ श स—पश्चादेत्य शनैररिष्टमथनस्तां सस्वजे साहसा-
त्तत्संस्पर्शरसेन सा स्मितमुखी सद्योऽविचारादभूत् ।
आलिभ्यः परिशङ्कयाऽरुणमुखी 'धिग् धूर्त्ततां धूर्त्त ! ते,
'धिङ्'ेति त्वरयाऽपसारिततनुर्व्यावृत्त्य तूष्णीं स्थिता ॥ १९०

अत्र 'स्मितमुखी'त्यमर्षप्रशमः । 'आलीभिः परिशङ्कये'ति शङ्कोदयः । 'अरुणमुखी'ति 'धिग् धूर्त्तता मिति 'धिङ्'ेति पुनरमर्षोग्रताग्लानिभिः शाबल्यम् । 'त्वरयाऽपसारिततनु'रिति चपलता, 'व्यावृत्त्य तूष्णीं स्थिते'ति धैर्यम्—अनयोः सन्धिः । एते सम्भूयत्तराश्चत्वारः ।

स उ प्र श—अक्रूरोऽयागत इति सुखग्लानिहृत्कम्पभाजः
स्तम्भो जातश्चिरमथ सखीसान्त्वनैर्बोध आसीत् ।
'प्रातः कृष्णोऽप्यहह मथुरा'मित्यपूर्णे जनोक्ते
प्रत्यावृत्तैस्त्रिभिरथ पुनः सैव पूर्णा बभूव ॥ १९१

अत्र 'सुखग्लानिहृत्कम्पभाज' इति ग्लानि-शङ्कयोः सन्धिः, ततः 'स्तम्भो जात' इति जडतोदयः । 'सखीसान्त्वनै'रिति तत्प्रशमः । 'प्रत्यावृत्तैस्त्रिभि'रिति ग्लानि शङ्का-जाड्यैः शाबल्यम् ।

स प्र उ श—मेघालोके पुलकिततनुर्विद्युदालोकने सा
व्याभुग्नभ्रूस्तदुपशमने सुप्रसन्नाननेन्दुः ।
भूयो विद्युद्वलयकलने लोहिताक्षी मृगाक्षी
धारापाते रुदितमलिनीभावमूर्च्छाः प्रपेदे ॥ १९२

तथा मानो गतप्राय एव, किन्तु सखीनामनुरोधेन मानाभाव एव वर्त्तत इति दूतीवाक्येन जातो यत् साहसनत्वात् श्रीकृष्णस्तां सस्वजे । अविचारादिति—अहं मानिनी, मम स्मितमनुचितमिति विचारं विनेत्यर्थः । त्वरयाऽपसारिता श्रीकृष्णाद्वियुक्तीकृता तनुर्यया तथाभूता सती व्यावृत्य श्रीकृष्णे पृष्ठं दत्त्वा स्थिता ।

प्रातः कृष्णो मथुरामित्येव न तु यास्यतीत्यपूर्णे जनानामुक्ते सति प्रत्यावृत्तैः पुनरागतैस्त्रिभिर्मुखग्लानिहृत्कम्पस्तम्भैर्भावैः सा पुनः पूर्णा बभूव ।

मेघस्यालोके श्रीकृष्णभ्रमात् पुलकिततनुस्तत्र विद्युदालोकने सति प्रतिपक्षरमणीभ्रमेण कोपेन व्याभुग्नभ्रूस्तस्या विद्युत उपशमने क्रोधाभावात् प्रसन्नमुखेन्दुः । धारापाते सति 'नायं कृष्णः, किन्तु मेघः' इति ज्ञानाद्रुदितम् ।

---

मेघश्लोकस्य भावस्याशाऽनुमारिणि' प्रस्थोऽरविन्दमुरभि, कथयाद्यो मालिनीतरङ्गाया' मित्यादि प्राकृतपद्ये प्रश्नमाऽनुमापककारणकार्यपरम्पराभ्रलभावश्चअनप्रपश्चे । यथा

'मेघालोके' कृष्णागमनभ्रमात् 'पुलकिततनु'त्वेन हर्षः, 'विद्युदालोकनेन' विपक्षरमणीबुद्ध्याऽसूया—अनयोः सन्धिः। 'तदुपशमने 'सुप्रसन्ने'त्यसूया-प्रशमः। 'भूय' इत्यादिना 'लोहिताक्षी'त्यमर्षोदयः। 'धारापाते' सति मेघ एवायमिति 'रुदित'मिति विषादः, 'मलिनीभावे'ति ग्लानिः, 'मूर्च्छे'ति मोहः—एभिः शाबल्यम्।

प्र उ स श—'प्रसादादेव त्वं भवसि न हि साक्षा'दिति रुषे
प्रकुप्यन्ती कृष्णे गतवति निरागस्यपि पदम्।
त्वराऽतङ्कव्यग्रा कपटमिति तस्मिन् विदितव-
त्यहो नानाभावव्यतिकरवतीयं विजयते ॥ १८३

अत्र 'साक्षान्न भवसी'ति प्राग्जातस्यामर्षस्य प्रशमः। ततो 'रुषे कुप्यन्ती'ति रोषं प्रति कोपोदयः। पश्चात् कृष्णपादपतने 'त्वराऽतङ्कव्यग्रे'ति चपलता-शङ्कयोः सन्धिः। ततो 'नानाभावे'ति व्रीडा-मद-स्मृति-शङ्का-श्रमा-दिभिः शाबल्यम्।

उ प्र स श—गण्डे कुण्डलपद्मरागमहसो बिम्बं प्रति (X) प्रेयसः
पारक्योऽधरराग इत्यरुणितापाङ्गी चलं वीक्ष्य तम्।
स्निग्धाक्षी 'दयितो रुषं विदितवानो वे'ति दोलायिता
न्यञ्चद्भ्रूलतया विधार्य च त्रपा मानं दधे राधिका ॥ १८४

काचित् सक्रोधं प्रत्याह—श्रीकृष्णस्यासाक्षादेव त्वं प्रादुर्भवसि, न तु तस्य साक्षात्। इति रुषे सक्रोधाय कुप्यन्ती सा निरपराधे श्रीकृष्णे स्वपादं गतवति (48) सति त्वरा-शङ्काभ्यां व्यग्रा बभूव। स्वकर्तृकपादग्रहणे सति तस्या वैयग्र्यदर्शनेनाहो अयं मानो न क्रोधजन्यः, अपि तु कपटमिति तस्मिन् कृष्णे विज्ञापिते सतीयं व्रीडामदादिनानाभाव-सम्मूर्च्छवती विजयते।

प्रेयसः श्रीकृष्णस्य गण्डे कुण्डलस्थपद्मरागकान्ते रक्तं प्रतिबिम्बं पारक्योऽधरराग इति मत्वा मत्प्रतिपक्षरमण्यधरसम्बन्धितामूलराग इति मत्वेत्यर्थः। आदौ क्रोधेनारुणापाङ्गी पश्चात्तं प्रतिबिम्बं चञ्चलं वीक्ष्य 'अहो! नायमधररागः किन्तु प्रतिबिम्ब' इति ज्ञानात्

विलासोऽलङ्कारनिबन्धेषु द्राक् यथा लक्ष्यते न तथा काव्यनाटकादिष्विति सुविदितमेव जिज्ञासूनामित्यनं पल्लवितेन। 'बिम्बं प्रती'ति प्रतिबिम्बार्थे क्लिष्टम्।

(48) 'स्वपदं गहीते सती'त्यमशोधः पाठः (क) (ख) (छ) पुस्तकेषूपलभ्यते।

अत्र 'गच्छ' इत्यादिनाऽमर्षोदयः। 'चलं वीक्ष्ये'ति तस्य प्रशमः। 'रूपं विदितवान्नो वे'ति शङ्कावितर्काभ्यां सन्धिः। 'न्यञ्चदङ्गतये'ति व्रीडा; 'विचार्ये'ति मतिः। 'मृषा मान'मित्यवहित्था—एभिः शाबल्यम्। एते चत्वारः शबलोत्तराः।

उ श स प्र—प्रियाऽऽलोके दृष्टिं नमयति तमन्यां प्रति लस-
द्दृशं स्निग्धारक्तप्रचलनयना पश्यति वधूः।
पुनः पश्यत्यस्मिन् स्मितपुलकसङ्गोपनपरा
हठात्तेनाश्लिष्टा सपदि गतवाम्या समभवत्॥ १८५

अत्र 'दृष्टिं नमयती'ति व्रीडोदयः। 'स्निग्धा रक्तप्रचलनयने'त्यौत्सुक्य-क्रोध चपलतानां शाबल्यम्। तामनादृत्यान्यां पश्यतीति क्रोधः, 'स्मितपुलके'ति मद-हर्षयोः सन्धिः। 'सपदि गतवाम्ये'ति क्रोधादिप्रशमः।

स उ श प्र—यदालोके पूर्वं भुजग इति सम्भ्रान्तचकिता
प्रियार्थे तामेव स्रजमुरसि सख्यो विदधती।
सखीषु स्मेरासु भ्रुकुटितरलारक्तनयना

ग स उ प्र— 'मां पश्यन्तास्तव किमरुणाभुग्नभग्ना दृगन्ता
'निस्पन्देऽत्राधरकिशलये गूढलक्ष्या विवक्षा ।
'हासो जाताङ्कुर इव कियत्तेन चित्ते प्रमोदो
'वामलक्ष्मे बहिरिति हरेर्वाचि राधा जहास ॥ १८७

यत्रा'रुणे'ति कोपः, 'आभुग्ने'त्यसूया, 'भग्ने'ति त्रपा—ताभिः शाबल्यम् । 'निस्पन्द'त्व'गूढ''विवक्षा'भ्यां धृति-चपलतयोः सन्धिः । 'हासो जाताङ्कुर' इति हर्षोदयः । 'जहासे'ति कोपप्रशमः ।

स ग उ प्र—'त्वं मे प्राणाः' 'कथमिव विभो !' 'त्वां विना नैव वर्त्ते'
'नाहं, या ते वसति हृदये सैव ते प्राणहेतुः ।'
'त्वं मे नित्यं वससि हृदये''ना न नै'त्यश्रुपूर्णा' (49)
कृष्णो दोर्भ्यां हृदि विनिदधे सा विसस्मार वाम्यम् (Y) ॥१८८

अत्र 'कथमिवे'ति वितर्कः ; 'विभो' इत्यसूया—हाभ्यां सन्धिः । 'नाह'मिति दैन्यं, 'या ते वसति हृदये सैवे'त्यसूया, 'प्राणहेतु'रित्युग्रता—एभिः शाबल्यम् । 'अश्रुपूर्णा'मित्यौत्सुक्योदयः । 'विसस्मार वाम्य'मिति कोपप्रशमः । एते प्रथमोत्तराधलाराः ।

स ग प्र उ—'कोदृग्वेणुमवीवदो व्रजपुरी'त्यापृष्ट एव प्रियो
रुक्मिण्या व्रजकेलिकौतुककथासंवेदनासंविदोः ।
सन्धौ बन्धुरमानसः पुनरहो रोमाञ्चनेत्राम्बुनी
संस्तुण्वन् प्रकृतो बभूव स पुनः पारिप्लवात्माऽभवत् ॥१८९

पक्षिता पश्चात् श्रीकृष्णे मिलति सति तामेव मालामौत्सुक्याद्वन्यनि धृतवती । आदौ यस्यां सर्पबुद्धिरधुना तामेवाम्लतनुह्या दधारेति सखीषु सोरास सतीषु ।

हे राधे ! तथा तव निष्क्रियाधरे वक्तुमिच्छा गूढाऽतएव लक्ष्या यत्नेन लक्षयितुं शक्या । 'कियदि'ति जनिक्रियाविशेषणम् । वामेन्दु बहिः काल्पनिकम् ।

संवेदनं ज्ञानमेवं काव्यत्वादसंविद् ज्ञानाभावः, तयोः सन्धौ बन्धुरमानसः सन् पुनश्च जाते रोमाञ्चनेत्रजले संस्तन्वन् स्वस्थो बभूव ।

(Y) विधुर्निग्रहानुग्रहसमर्थः— मयि निग्रहः, 'या ते वसति हृदये' तस्यामनुग्रह इति निग्रहानुग्रहयोः स्थानमाननिर्धारणे तवैवाव्याहतोऽधिकार इति सत्येव । किमिति त्वं मयि

(49) 'हृदये मो न नै'ति पाठः (क) पुस्तके । 'हृदयेऽन्या न नैत्यश्रुपूर्णा'मिति (ख) (ग) पुस्तकयोः ।

अत्र 'व्रजकेलिकौतुककथासंवेदनासंविदो: सन्ध्या'विति स्मृतिजड़तयो: सन्धि:। 'रोमाञ्चे'ति हर्ष:, 'नेत्राम्बु' इति विषाद:, 'संहृष्ट'त्रित्यवहित्था—तै: शाबल्यम्। 'प्रकृतौ बभूवे'ति तत्तत्प्रशम:। 'पारिप्लवाक्षे'त्यौत्सुक्योदय:।

अ स अ उ—लिखिष्यामीत्यग्रे स्फुरदभिनिवेशाऽऽर्त्ततरला

ततोऽश्रुस्नाताक्षी धिगिति विधिनिन्दां विदधती।

अवष्टभ्य स्वान्तं(Y) प्रकृतिमिव याता क्षणमसौ

लिखन्ती प्राणेशं शिवशिव विससार सकलम्॥ २००

अत्र 'स्फुरदभिनिवेशे'ति स्मृति:, 'आर्त्ते'त्यावेग:, 'तरले'त्यौत्सुक्यम्—एभि: शाबल्यम्। 'अश्रुस्नाते'ति विषाद:, 'धिगिति विधिनिन्दा'मित्यसूया, तयो: सन्धि.। 'अवष्टभ्य स्वान्त'मित्यादिप्रशम:। 'विसस्मार सकल'मिति मोहोदय:।

अ स अ उ—'विश्रान्त: सखि! संशय:, स रमते, नैकाऽपि तस्य क्षपा

'व्यर्थे'त्यालपनप्रयोगसमये क्षणं विलोक्यागतम्।

दृष्टा किं श्रुतमश्रुतं किमथवेत्याशङ्कमाना नम-

द्वक्त्रा तेन विचुम्बिताऽथ सुमुखी स्पन्देन मन्दाऽभवत्॥२०१

अत्र 'विश्रान्त' इत्यादि वितर्कप्रशम:। 'स रमते' इत्यसूया, 'नैकाऽपि तस्य क्षपा व्यर्थे'त्यमर्ष:—अनयो: सन्धि:। 'दृष्टे'ति हर्ष:, 'श्रुतमश्रुतं वेति' वितर्क:, 'आशङ्कमाने'ति शङ्का, 'नमद्वक्त्रे'ति व्रीड़ा—एभि: शाबल्यम्। 'स्पन्देन मन्दाऽभव'दिति जड़तोदय:।

माथुरविरहेणात्यन्तव्याकुला काचित् स्वचित्तस्य क्षणिकविनोदार्थमग्रे प्रथमत: श्रीकृष्णं लिखिष्यामीति स्फुरन्नभिनिवेशो यस्या: पश्चादार्त्ता तरलाऽश्रुस्नाताक्षी चाभवत्। ततश्च लिखने विघ्नं दृष्ट्वोपायान्तरमपश्यन्ती विधिनिर्मातुर्विधेर्निन्दां विदधती स्वान्तमवष्टभ्य मन: स्थिरीकृत्य स्वां प्रकृतिं स्वभावं प्राप्ताऽसौ सुस्था भूत्वा प्राणेशलिखनसमये मूर्च्छोदयेन सकलं विसस्मार। शिवशिवेति खेदे। स्पन्देन मन्दा रहिता जड़ाऽभवदित्यर्थ:। निष्ठुरोऽसौत्याकृतपूर्णनावेदनम्। तृतीयचरणे 'हृदयेऽन्ये'ति पाठे, न तु सर्वदृष्टतेव सुधानां माहशामभाग्यहेतुरपि तु एतनायकसुलभोत्कटा चपलताऽपीति सरलमस्मात्मनिवेदनम्। अयञ्च काकुताऽश्रयि किमपि वक्रोक्तिचातुर्यं लक्ष्यम्। अवष्टभ्य स्वान्तमिति—वस्तुतस्तु चित्तस्थैर्ये एव अन्यार्थव्याधिगमो नासुलभ:, निर्वेदस्थायिभावं पदहन्देऽप्येवमादिक्रमेण बहूनां भावानां शृङ्खलान्यायेन सन्निवेश:. यथा 'क्वाहो वा हारे वा' इति काव्यप्रकाशोदाहृते, 'एषोऽरेणुरम: दयामि कलिका: फणगुम्फ लिङ्गोऽलभि'ति दक्षिणाग्राणेश्वरेण भक्तिरमणी·

अ प्र स उ—मनो रागज्वालाज्वरकवलितं भस्मातु चिरा-
दयं प्रेम्णे बद्धोऽञ्जलिरजनि दुःखस्य विगमः।
गुरूणामाक्षेपः खलहसितमित्यप्यैतु पृथुता-
मिति स्वालोहन्दे रुदति समरोदीदथ वधूः॥ २०२

'राग' इत्युत्कण्ठा, 'ज्वाले'ति ग्लानिः, 'कवलित'मिति मोहः, 'भस्मास्त्वि'ति ग्लानिः—एभिः शावल्यम्। 'अयं प्रेम्णे बद्धोऽञ्जलि'-रित्याद्यौत्सुक्यप्रशमः। 'गुरूणामाक्षेप' इति शङ्का, 'खलहसित'मित्यसूया—अनयोः सन्धिः। 'समरोदीदि'ति विषादोदयः। एते उदयोत्तरायत्वारः।

अथालङ्कारसाङ्कर्येण ये प्रकारा भवन्ति तेषामपि दिग्दर्शनम्—तत्र 'हु मातरि'त्यत्र (१२८ श्लोके) 'मात'रिति त्रासः, 'धूर्तेय'मित्यसूया, 'आप प्रिय'मित्यवहित्था—अत्र शावल्यं मौग्ध्यालङ्कारसङ्कीर्णम्। तेषामपि वेङ्गितनिरिङ्गितत्वेन पुनर्यद्वैविध्यमुक्तं तत्र निरिङ्गितमुदाहृतं, वेङ्गितस्य दिग्दर्शनं क्रियते। तत्र 'बाहु' दक्षिणमालिकण्ठवलय' इत्यादौ (१४० श्लोके) सेङ्गितो विलासनामाऽलङ्कारः। तत्र 'प्रौढमनोजविभ्रमभरैः स्वात्मेव विभ्राजते' (Y) इति श्रमगर्वयोः सन्धिः।

एवमुदयशावल्यादीनां दिग्दर्शनं (Z) यथा—

निश्चितं परिसमापितमेव प्रेमशास्त्रपरिशीलनमालि।
श्यामनाम कथमद्य गृहीतं हन्तयो यदखिलाः समुदीयुः॥ २०३

अत्र'खिला हन्तय' इति सर्वं एव मागनुभूता विषादव्याधिग्लान्युन्मादा-मर्षासूयाऽदयः समानकालमुदितवन्तः। एवं 'श्यामनाम्नि विरता भव,

काचित् स्वस्य देहत्यागं निश्चिन्वती सखीः सनिश्चयमाह—मन इति। अनुरागज्वाला रूपज्वरेण ग्रस्तं मनश्चिरकालं व्याप्य भस्मातु भस्मेवाचरतु, अहन्तु न जीविष्यामीति ध्वनिः। देह त्यजन्त्या मम दुःखस्यापि विगमोऽजनि। इत्येवं स्वालोहन्दे रुदति सति।

प्रेमशास्त्रपरिशीलनं मया समापितमिति त्वदग्रे निश्चयं कृत्वा बहुधोक्तम्, हे आलि! तथापि मदग्रे श्यामनाम त्वया कथं गृहीतम्? यतः श्यामनाम्नो हेतुभूतान्मम ग्लान्यादयो-ऽखिलहन्तयः समुदीयुः।

मणिविशेषकेण कुलशेखरकृतेन प्रणीताया मुकुन्दमालाया उत्तरार्द्धनिबद्धे पद्ये च। 'बाहु' दक्षिण'मित्यादि पूर्वपठितश्लोकेऽत्र किञ्चित् पाठभेदमात्रम् आविष्कृतम्—तत् सत्यलक्षण-सङ्गति प्रत्युक्तमिति निगदेनैव व्याख्यातम्।

शान्तिं यान्तु हन्त हृदयस्य विकाराः' इति प्रशमशाबल्यम्। एवं सन्धिशाबल्यं यथा—

उन्मादमोहावपि दैन्यचिन्ते वितर्कशङ्के समकालमेव।
द्विशो द्विशस्तस्य कथाप्रसङ्गे पूर्वानुभूत्या कुरुतोऽतिदुःखम् ॥२०४

'द्विशो द्विश' इत्यवस्थाभेदात्। तथाहि—विरहे 'उन्मादमोहौ', विप्रलब्धाऽवस्थायां 'दैन्यचिन्ते', वासकसज्जाऽवस्थायां 'वितर्कशङ्के' दुःखमेव कुरुतः, ततस्तत्प्रसङ्गं त्यजतेत्यर्थः (50)।

एवं स्वबुद्धिकौशल्यादनुमेयाः सुहृद्भिः।
ग्रन्थगौरवभीत्यैव मया नोदाहृताः परे॥
अनेनैव हि मार्गेण कवयो भावकोविदाः।
विदध्युर्भावकाव्यानि ( ) तेनायं प्रक्रमः कृतः॥

॥ इत्यलङ्कारकौस्तुभे रसभावतद्भेदनिरूपणो नाम पञ्चमः किरणः॥

एवमिति—पूर्वश्लोकस्यैवोत्तरार्द्धस्थाने यदि 'श्रान्तिमपास्य विरते'त्याद्यर्द्धपद्यं पठ्यते तदा प्रशमशाबल्यं भवतीति। ***

(Z) उदयशाबल्यस्य 'वसुदीप्ते'रिति पदादेव परामर्शः, प्रशमशाबल्यस्य 'विरता भव शान्तिं यान्त्वि'ति पदाभ्यामाभानत एव प्रतीतिः। भावकाव्यानि विदधुः—न केवलं भावकाव्यनिर्मितावेव ग्रन्थकृता तात्पर्यमपि तु बहुधा वितन्यमानेनानेनालोचनमया काव्यशास्त्रस्य गौरवाधानेऽपि। 'भावकाव्यानी'ति पदादलङ्कार-ध्वनि प्रतिष्ठापितकाव्यतो रसभावानुभूतानामुत्तमोत्तमकाव्यलक्षणानां व्याहृतिरपि। इति

वैष्णवमतमाद्यातो श्रीकृष्णचरितनिलीनतादात्म्यः।
यदि मे यदि मम कविता न स्यात् शुभ्रप्रार्थनार्हा मा।
मालिन्यतो मदभरादुत मुक्तिसक्तं निर्बध्नतो यदयथात्र दुरन्तसत्त्वम्।
एको रसः प्रतदुरन्तहरानिवसुभोगीकृतः प्रशमितः स निहन्तु सत्त्वम्।
रागी हि पद्मनाभं च्योभजाते आर्तिं यातं यत्र लीनश्च यातु।
भावैरेतारेतनीनाप्रयच्छे माच्योमूलः सोऽस्तु भूतान्तरात्मा॥
इति मौक्तिकावल्यां पूर्वार्द्धमयनिगम्। श्रीः——

(१०) 'अनेनैव' इत्यस्य स्थाने (क)(ख)(ग) पुस्तकेषु।

अथ 'गुणा माधुर्य्याद्या' इति (१म किरणे १म कारिकायाम्) कृतोद्देशस्य गुणस्य लक्षणपरीक्षे करिष्यन् प्रथमतो लक्षणमाह—

**रसस्योत्कर्षकः कश्चिद्धर्मोऽसाधारणो गुणः ।**
**शौर्य्यादिरात्मन इव वर्णास्तद्व्यञ्जका मताः ॥ १७६ का**

आत्मन इति—यथा शौर्य्यादिकमात्मन एव नाकारस्य, (क) तथा माधुर्य्यादिकं रसस्यैव,न त्वाकाररूपयोः शब्दार्थयोः(१)। न ह्ययमाकारः शूरः स्थूलत्वादिति सद्धेतुः, अस्थूलस्यापि शूरत्वदर्शनात्, यथा महामतङ्गजपञ्चाननयोः। यत्तु वीरसूसुतयोः शिशुयूनोराकारगतमेव शूरत्वं तच्च वयःकृतमेव, तेन सव्यभिचारदोषादाकारस्य शौर्य्यादिगुणो न भवति किन्तु तस्य व्यञ्जक

अथ गुणस्वरूपमस्योद्देशलक्षण-परीक्षा इति त्रय एव व्यवहाराः, तत्र काव्यरूप-पुरुषवर्णनप्रसङ्गे 'गुणा माधुर्य्याद्या' इत्यनेन (१म कारिकायाम्) गुणस्योद्देशः कृतः। सङ्क्षेपतो नाममात्रेण कथनमुद्देशः। उदाहरणं परीक्षा—साऽग्रे वक्ष्यते। अधुना गुणस्य लक्षणं करोतीत्याह—रसस्येत्यादिना। यथा जीवात्मन उत्कर्षजनक आत्मनिष्ठः कश्चिद्धर्मविशेष एव शौर्य्यं तथा रसस्योत्कर्षजनको रसनिष्ठः कश्चिद्धर्मविशेष एव माधुर्य्यम्। यथा नानाविधासाधारणगुणक्रिया एवात्मनः शौर्य्यव्यञ्जकाः, तथा कठोरवर्णभिन्नाः सुकुमारवर्णा एव रसनिष्ठमाधुर्य्यव्यञ्जका भवन्तीत्याह—वर्णा इति। तस्य माधुर्य्यस्य। नन्वनुमानादेव शौर्य्यमपि देहधर्म एव भवत्वित्याह—नहीति। तत्र हेतुः यतोऽस्थूलस्य सिंहस्य शौर्य्यं, तथा स्थूलस्य मतङ्गजस्य न सिंहवच्छौर्य्यम्। वीरं सूते वीरसूस्तस्याः

(क) अथ गुणदोषालङ्काराणां स्वरूपनिर्णये सुस्पष्टस्तावद्द्वयी गतिरभ्युपगम्यते। प्राञ्चो दण्डिवामनादयस्तदनुसारिणः केचन नवीनालङ्कारशास्त्रविदश्च संघटनाश्रयत्वादि-लौकिकन्यायमनुरुन्धाना अदृष्टस्वरूपं रसमभावपक्षे स्थापयन्तो गुणानां प्राणत्वं शब्दार्थ-गतत्वञ्चैवोद्घोषयन्ति। तेषामयमाशयः, गुणादिविवेचने प्रत्यक्षतः शब्दार्थचमत्कारित्व-प्रतीतिरेव मुख्यं लिङ्गं. रसस्य कथञ्चिदनुभवसिद्धत्वेऽपि निर्द्धारितस्याश्रयस्याभावात्तस्या-स्य चोत्कर्षापकर्षप्रकाराः कथङ्कारं सम्भवेयुः, काव्यकर्त्तॄणां काव्यकरणे शब्दार्थद्वारैव चमत्कृतिमतो प्रवृत्तिश्चात्र प्रमाणम्। अर्वाञ्चो ध्वनिकारमम्मटविश्वनाथप्रभृतयस्तु काव्यस्य

(१) 'आकारौ वर्णमयत्वा'दित्यधिकवाक्यांश. पाठ. (ज) पुस्तके।

आकारः । अत 'उत्कर्षकत्वं गुणत्व'मिति मुख्यं लक्षणम् । सदैकरूपस्यानन्दस्य रसत्वेनोत्कर्षापकर्षयोः प्रमाणाभाव इति रसशब्दोऽत्र तदास्वादार्थः (क), तेन रसास्वादोत्कर्षकत्वं गुणत्वम् ।

## गुणस्य व्यञ्जका वर्णाः—१७१ का

यथाऽयं शब्दार्थव्यतिकरः काव्यतया व्यवहरणीयो रसात्मकत्वाद् इति रसात्मकत्वहेतुमत्तयैव शब्दार्थयोः काव्यव्यवहारः, तथाऽयं वर्णसमूहो मधुररसादिव्यञ्जकः सुकुमारादित्वात् इति सुकुमारत्वादिहेतुमत्तामेव वर्णानां रसस्य माधुर्यादिव्यञ्जकत्वे व्यवहारः । तेन समुचितमेव वर्णानां माधुर्यादिव्यञ्जकत्वम् (क) । ननु 'उत्कर्षकत्वं गुणत्व'मिति चेत्तदाऽलङ्काराणामप्युत्कर्षकत्वं वर्त्तते, तेषामपि गुणत्वमस्तु । सत्यं, यथा हारादयो ह्यलङ्काराः कण्ठाद्यङ्गान्येवोपकुर्वन्ति नात्मानं, तथाऽनुप्रासस्वभावोक्त्यादयोऽलङ्काराः शब्दार्थमेव, नतु काव्यम् । एवञ्चेत्तदा श्रुतिकटुपुष्टार्थादिदोषाणां शब्दार्थाश्रयत्वेन तदपकर्षकत्वमेवास्तु, कथं रसापकर्षकत्वं, यन्मूला तेषां दोषता ?

पुरुषोः शिशुयूनोर्मध्ये शिशोरपेक्षया युवा शूर इत्यत्र यद्देहगतशूरत्वं तत् वयःकृतमेव, न तु गुणकृतमित्यतो शिशुं व्यक्तशौर्य्य एवात्र दृष्टान्तो बोद्धव्यः । तेन स्थूलत्वरूपहेतोर्व्यभिचाराद् न शौर्य्यादिगुणो देहस्य न भवति, तस्य शौर्य्यस्य नानाविधगुणक्रियाविशिष्ट आकारो व्यञ्जक इत्यर्थः । अत इति—रसोत्कर्षजनकताऽवच्छेदकधर्मत्वं गुणत्वमित्यर्थः । न च 'गोपीभिः सह विहरति हरि'रित्यत्र शृङ्गाररसात्मकत्वं वर्त्तते, न तत्र काव्यत्वव्यवहारः, अतोऽत्र व्यभिचारात् कथं रसात्मकत्वस्य हेतुत्वमिति वाच्यम्, यतोऽत्र हेतौ (२) काव्यत्वजातिमत्त्व इति विशेषणं देयम् । 'गोपीभिः सह विहरती'त्यत्र काव्यत्वजातेरभावादेव न व्यभिचार इति भावः ।

तावत् भरतपीयूषवर्षिवर्णितकेतत्रयामयं क्रमशदुर्गमितमिवरोचयमानाः स्वाश्रयोत्कर्षद्वारा रसोत्कर्षादिकृतजनित्वं गुणादीनां निर्दिशन्ति । प्राचीनपक्षीयाणां युक्तित्रयमन्वयव्यतिरेकाभ्यां, लोकन्यायादृश्यायेस्य रसशब्दस्यालाक्षणिकत्वनिर्वचनेन, काव्यघटनाऽनुकूलशब्दार्थयोः विनिविष्टत्वेऽपि सत्कृतन्यायेन रसाव्यभिचारित्वं प्रतिपादयन्तः कवीनामाशयो हृदयेन च स्वीकुर्वन्ति । तत्र प्रकाशकृतां मम्मटभट्टानां 'तददोषौ शब्दार्थौ

(१) पत्र (२) पृष्ठे । [illegible] (२) पृष्ठे, 'यतोऽत्र हेतौ काव्यत्वजातिमत्त्वे विशेषणं देय,' मिति (क) पुस्तके, [illegible] ।

*उच्यते—यथैव शौर्य्यादयो गुणास्तथैव कातर्य्यादयो दोषा अप्यात्मन एव* धर्माः, तस्यैवोत्कर्षापकर्षहेतव उपलभ्यन्ते। एवमेव माधुर्य्यादयो गुणाः श्रुतिकट्वादयो दोषा अपि रसस्यैवेति(3) ।

वर्णा माधुर्य्यादिव्यञ्जकाः सुकुमारत्वादिति, अत्र न तु सुकुमारत्वं कोमलत्वं, तस्य शिथिलत्वात् । यथा 'शिथिलं, मालतीमाला लोलालि-कलिला (4) यथे'त्याचार्य्यदण्डिनः (क) ।          Kavyadarsa, Chapt 1 Verse 43

एवञ्चेदिति—नयोर्हिं इत्यपयोः शब्दार्थयोरपकर्षकत्वमस्तु यन्मूला रसापकर्षकत्वमूला तेषां श्रुतिकट्वादीनां दोषता। तथा च 'रसापकर्षकत्वं दोषत्व'मिति दोषलक्षणात्तेषां रसापकर्षकत्वाभावेन माऽस्तु दोषत्वमिति पूर्वपक्षः। ननु सुकुमारत्वं यदि कोमलत्वमुच्यते तदा वर्णेषिष्टकोमलत्वं शिथिलत्वमेव भविष्यति, तत्र कठोरवर्णभिन्ने सर्वत्रैव वर्त्तते। एवञ्चेत् यत्र कवितायां लकारबाहुल्यमात्रं तत्र माधुर्य्यं नास्ति, किन्तु भवन्मते माधुर्य्य-व्यञ्जका बहुतरलकारघटितकोमलवर्णा वर्त्तन्ते, इत्यतः सुकुमारत्वं न कोमलत्वमित्याह—न तु सुकुमारत्वमिति। *तस्य कोमलत्वस्य शिथिलरूपत्वात् । यथा* लोलालिभिः कलिला युता मालतीमालेति दण्डिनोक्ते पद्ये माधुर्य्याभावेऽपि कोमलवर्णा वर्त्तन्ते, एतमत्रापि शृङ्गाररसवर्णनप्रसङ्गे ।

नगुणा'वित्यादिना काव्यस्वरूपं प्रकटयता गुणानां विवेचनमाभावेन निर्दिशता पुनः 'ये रसस्याङ्गिनो धर्मा.' 'आत्मन एव हि यथा शौर्य्यादयः, नाकारस्य, तथा रसस्यैव माधुर्य्यादयो गुणा' इत्यादि चाभिदधता प्राचीनपद्धतिसङ्गतित्यागे काऽप्यनिच्छा स्फुटमेव वरीवर्त्तीति नवीनानां मध्ये तेषामनन्यतन्त्रत्वम्। कौस्तुभकृतो मम्मटमतानु-सारिणोऽप्यत्र विषये द्वैधीभावकातराः यथोक्तमेव तैः 'शरीरं शब्दार्थौ ध्वनिरसव आत्मा किल रस' इत्याद्यादिमकारिकायाम्। एवञ्च 'रसोत्कर्षहेतुत्वे सति रसधर्मत्वं, *तथात्वे सति रसाव्यभिचारिस्थितिवत्त्वम्, अथोत्कर्षहेतुत्वेन रसोपकारकत्वमिति लक्षणत्रयं* गुणानां द्रष्टव्य'मिति प्रदीपोक्तौ न केषामपि तेषामाधुनिकानां विमतिः। यद्यप्यत्र पक्षोऽपि नासम्यङ् यतो विसदृशवर्णघटनेनापि गुणत्वं भाति, एवं सति वर्णादीनां व्यञ्जकत्व-

(3) इत ऊर्द्धं देहस्य कायत्वस्थूलत्वादिदोषेऽपि 'काणोऽयं देह' इति न कश्चिदपि वदति अपि तु काणोऽयं देवदत्त इत्यर्थेन, न तु देवदत्तो देह', देवदत्तस्य देहोऽयमिति प्रतीतेः, तेनोपचारादेव दोषाणां रसापकर्षकत्वं, वस्तुतस्तु शब्दार्थयोरेव। एवमलङ्काराणामप्युपचाराद्रसोत्कर्षताऽस्तु तथा सति तेषामपि गुणत्वेन भूयताम्? नैवम्, तेषां शब्दार्थालङ्कृत्यैवोपजीव्यत्वात्, कथं रसापेक्षत्वं', येनोपचारेण भवितव्य'-मिति मुद्रितपुस्तके एतातिरिक्तः पाठः ।

(4) 'कलिते'ति (ख) (क) पुस्तकयोः पाठः ।

अत्रापि—लीलाऽलसललिताङ्गी लघु लघु ललनाललाममौलिमणिः ।
ललिताऽऽदिभिरालीभिर्विलसति ललितस्मिता राधा ॥ १

तेन सौकुमार्यं नाम रञ्जकत्वम् (5) ।

यदुक्तमन्यैः, 'कर्त्तारः काव्यशोभाया धर्मा एव गुणाः स्मृताः ।
अलङ्कारास्तदुत्कर्षहेतवः स्युरिति क्रमः ॥' इति

ललनाया उत्कृष्टमुकुटमणिः श्रीराधिका सखीभिः सह लघु लघु यथा स्यात्तथा विलसति—इत्यत्र माधुर्याभावेऽपि मधुराक्षरघटितकोमलवर्णा वर्त्तन्ते। रञ्जकत्वमिति—चेतश्चमत्कारकारित्वमित्यर्थः। यथाऽद्भुतवस्तुदर्शने सति नेत्रस्य स्फारकताजनक-चमत्कारो जायते तथैवाद्भुतसुकुमारवर्णानां श्रवणे सति चित्तस्य स्फारकताजनक-चमत्कारो भवतीति बोध्यम् ।

मेव, नैतद्दिग्नि दाह्यान्तः सुष्ठु । गुणालङ्कारविवेके च त्रयः पक्षाः—तत्र 'न कान्तमपि निर्भूषं विभाति वनितामुख'मिति लौकिकन्यायमुपजीवतां भामहादीनामलङ्कार एव काव्य-स्वरूपे प्रधानं लिङ्गमिति यथेष्टप्रिनातुभयोरभेदकल्पनैत्येकः पक्षः। तथा च तदुपजीव्य वर्त्तमानानामाचार्योद्भटानां मान्यतसुतौ 'समवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारा-दयः इति गड्डलिकाप्रवाहेणैषां भेदः' 'केनापि प्राक्तनालङ्कारिकेण गुणालङ्कारौ कथाचिद् भ्रान्त्या भिन्नत्वेनोक्तौ, इतरे चाधुनिकास्तु विवेक हेतुविचारं तदनुसारेण तद्भेदं वदन्ती'ति चाचार्यदण्डिवामनयोरुपरि कलङ्कपङ्कलेपार्थे। द्वितीयः पक्षो रीतिगुणात्मवादिभि-रन्वितो वामनादिमतं 'यदुक्तमन्यै'रिति प्रतीकेन मूले व्याचिख्यासुः। चन्द्रालोकप्रतापरुद्रीयादि निबन्धानां मतमालविचालकारोऽव्याभासयालैव मूले। 'निर्दोषा लक्षणवती सरीति गुणभूषिता। सालङ्काररसानेकवृत्तिर्वाक् काव्यनामभाक् ॥' इति स्वरूपनिर्देशकारिकायाः विद्यानाथीयलक्षणस्य वा 'कर्त्तारः काव्यशोभाया धर्मा एव गुणाः स्मृता' इत्यादिकारिकया सह सम्बन्धः। तृतीयपक्षस्तु नवीनानां मतानुयायी 'शब्दार्थयोरस्थिरा ये धर्माः अलङ्कारास्ते' इत्यलङ्काराणां गुणतः स्वरूपतो भेदः। वामनोऽपि कश्चिदस्फुटतयाऽत्र तदीयमस्मात्ति ( ३।१।२ काव्यालङ्कारसूत्रवृत्ति ) समुद्घाटयामास। तथा च तत्र तट्टीकाकारा क्षिप्रभूपालचरणाः—'नित्यानित्यत्वाभ्यां गुणालङ्कारभेदः सिद्ध' इति। अलङ्काराणां सुभगत्वादाद्भावोत्कर्षता, वस्तुतस्तु ते गुणोत्कर्षतोऽभिन्ना इति पक्षः 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव' इति नयेनालङ्कारस्योपचीयत्वे प्रश्नस्तुकल्पः। अतोऽव्याप्त्यति-व्याप्तिवारणाय वर्णानां गुणव्यञ्जकत्वमायातीत्यनूद्यते। एष्टिपद्यांशस्तु स्पष्टशैथिल्यस्याप्य शिथिलस्य नन्वेतदंशे मार्गस्वरूपस्य निदर्शनम् अत्रेदमवधेयम्, न तावदाचार्यदण्डिमतेऽत्र शिथिलत्वदोषस्पर्शः—परमयं गुणगुम्फित एवेति कश्चित्। 'ऊर्ध्वतुष्कूर्ध्वे'रित्यत्र प्रथम किरणे स्वल्पः पाठभेदः। 'अथैकस्ये'त्यादि टीकालतामाक्षेपस्तत्समाधानञ्च प्रागुक्तदिशा सूचितकल्पमिति विरम्यते।

(5) 'व्यञ्जकत्व'मिति (ख) (ग) पुस्तकयोः। (क) पुस्तके टीकायामपि स एव पाठो गृहीतः।

तदपि नातिमनोहरम्—यतः खलु गुणालङ्कारादिमद्वाङ्निर्मितिविशेषस्यैव (6) काव्यत्वाङ्गीकारे न गुणालङ्कारादिभ्योऽन्यः काव्यनामा पदार्थोऽस्ति, नापि काव्यादन्ये गुणालङ्काराः, किं कस्य शोभायाः कर्त्तारो भविष्यन्ति ? किञ्च काव्यशोभायाः कर्त्तार इत्येकस्यैव काव्यस्य किं सर्वे गुणा शोभाकर्त्तारः, किं पृथक् ? आद्येऽसमग्रगुणयोः पाञ्चालीगौड्योः काव्यशोभाकरत्वानुपपत्तिः । यदि वा पृथगेव तदा 'ऊर्जत्स्फूर्जद्गर्जने'त्यादौ(१म किरणे ६ श्लोके) सत्यप्योजोगुणे नास्य शोभा । तेन वर्णा एव माधुर्यादिव्यञ्जकाः, माधुर्यादयो मधुररसाद्युत्कर्षका इति स्थितम् (क) ।

**—ते माधुर्यादयः पुनः (7) ॥ १७८ का**

अथ कति ते इत्याह (7)—

**माधुर्य्यमपि चौजश्च प्रसादश्चेति ते त्रयः ।**

**केचिद्दशेति ब्रुवत एष्वेवान्तर्भवन्ति ते ॥ १७९ का**

ते गुणाः सप्त एष्वेव माधुर्यादिष्वेव । के ते सप्तेति दर्शयति—

कस्यचिन्मते माधुर्याद्या गुणाः काव्यपुरुषस्य शोभाकर्त्तारः, अलङ्कारास्तस्योत्कर्षहेतव', तन्मतं दूषयितुमुत्थापयति—यदुक्तमिति । एतन्मतं दूषयति—यत इति । गुणालङ्कारविशिष्टस्यैव तन्मते काव्यत्वाङ्गीकारे गुणालङ्कारावपि काव्यपुरुषान्तर्भूतावेव, तत् कथं गुणस्य काव्यशोभाकरत्वं कथं वाऽलङ्कारस्य काव्योत्कर्षकत्वं, स्वस्य स्वशोभाजनकत्वाद्यभावात् । दोषान्तरमाह—किञ्चेति । यद्येकस्य काव्यपुरुषस्य सर्वे गुणा एव शोभाकर्त्तारो नान्ये (क), किंवा गुणजन्यशोभां प्रति गुणस्य कारणत्वं, गौडीप्रभृतिरीतिजन्यशोभां प्रति रीतेः कारणत्वमिति पृथक् पृथक् कारणत्वम्—इति पक्षद्वयं क्रमेण दूषयति । आद्य इति । नापि द्वितीयः पक्ष इत्याह—यदि वेति । पाञ्चाल्यादीनां पृथक् शोभाजनकत्वाङ्गीकारे पाञ्चाल्यादीनामपि गुणत्वापत्तिः, यदि तत्र गुणत्वकारणाय 'पाञ्चाल्यादिरीतिभिन्नत्वे सति काव्यशोभाकरत्वं गुणत्व'मित्युच्यते तदा 'ऊर्जत्स्फूर्ज'दित्यत्रौजोरूपगुणेऽव्याप्तिः, तत्र काव्यशोभाजनकत्वाभावात्—माधुर्यप्रसादगुणयोरेव काव्यशोभाजनकत्वं, न तु ओजोगुणस्येति ज्ञेयम् ।

पुनः स्वमतमाह (ख)— ते इति ।

(6) '—मद्वाङ्निर्मिति. काव्यमिति विशेषस्यैव काव्यत्वाङ्गीकार' इति (ख) पुस्तकेऽन्यः पाठ ।

(7) 'अथ के ते माधुर्यादयो गुणा' इत्यसमासश्लोकांशकारिकावर्जितः सुगमतरः पाठ (ख)

(क) पुस्तकयोः ।

अर्थव्यक्तिरुदारत्वं श्लेषश्च समता तथा।

कान्तिः प्रौढ़िः(ख) समाधिश्च सप्तैते तैः समं दश ॥१८० का

तैर्माधुर्यादिभिः। समानां लक्षणमाह—

प्रसाद एवौजोमिश्रशैथिल्यात्मा भवेद्यदि।

तदाऽर्थव्यक्तिरिष्येत, विकटत्वमुदारता ॥

पदानामेकरूपत्वं सम्बन्धादावस्फुटे सति।

श्लेषो, मार्गाभिद एव समतो,ज्ज्वलमेव हि।

कान्तिः, साभिप्रायतया समासव्यासयोः सतोः ॥

वाक्यार्थे पदविन्यासः पदार्थे वाक्यनिर्मितिः।

प्रौढ़ि,रारोहावरोहक्रमः समाधिरिष्यते ॥ १८१ का

तदन्तर्भावे युक्तिं वक्ति।

तेष्वेवान्तर्भवन्त्येक एके वैचित्र्यबोधकाः।

एके दोषपरित्यागाद्गतार्था इति (8) नो दश ॥१८२का

अर्थव्यक्तिः प्रसादान्तः प्रौढ़िर्वैचित्र्यबोधिका ॥१८२(क) का

न तु गुण इत्यर्थः (ख)।

समता तु क्वचिद्दोषः—१८३ का

समता तु क्वचिद्दोषोऽपि भवति। कुत इत्याह—

वैषम्यं यत्र वाञ्छ्यते।

सजातीयविजातीययुगपद्दर्शने सति ॥ १८४ का

समानामिति—प्रस्तुतमिदानीं समानां लक्षणमात्रं कृतं, न तु तेषामुदाहरणम्—सम्प्रदायविदा लक्षणज्ञानात्ऽपि सम्यक्तया न भविष्यतीति। यत्र न सर्वेति—न वैषम्यमभीष्टं

(ग) प्रौढ़िरिति—इति समासमाधिस्थिते गुणाः। गृहीतस्य सौकुमार्यस्य स्थानेऽस्यो-देशः। तदप्युक्तम् अर्थगुणविवेचनप्रस्तावे वामनेन 'अर्थस्य प्रौढ़िरोजः' (३।२।२) इति कृतनिर्देशस्योजसो विभेदप्रदर्शनेऽप्युपयोगिनीति ध्येयम्। माधुर्यसौकुमार्ययोः प्राचीन-परिभाषितयोरैक्यमत्र मतयोरभेदानुपलब्धिरपोह्य प्रथा। समसमादेति—समसमैवेति वस्तु युक्तम्। एतच्चास्तु कौस्तुभकृता प्रकाशकारादीनामनुसरणतया दर्शितम्। गुणानां

(8) '—[illegible]' इति [illegible] पुस्तके।

यत्र परस्परविरुद्धयोर्युगपद्दर्शने वैषम्यमभीष्टं तत्र समता दोष एव। यत्र न तथा तत्र गुणः। यथा—

ऊर्द्धेहंसर्द्धिगोवर्द्धन (ख) शिखरिवरोद्धारसारोहुरोऽहं
यद्दे यद्वेजनेत्रे ! तव कुचमुकुलालोकने जातकम्पः।
उद्दण्डे कालियस्य स्फुटविकटफणामण्डले ताण्डवाढ्यः
सोऽयं (9) राधेऽभिभूतस्तव तरलितया हन्त वेणीभुजङ्ग्या ॥ २

इत्यादिषु समतैव गुणः।

**ग्राम्यकष्टत्वादिहानादपारुष्योररीकृतौ।**
**औज्ज्वल्यरूपा या कान्तिः सा माधुर्य्यान्तरस्थिता(ख) ॥**
**अन्ये त्वोजसि वर्त्तन्ते तेन ते न पुनर्दश ॥ १८५ का**

अन्ये श्लेषसमाधुदारता ओजस्येवान्तर्भवन्तीत्यर्थः। नन्वेवं चेत् क्लिष्टत्व-दोषनिरसनेनैव प्रसादगुणस्यापि माधुर्य्य एव लये: किं प्रसादगुणस्य पृथङ् निर्देशः ? नैवं, प्रसादस्य स्वतःसिद्धत्वात् क्वान्तर्भावः ? अन्यथाऽनवस्थाप्रसक्तेः।

तत्र समता गुण एव। वैषम्यवर्णनमेवाह—ऊर्द्धेहेति। ऊर्द्धेस्थितान् केशादीनपि स्वर्द्धते यो गोवर्द्धनो गिरिश्रेष्ठस्तस्योद्धारे सारोद्धुरः श्रेष्ठभारवाहकोऽहम्। यद्दे यद्वाधिपश्रेष्ठो भवामीत्यर्थः।

ग्राम्यत्वकष्टत्वादिदोषाभावादपारुष्यस्याकठोरत्वस्याङ्गीकृतौ या कान्तिः सा माधुर्य-स्यान्तर्भूता न पृथक्। नैवमिति—यथाऽयं घटोऽयं पट इति पृथक् पृथग्व्यवहार एव घट पटयोः पृथक्त्वे प्रमाणं तत्र एव नैकस्मिन्नन्यस्यान्तर्भावः सम्भवति, तथैवायं प्रसादगुणोऽयं माधुर्यगुण इति पृथग्व्यवहार एव पार्थक्ये प्रमाणमित्यर्थः—अन्यथा सर्वेषां पदार्थानां सर्वेष्वन्तर्भावप्रसक्तेरनवस्था स्यादिति ज्ञेयम्। नन्वेवं चेत् दशानां गुणानामपि माधुर्यादि-ष्वन्तर्भावो न सम्भवति तेषामपि पृथक् पृथग्व्यवहारा वर्त्तन्त एव इत्यत आह—किञ्चेति। उभयमिति—त्रिविधत्वं दश ? ( दशा ) विधत्वमित्युभयमित्यर्थः।

त्रैधत्वमेवोपपादयन्त उद्योतकृतो नागोजीभट्टा इत्थमेषां रसधर्मत्वमपि प्रतिष्ठापयामासुः— 'सामाजिकानां तदरसजन्यास्तिस्रोऽवस्था द्रुतिर्दिस्फारो विकाशश्चेति। तत्र शृङ्गारशान्त करुणेभ्यो द्रुतिश्चित्तस्य। वीररौद्रबीभत्सेभ्यो विस्तारस्तस्य। हास्याद्भुतभयानकेभ्यो विकाशश्चेति। विकाशश्च हास्ये वदनस्य अद्भुते नयनस्य भयानके मृतापसरणरूपो गमनस्य। स च कश्चिद्विस्तारेण युक्तः विभाववैचित्र्यात्। प्रसादस्तु सर्वेषामाद्यिस्यकारी-

(9) 'सोऽहमिति (क) (ग) (ङ) (ञ) पुस्तकेषु पाठः।

किञ्च मतान्तरकथनमेवैतत्, तेन दशविधत्वं न दुष्टमित्युभयमप्यस्माक-मभीष्टम् (10) (ख) ।

अथ माधुर्य्यादयः के ते इत्याह—

रञ्जकत्वं हि माधुर्य्यं चेतसो द्रुतिकारणम् ।
सम्भोगे विप्रलम्भे च तदेवातिशयोचितम् ॥ १८६ का

चकारात् करुणादौ च (ग) ।

चेतोविस्ताररूपस्य दीप्तत्वस्य हि कारणम् ।
ओजः स्याद्वीरबीभत्सरौद्रेषु क्रमपुष्टिकृत् ॥ १८७ का

दीप्तत्वं शैथिल्याभावः गाढ़त्वमित्यर्थः । तच्च चेतसो विस्तारहेतुर्विस्तार-कारणम्—क्रमाद्वीरादिषु पुष्टिमर्हतीत्यर्थः ।

श्रुतिमात्रेण यत्रार्थः सहसैव प्रकाशते ।
सौरभ्यादिव कस्तूरी प्रसादः सोऽभिधीयते ॥
स सर्वेषु रसेष्वेव सर्वास्वपि च रीतिषु ।
उपयुक्तः (ग)—१८८का

स प्रसादनामा गुणः ।

व्यञ्जकाः स्युर्दर्णाश्च रचना अपि ॥ १८९

तेषामित्यर्थात् । तत्र वर्णानां व्यञ्जकत्वमिदानीं दर्श्यते, रचनायां रीतिनिरूपणे दर्शयितव्यम् ।

**स्पर्शाः स्वपञ्चमाधःस्था अटवर्गा लघू रणौ ।**
**माधुर्य्यव्यञ्जका वर्णा नैकरूपाः क्रमेण चेत् ॥ १८०का**

नैकरूपा इति पृथक् पृथग्वर्गजा एव । अटवर्गा इति टवर्गः केवलो वा स्वपञ्चमाधःस्थो वा श्रोजस्येव । उदाहरणम्—

विधाय पुष्पावचयं चलन्त्या मञ्जीरनादो मदखञ्जनाक्ष्याः ।
मन्दोऽप्यमन्दं हरिमञ्जनाभं कुञ्जेशयं जागरयाञ्चकार ॥ ३

नैकरूपाः क्रमेणेत्येकरूपत्वं दूषणम् । यथा—

कान्ते निशान्त एकान्ते पादान्ते क्षान्तिमन्तति ।
सञ्जसे गञ्जनव्यञ्जी मञ्जीरो मञ्जुभिः रुतैः ॥ ४

**इत्यादिः खल्वनुप्रासरीतिरूढस्य वर्त्मनः ।**
**माधुर्य्यवहुलत्वेऽपि गौड़ीया रीतिरिष्यते (ग)॥१८०(क)का**

किन्तु—इन्भने तव कञ्जाचि ! कान्तिः काञ्चनभङ्गुरा ।
श्रम्बुदोपरि शम्पेव नन्दनन्दनवक्षसि ॥ ५

तडदित्यर्थः । तेषां माधुर्य्यादीनाम् । स्पर्शा इति—कादयो मकारपर्य्यन्ता वर्णाः स्पर्शा इत्यर्थः । तत्र स्वस्य कवर्गस्य पञ्चमो ङकारः तदधःस्थाः ङ्क-ङ्ख ङ्ग ङ्घ वर्णा माधुर्य्यव्यञ्जका भवन्ति—एवं चवर्गादपि ज्ञेयम् । अटवर्गा इति—टवर्गास्तु सर्वथैव न माधुर्य्यव्यञ्जकाः । रेफ-णकारौ लघू एव माधुर्य्यव्यञ्जकौ । चेत् यदि ते पञ्चमाधःस्था वर्णा एकरूपा न भवन्ति तदा माधुर्य्यव्यञ्जकाः— यदि चैकस्मिन्नपि काव्ये ङ्क ङ्ख ङ्गादिसजातीयवर्णानां धारावाहिकतया निवेशस्तदा दोष एव—उदाहरणे व्यक्तीभविष्यति । तस्मात् पृथग्वर्गजा एव पञ्चमाधःस्थसंयुक्तवर्णा ग्राह्या, न त्वेकवर्गजा इत्यर्थः । एकवर्गस्थसजातीयवर्णानां निवेशो दोषो यथा 'कान्ते निशान्ते' इति । कान्ते श्रीकृष्णे एकान्ते निशान्ते मन्दिरे त्वामन्विष्य पदान्ते क्षान्तिं क्षममन्तति भ्राति सति । अति अदि बन्धने धातुः—क्षम प्राप्नुहीत्यर्थः । त्वन्मञ्जीर इवाञ्जः श्रीमन्तव गमनस्यानैव त्वं वदेः स इत्याचेपस्य यज्जी प्रकाशकः ।

अनुप्रासरीतियुक्तस्यास्य मार्गस्य मधुरवर्णबहुलत्वेऽपि गौड़ीया रीतिरेवात्र, न तु रसनिष्ठं माधुर्य्यमिति हृदयम् । इन्भा विद्युदिव । तदेवमेव माधुर्य्यव्यञ्जकमेवानुप्रास इति

(ग) चकारात् व्यादिपदेन ग्राम्योऽपि गृहीतः । इदानीं रसनिष्ठधर्मत्वमेषां दर्शयति । त्रिधा विभागस्य तत्तत्स्वहृद्योतकत्वस्य नातिहेयम्, तच्च प्राक् दर्शितम्, प्रसादगुणस्य रसविशेषातिरिक्तत्वम् । प्रसादस्य खलु वाक्यनिष्ठो गुण इदन्याभ्यां भिन्न इति जयदेवादिमतम् । गौड़ीया रीतिरिति—अयमुपविभागो रीतिगुणस्वरूपनिरूपणकाकुण्यकलितोऽनवस्थापादकश्च

गर्वादिगर्वखर्वीकरण(12)-चणभुजादण्डशौटीर्यचण्डः
शिष्टाभीष्टं कृषीष्ट प्रचुरघनघृणाविक्रमश्चक्रपाणिः ॥ ६

एष ओजोमार्गः ।

अटवर्गैररेफैश्च क्खग्घाभ्याञ्च विवर्जितैः ।
अयुक्तैश्च महाप्राणैर्मध्यतां प्रतिपद्यते ॥ १९२ का

मध्यतां मध्यौजस्त्वम्(ग) । क्खग्घाभ्यामिति—च्छादिवर्जनं न कार्य-मित्यर्थः । महाप्राणैरिति हकारेण सह वर्गचतुर्थैस्तैः, अयुक्तैः केवलैरित्यर्थः, चकारात् क्वचित् संयुक्तैश्च ।

शृङ्गारेऽप्येष चारुः स्यात् करुणादौ भवेन्न वा ।
माधुर्यव्यञ्जकैर्वर्णैर्युक्तश्चेदतिसुन्दरः ।
गाढ़बन्धः स आख्यातः पाठे वदनपूर्त्तिकृत् (घ)॥१९३का

यथा—कस्तूरीतिलकायितं त्रिजगतीसौभाग्यलक्ष्म्या घन-
स्निग्धश्याममगण्यमसमधिकश्लाघ्यं मुहुः पातु वः ।
आभीरीस्तनकुम्भकुङ्कुमरसासङ्गेन सौगन्ध्यभाग्—
ब्रह्मानन्दमहासुधाम्बुधिरहःसन्दोहदोहं महः ॥ ७

ऊर्द्ध्वं यस्य पादपीठं सर्वेषां देवराजप्रभृतीनां मूर्द्धा मुकुटमण्डलीरत्नदीप्ति-च्छटाभिश्छन्नं प्रकटितपट्टतायाः प्रौढ़िम्नि भेयां शैर्मत्त्रोभिस्तेजोभिः करणैर्वा देवादेरपि गर्वस्य खर्वीकरणे ख्यातो यो भुजादण्डस्तस्य शौटीर्ये पराक्रमे प्रचण्डश्चक्रपाणिः शिष्टाना-मभीष्टं कृषीष्ट । कथम्भूतः ? प्रचुरो मेघतुल्यकृपाविक्रमो यस्य सः ।

एष मध्यमौजोव्यञ्जकवर्गः शृङ्गारे कस्मिंश्चिन्मते चारुः स्यात् कस्मिंश्चिन्मते न । ब्रह्मा-नन्दस्वरूपमहासुधाम्बुधेः सकाशादपि यो रहःसन्दोहो रहस्यप्रेमानन्दसमूहस्तं पूरयति यन्महस्तेजःस्वरूपं वस्तु तद्वो युष्मान् पातु । कथम्भूतम् ? मेघतुल्यस्निग्धश्यामं पुनश्चागण्य-माममगतश्लाघमेकश्लाघ्यमित्यर्थः । पुनः त्रिजगतीसौभाग्यसम्पत्तिरूपनायिकायाः कस्तूरी-तिलकायितम् ।

(घ) 'गाढ़बन्धत्वमोजः' इति वामनकृतं शब्दगुणत्वेन निर्द्दिष्टस्यौजसो लक्षणम् । 'बन्धः पदरचना, तस्य गुणा ओजःप्रभृतयः' इति कविप्रियायाम् । स च बन्धो दृढ़मिश्रशिथिलभेदेन त्रैविध्यमापन्नो यथायथं चमत्कारमावहतीत्याकरे सूचितम् । अत्र सौन्दर्यं च न पाठधर्मत्वेन,

(12) —'करणचणभुजे'त्यादि पाठः केवलम् (क) पुस्तक एवोपलभ्यते ।

यथा वा—सान्द्रानन्दघनं घनाघनघटाखिग्धोज्ज्वलश्यामल-
ज्योतिर्जालजटालमालय इव प्रेमाब्धिलोकीश्रियः ।
कृष्णसाङ्गमनङ्गसङ्गरलसल्लीलापाङ्गनाऽपाङ्गक-
व्यासङ्गेन तरङ्गितं मम मनः सङ्गित्वमङ्गीक्रियात् ॥ ८

प्रसादस्य व्यञ्जिका तु केवलं रचना मता ।
न तत्र वर्णप्राधान्यं प्रसादो विशदार्थता ॥ १६४ का

सर्वेष्वेव रसेषु प्रसादस्योपयुक्तत्वात्र वर्णगतनियमः । उदाहरणम्—
कोपे यथाऽतिललितं न तथा प्रसादे वक्त्रं विधे ! सततमातनु मानमस्याः ।
इत्याकलय्य दयितस्य वचोविभङ्गीं राधा विवर्त्तितविनम्रमुखी बभूव ॥ ८ ॥

यद्यपि गुणपरतन्त्रा रचनाद्यास्तदपि वक्त्रादेः (घ) ।
औचित्यात्तदधीना भवन्ति तस्माद् गुणोऽपि तदधीनः॥१६४(क)का

तस्माद्धेतोः, वक्त्रादेर्वक्तृवाच्यबोद्धव्यानां, तदधीनो वक्त्राद्यधीनः । उद्धते
वक्तरि उत्तमौजो धीरोदात्ते वक्तरि मध्यममोजो धीरललिते वक्तरि माधुर्यं,

## सप्तमः किरणः ।

अथ 'उपमितिमुखोऽलङ्कृतिगण' इति ( १मकारिकायाम् ) यदुक्तं तत्र मुखशब्दस्य मुख्यार्थत्वादमुख्यस्य प्राप्तौ प्रथमतोऽमुख्यं शब्दालङ्कारमेवाह—

> एकेनार्थेन यत् प्रोक्तमन्येनार्थेन चान्यथा ।
> क्रियते श्लेषकाकुभ्यां सा(१)वक्रोक्तिर्भवेद्द्विधा (क) ॥
> श्लेषोऽपि च भवेद्द्वेधा सभङ्गाभङ्गभेदतः ॥ १९५ का

श्लेषेण काक्वा वा, श्लेषश्च द्विधाऽभङ्गः सभङ्गश्चेति । तत्राभङ्गश्लेषेण—

'कस्त्वं श्याम !' 'हरि'-'र्बभूव तदिदं वृन्दावनं निर्मृगं'
'हंहो नागरि ! माधवोऽस्म्य'-'समये वैशाखमासः कुतः ?'
'मुग्धे ! विद्धि जनार्दनोऽस्मि' 'तदियं योग्या वनेऽवस्थिति'-
'र्बालेऽहं मधुसूदनोऽस्मि' 'विदितं योग्यद्विरेफो ( क ) भवान्' ॥ १

अथात्रालङ्कारो द्विविधोऽर्थालङ्कारः शब्दालङ्कारश्चेति । तत्र पूर्वोक्त "उपमिति-मुखोऽलङ्कृतिगण" इत्युपमितिप्रभृत्यर्थालङ्कारो मुख्यः, वक्रोक्त्यादिशब्दालङ्कारो गौणः । अत्र आदौ गौणालङ्कारमेवाह—अथेत्यादिना ।

अभिधावृत्त्यैकेनार्थेन यदस्तु प्रोक्तं श्लेषकाकुरूपेण व्यञ्जनावृत्तिभ्यां प्रोक्तेनान्येनार्थेन तदवस्त्वन्यथा क्रियते तत्र स्थले शब्दनिष्ठो वक्रोक्त्यलङ्कारो ज्ञेयः ।

श्रीराधिका आह—हे श्याम ! त्वं कः ! अभिधावृत्त्या प्रत्युत्तरमाह—हरिरिति । पुनः श्लेषरूपव्यञ्जनावृत्त्या 'हरि'शब्दस्य सिंहपरत्वमभिप्रेत्य श्रीराधा पूर्वार्थमन्यथा करोति —बभूवेति । जनानर्दयतीति श्लेषेण जनपीडकः, अतो वनेऽवस्थितिस्तव योग्यैव । द्विरेफो भ्रमरः, श्लेषेण द्वौ रेफौ यस्येति व्युत्पत्त्या त्वं बर्बरोऽपि । यो हि गोपालकः स बर्बरो भवतीति प्रसिद्धेः ।

---

(क) अथ तावत् काव्यमार्गेऽलङ्कारतया निरूढानां कियती मर्यादेति चिरन्तनानां भामहादीनां सत्यामपि बहुधा विप्रतिपत्तौ ध्वनिकारव्यवस्थापिताध्वनि विहरतां नवीनानां नायं प्रश्नः कामपि सन्देहकूटकोटिमधिरोहति । यत्तु प्राचीनानां मुखपातेन वक्रोक्ति-

सभङ्गो यथा—

'कान्ते' 'कीर्त्तिरकीर्त्तिरेव' 'वद मे किञ्चि'-"ज्जडेभ्यः परं"
'धीरा काऽपि भवत्यहो' 'कथमहो बुद्धिर्भवेत् पूर्णिमा ?'
'का मेधा तव भूयसी' 'न मदने, त्वय्येवमाधारण'-
'स्तन्मा मा स्पृश' 'न स्पृशेय'मिति स श्रीमाञ्जितो राधया (क)॥२

काक्वा यथा—

न वदसि हरिणाऽपि पृच्छ्यमाना न वत विलोकयसे विलोक्यमाना ।
निजमभिमतमीक्ष्यतामिदानीं विधुवदने । समयः स नो न भावी ॥ १
अपि तु भाव्येव, यदा भविष्यति तदा वैकल्यञ्च द्रक्ष्याम इति भावः ।

**अनुप्रास्यत इत्यर्थेऽनुप्रासो(२)वर्णसाम्यतः ।१८६का**

सजातीयं वर्णमनु सजातीयवर्णान्तरं प्रकर्षेणास्यत इति व्युत्पत्तिः ।

हे कान्ते ! इति कृष्णेन सम्बोधिता मानिनी अहन्ते कान्ता न भवामीत्यर्थं व्यञ्जयन्ती कान्ते नास्मि मति तिष्ठतीति प्रश्नस्योत्तरमाह—स्तस्य जनस्य कीर्त्तरकीर्त्तरेव तिष्ठतः नान्यत् किञ्चिदस्तीत्यर्थः । किञ्चिन्मे वदेत्युक्ता सा त्वया सह सम्बन्ध एव मम नास्ति किं वक्ष्यामीतीममर्थं व्यञ्जयन्ती चिद्वस्तु किमिति प्रश्नस्योत्तरमाह, जडेभ्यः परं जड़मित्यर्थः । धीर्बुद्धिः कथं राका पूर्णिमा भवेत्, का मेधा बुद्धिस्तवेत्युक्ते कामे कन्दर्पे धा धारणमित्युच्यते चेत् मम कन्दर्पे धारणा नास्ति, किन्तु त्वय्येवेति, प्रश्नस्योत्तरं कृत्वा यत्किञ्चित् स्मरणार्थं ततस्तत्मा स्पृशेति प्रश्ने त्वामहं न स्पृशेयमित्युत्तरं कुर्वत्या राधया जित एव ।

इदानीं मानस्य त्वयैतत्कल्पं निजमभिमतमीक्ष्यतां क्रियतामित्यर्थः । यस्मिन् समये मद्धेतस्तवत्सोऽधिकनिर्भविष्यति स समयो नोऽस्माकं न न भावी, अपि तु भविष्यत्येव—तदा स्वयं मानं विहाय व्याकुला भूत्वा तन्निकटे गमिष्यामीत्यपि तत्र वैकल्यं द्रक्ष्यामः ।

अनु पश्चात् प्रास्यते प्रकर्षेणास्यते क्षिप्यते इति व्युत्पत्त्या यत्र सजातीयवर्णस्य प्रक्षेपस्तत्रानुप्रासालङ्कारो ज्ञेयः । सजातीयता सदृशत्वेन, तथा च यत्र सजातीयवर्णद्वयस्य सकृत् प्रक्षेपस्तत्र च्छेकानुप्रासो ज्ञेयः ।

---

कौस्तुभकारेणाभाणि—'तत्त्व' नामालङ्कारस्य काव्यते'ति, 'तेनालङ्कारस्य काव्यत्वमिति स्थितिः न पुनः काव्यस्यालङ्कारयोग" इति च नवालङ्कारिकचूडामणीनां ध्वनिकृतां वाग्मिनः 'ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः । रूपकादिरलङ्कारवर्ग एति यथार्थताम् ।' इति, तदनुयायिनामानन्दवर्धनानां 'शक्तो हि कविः कदाचिदलङ्कारनिबन्धने तदाक्षिप्ततयैवा-

**स च द्वेधा च्छेकवृत्तिभेदात्—१९७ का**

छेकानुप्रासो वृत्त्यनुप्रासश्चेति द्वेधा ।

**छेकः सकृत्तया । १९८ का**

एकवारानुन्यासेन च्छेकः स्यात् । यथा—

धाम श्याममिदं श्रीदं जगतो विरतोदयम् ।
ध्येयं गेयञ्च सर्वेषां द्वयोः प्रेम (ख) यशोमयम् ॥ ४

अत्र मकारादीनां सकृदनुन्यासः ।

**माधुर्य्यव्यञ्जकत्वेन स एव ह्युपनागरः ॥ १९९ का**

स एव वर्णविन्यासः । यथा—

अनङ्गमङ्गलारम्भे सम्भेदः खेदकम्पयोः ।
अङ्गे पङ्केरुहदृशो न रस्याऽनन्दमत्तता ॥ ५

**एकस्याप्यथवाऽनेकस्याम्रेड़िततया यदि ।**
**न्यासः स्याद्वृत्त्यनुप्रासः (ख)—२०० का**

यथा—धाम श्याममुद्दाम कामकोटिमनोहरम् ।
ध्येयं गेयं समास्थेयं समानेयञ्च मानसे ॥ ६

यशोमयं यशःस्वरूपम्, प्राधिक्यविवक्षया धर्मनिर्द्देशः, 'अयं साक्षात् पाण्डित्य'मितिवत् । अत्र"म'कारद्वयस्य "य'कारद्वयस्य च (ग) सकृदेव पाठः । छेकानुप्रासस्यैव माधुर्य्यव्यञ्जकवर्णघटितत्वेन "उपनागर"—इति संज्ञा (ख) भवति । श्रीकृष्णेन सह स्वधूर्थिन्यां: सम्भोगं गवाक्षद्वारा पश्यन्ती काचित् सख्यन्यां सखीं प्रत्याह । कामलङ्घयो-ऽस्याः सम्भोगस्यारम्भ एव खेदकम्पयोः सम्भेदरूपो विघ्नो जातः । अतो विघ्नश्चादेप-रीत्यादिघटितः सम्पूर्णसम्भोगोऽपि न भविष्यति, तत एव याऽनन्दस्य मत्तताऽतिशयः सा रस्या नेत्यर्थं अङ्गे ।

आम्रेडिततया द्विरुक्तत्वतया । पूर्वोदाहरणे 'म'कार'भ'कारयोः सकृन्निवेशः, अत्रो-दाहरणे 'म'काराणां 'य'काराणां पुनःपुनरुक्तिः । समास्थेयं सम्यग् विश्वसनीयमित्यर्थः ।

---

नपेक्षितरससम्बन्धः प्रबन्धमारभते, तदुपदेशार्थमिदमुक्तम् । दृश्यन्ते च कवयोऽलङ्कार-निबन्धनैकरसा अनपेक्षितरसा प्रबन्धेषु" इति च साकूतभणितिः पर्य्याप्तमुत्तरपक्ष इति तद्विचारचर्चातो विरम्यते । अत्र ग्रन्थे प्रकाशकृता कृतामलङ्कारोद्देशप्रथामनुसृत्य

अनेकस्य यथा—

विविधवधूवधमाधो ! विरम रमानाथ ! नाथ्यतां (ख) नाथ !

कैतवविज्ञ ! समज्ञां तव विज्ञातुं न विज्ञाऽहम् ॥ ६

एष च द्विविधो भवेत्।

माधुर्य्यौजोऽनुकूलत्वात्—२०१ का

क्रमेणोदाहरणे—

अनङ्गसङ्गरासङ्गे भङ्गिमेव (ख) स जङ्गमः।

अङ्गीतरङ्गी तन्वङ्गीसङ्गी रासङ्गतो हरिः ॥ ८

उद्दण्डकामकण्डूलबाहुमण्डलचण्डिमा।

श्रीखण्डपिण्डडिण्डीरपुण्डरीकयशा हरिः ॥ ९

तथा—चकारात् पदावयवजोऽपि च। (1)

उद्दाममाधवीदामकण्ठ उत्कण्ठया हरिः।

राधां नातिदुराराधां ससार रससारवित् ॥ ९

एवमोजस्यपि 'जह्वोर्ङ्ढ सर्वमूर्च्छा'मित्यादि (६७ किरणे ६७ श्लोकः)।

काञ्चिन्मानिनीं प्रार्थनां कुर्वन्तं श्रीकृष्णमाह—विविधेति। अथानन्तरं न नाथ्यतां याच्ना क्रियताम्। एष वृत्त्यनुप्रासः।

श्रीखण्डपिण्डश्चन्दनपिण्डः डिण्डीरः फेनः पुण्डरीकः श्वेतकमलम् एषामिव श्वेतं यशोऽस्य। एष लकारघटितानुप्रासः—जकारस्य बाहुल्येन शिथिलबन्धाच्छिथिल उच्यते।

वक्रोक्तेरेव प्रथमं निर्देशः। प्राचा भामहेन निर्दिष्टात् 'रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः' इत्यादि कारिकान्यासात् केश्चिद्रूपकादितयाऽलङ्कारधाराऽनुस्रियते। ध्वनिकारकारिकायां तन्मतोपन्यासो वरीवर्त्ति। अपरैरुद्भटादिभिः (मर्वस्वकारोऽपि तन्मतानुयायी) बहुभिरेव पुनरुक्तवदाभासस्य प्रागुल्लेखो यद्यपि। अथचापरः पन्थाः—अलङ्कारशास्त्रविमर्शकानां स एषः वक्रोक्तिपरप्रतिपादनमनुमहिम्ना विच्छित्तिमावहति वक्रकविव्यापारे अलङ्कारसामान्यापरपर्य्याये प्राचा सुधिनां प्रक्तिमावहन्नितरां तत्त्वोन्मेष इत्येव मन्यामहे—यमुद्दिश्य, विपश्चिदुक्तौ 'वक्रोक्तिः काव्यजीवितम्' 'भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्,' यमेवोपमृश्य च पूर्वपश्चिमौ मतभ्रंसकल्पमुल्लसयमाचार्य्यदण्डिनः 'स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृति'रिति स्वभावोक्तेरलङ्कारकक्षान्तर्भुक्तौ निर्बन्धान्तः सिद्धान्तलक्ष्य आदिमतया निर्धार्य। परमर्वाचीनग्रन्थेष्वस्य पदस्य वक्रोक्तिपर्यायत्-

(1) चकारातिरिक्तः पाठः केवलं मुद्रितपुस्तक एवोपलभ्यते।

**कोमलो लाट इष्यते । २०२ का**

कोमलवर्णानुप्रासो लाटानुप्रासः । उदाहरणम्—'लीलालसललिताङ्गी'-त्यादि (६ष्ठकिरणे १म श्लोकः) । एषः कैश्चिच्छिथिल उच्यते (ख) ।

**तात्पर्य्यमात्रभेदत्वाल्लाट इत्युच्यतेऽपरैः ॥ २०३ का**

शब्दार्थयोरभेदेऽपि तात्पर्य्यमात्रभिन्नत्वे, लाटो विदग्धः (2), तस्य प्रियत्वाल्लाटानुप्रास (ख) इत्यपरैरुच्यते ।

**पदस्याप्येषः—२०४ का**

एषः लाटानुप्रासः पदस्यापि, 'अपि'शब्दात् पदांशानां पदानामपि—क्रमेणोदाहरणानि—

क्षयात्वेन सखि ! प्रादुर्भावो मन्ये मनोजनैः ।
मनोजनैः पुनरियद्वैदग्धीवैदुषी (ख) कुतः ॥ १०

रत्नानि रत्नाकर एव सन्ति पुष्पाणि पुष्पाकर एव धत्ते ।
गुणो गुणज्ञे लभते प्रकाशं यशो यशोदासुतसेवयैव ॥ ११

पदानां यथा—
येषां न वृन्दावनचन्द्रलीला हृद्यस्ति तेषामपरैर्गुणैः किम् ।
येषान्तु वृन्दावनचन्द्रलीला हृद्यस्ति तेषामपरैर्गुणैः किम् ॥ १२

**एवञ्च वृत्तावन्यत्र वा पुनः ।**

**वृत्तावृत्तयोश्च वा नाम्नः सारूप्ये स्यादथापरः । २०५ का**

तत्रैव वा समासेऽन्यत्र वाऽसमासे समासासमासयोर्वा नाम्न एव, न तु पदस्य, सारूप्ये सत्यपरो लाटानुप्रासः । (ख)

पदानामनेकेषामपि । वैदुषी पाण्डित्यम् । अनेकपदस्यानुप्रासः, अस्यैव भिन्नार्थत्वे यमको भवतीति ज्ञेयम् ।

नाम्नः प्रातिपदिकस्य समानरूपत्वेन नतु नामविभक्तिघटितपदस्य ।

---

प्रभृतिलक्ष्येष्विव सुतरामल्पप्रसरायामलङ्कृतौ प्राप्तिः प्रयोगश्च—स च विदग्धमात्रसंवेद्यो श्लेषकाङ्क्षमहिते कूटकर्मण्यपि प्रवर्त्तते। पदपरिवृत्त्या नास्य गन्धोऽपीति शब्दालङ्कार एवायम् । 'द्विरेफ' इत्यस्य 'बर्बर' इत्यर्थान्तरं टीकाकृता स्वीकृतम्—परं भ्रमरकर्माभि-व्यञ्जिना पदकारकत्वेन घटितोऽप्ययं स्यात् । 'किञ्चित्' 'धीराकाऽपि' 'कामिने'त्यादिषु सुस्पष्टोदया कष्टार्थता न दोषायेत्यलम् ।

---

(2) 'लाटोऽविदग्ध' इति (ख) (क) पुस्तकयोः पाठः ।

उदाहरणम्—

हिमकिरणकिरणमधुरा राका राकाऽमृतांशुमुख ! भवतः ।

विरहे विरहे मूर्च्छां सख्यास्तां केवलं दहति (3) ॥ १३

नैव (4)— सुमहिमहिमकरमधुरा मधुराकाया निशा निशातेयम् ।

तव रुचिर ! चिरविलम्बे प्रदहति तां कृष्ण ! कृष्णवर्त्मेव ॥ १४

इदन्तु यमकान्तर्गतमेव भिन्नभिन्नार्थत्वात् (ख) । तदेवं वर्णितञ्छेकश्रुति-पदावयवैकपदानेकपदनामसारूप्यात् षट्प्रकारोऽनुप्रासः ।

**(३) यमकं त्वर्थभिन्नानां पदादीनां समाऽऽकृतिः (5) । २०६का**

परस्परमर्थगतभेदवतां पदपदावयवानां समाऽऽकृतिः सारूप्यं यमकम्(ग) ।

राकाऽमृतांशुः पूर्णिमाचन्द्रस्तत्तुल्यमुखेति श्रीकृष्णसम्बोधनं, तव विरहे मूर्च्छां प्राप्य सख्याश्च विरहे राका पूर्णिमा तां दहति। राका कथम्भूता? हिमकिरणश्चन्द्रस्तस्य किरणेन मधुरा ।

इयं वसन्तकालीनपूर्णिमाया निशा निशाता विरहिन्या दुःखदायकत्वेन तीक्ष्णा कृष्णवर्त्मा अग्निरिव तां दहति। निशा कथम्भूता? सुमहिमचन्द्रेन मधुरा। "हिम" "हिम" "मधुरा" 'मधुरे"त्यादिपदानां भिन्नभिन्नार्थत्वादिदमुदाहरणं यमकान्तर्गतमिति ज्ञेयम्— अतोऽत्र यमकत्वमनुप्रासत्वमुभयमपि वर्त्तते (ख)।

एवमिति—छेकानुप्रास एकः, वृत्त्यनुप्रासो द्वितीयः, लाटानुप्रासश्चतुर्विधः ,एवं क्रमेण षट्प्रकारोऽनुप्रासः ।

---

(ख) अनुप्रासस्य शक्तिमत्तायां स्वभावविहायामपि न तावत् किमपि मानवकृतं काव्यं भूतं भवतु भव्यं वा यन्नास्य साहाय्यकमपेक्षितुमर्हति। (Cf the aids of Assonance, Alliteration, Onematopœia, Rime etc. in all verse) परं मधुररचनायां सुकुमारमार्गस्य प्रकर्षः सहजमिह एव प्रतिभाति। 'प्रेमधरोमय'मित्येकं पदं वा । अत्र 'म'म' 'द'द' 'रो' रो' 'ध' धं' 'म' 'म' इत्यनुक्रममनुप्रासः। उपनागरेति—उद्भटादयस्त्वेवम्। प्रकाशकृता मम्मटादिप्रदर्शितवृत्तित्रयकस्य वामनराजशेखरभोजादिकृतग्रन्थेषु प्रदर्शितरीतिभिः सामञ्जस्यसाधनाय 'केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मता' इत्यभ्यधायि—न [illegible] पन्था अत्र सम्यगनुगतः, रीतिः पृथक् प्रभृति यत्सम्पादितत्वात्। परं विन्यासविन्यासक्रमोत्पन्न अनु-

---

(3) "—[illegible] । [illegible] । [illegible] दहतो [illegible]" इत्यादीया [illegible] पाठान्तर (ग) पुस्तके ।

(4) [illegible] (क) (ख) पुस्तकयोर्नास्ति ।

(5) [illegible] (क) पुस्तके [illegible] पाठ ।

एतच्च पादजत्वेन नवधा—२०७ का

एतत् यमकम् । प्रथमस्य तु ।

द्वितीयेन तृतीयेन चतुर्थेनेति तत्त्रिधा ॥

द्वितीयन्तु तृतीयेन चतुर्थेनेति च द्विधा ।

तृतीयन्तु चतुर्थेनेत्येक एवेति षड् भिदः ॥

प्रथमस्त्रिष्वपीत्यन्य इति सप्तद्वयं पुनः ।

प्रथमस्तु चतुर्थेन द्वितीयस्तत्परेण च ।

प्रथमस्तु द्वितीयेन तृतीयस्तत्परेण च ॥ २०८ का

प्रथमो द्वितीयेन तृतीयेन चतुर्थेनेति त्रयो भेदाः । द्वितीयस्तृतीयेन चतुर्थेनेति चेति द्वौ । तृतीयश्चतुर्थेनेत्येकः । प्रथमस्त्रिष्वपीत्येकः । प्रथमश्चतुर्थेन द्वितीयस्तृतीयेनेत्येकः, प्रथमो द्वितीयेन तृतीयश्चतुर्थेनेत्येकः—एवं नव ।

अर्द्धश्लोकश्लोकयोश्चावृत्त्या द्वेधा भवेदथ ।

तेनैकादश भेदाः स्युः पदभागे च पूर्ववत् ॥

नवधेति भिदा ज्ञेया विंशतिर्यमकोद्भवाः ॥ २०९ का

अर्द्धश्लोकावृत्त्या श्लोकावृत्त्या च पुनरेकादश । पुनः पदस्य भागे च यद्यमकं तत् पूर्ववन्नवधेति विंशतिर्भेदाः ।

पादस्य तु त्रिखण्डत्वे त्रिंशद्भेदाः प्रकीर्त्तिताः ।

चतुःखण्डत्वे च पुनश्चत्वारिंशद्भवेद्भिदा (ग) ॥ २२० का

---

कारित्वमिति सार्थकमस्य प्रकारस्योपनागरत्वेन कथनम् । वृत्तीति—वृत्तिरावृत्तिरिति यावत् । एवमेव विद्यानाथः 'एकद्वित्रिप्रभृतीनां व्यञ्जनानां यदा भवेत् । पुनरुक्तिरसौ नाम वृत्त्यनुप्रास इष्यते ॥' नार्थेति—न अर्थेति पदभक्तिः, सा च अपूर्ववाक्ये कियदस्वाभाविकीव प्रतिभाति । 'समक्ष'इत्यत्र मद्दृतः पारिभाषिकोऽयं इति बहवः । 'भङ्गिमे'त्यत्रेमनिचः साधुत्वं कथञ्चिदुपपाद्यम्, परं केचिदीदृशाः प्रयोगा अर्वाचीनसाहित्ये उपलभ्यन्ते । कैश्चिदिति—अल्पप्राणाक्षरं शिथिलमिति काव्यादर्शे गौडीरीतिनिरासाय आचार्यदण्डी । परमेष्वपि स्थलेषु कौतुकपंक्तिः', तत्र निरस्ताया गौडीरीतेरादरदर्शनमिति 'कैश्चि'दित्युल्लेखः । लाटानुप्रास

दिङ्मात्रमुदाह्रियते—

सुरतरुरेष नतानां सुरतरुचिर्गोपतरुणीनाम्।
त्रिभुवनजनकमनीयो(6)जयतादाभीरराजयुवराजः॥ १५

सुरसार्थभूषितपदैर्ब्रह्मादिभिरधिकभक्तिसंनम्रैः।
सुरसार्थभूषितपदैः स्तवैः स्तुतः कोऽपिहा जयति॥ १६

मन्मथनमदन्तरया कुटिलोऽञ्जनकालकूटाक्तः।
प्रियसख! कटाक्षविशिखो मन्मथनमदं स राधया सहजे॥ १७

जयति व्रजपतितनयो नमदनमत्तुल्यकारुण्यः।
न मदन! मत्तुल्यरता काऽपि विना येन मान्तुदति॥ १८

राधा सुकुमारतनुर्मदनवधानादुपैष्यति ग्लानिम्।
बद्धोऽयमञ्जलिस्ते मदन! वधायं न सां वितुदेः॥ १९

व्रजपतिनन्दन! नन्दय नन्दय वृषभानुनन्दिनीहृदयम्।
मदनमदोज्ज्वलमतुलं मदनमदोजःप्रसादमाधुर्य्यम्॥ २०

नतानां भक्तानां सुरतरुः कल्पवृक्षः, गोपरमणीनां सुरते रुचिर्यस्तथाभूतः। सुरार्थाः सार्थः सुरसमूहस्तेन भूषितं पदं येषान्तैर्ब्रह्मादिभिः सुरसो योऽर्थस्तेन भूषितानि पदानि येषु तैः स्तवैः स्तुतः श्रीकृष्णो मन्मथेनाभिलाषेण नमनम्नमन्तरं यस्यास्तया राधया मन्मथने मदो गर्वो यस्तस्तदया स्यात्तया स कटाक्षरूपो बाणः सहसे। नमति नम्रे ऽनमत्यनम्रे तुल्यं कारुण्यं यस्य सः, यद्वा नमति नम्रेऽनमत् सुहृद् तुल्यमेकरसं कारुण्यं यस्य सः। रता दुःखिता। 'नन्दय नन्दये'ति वीप्सा। मदनमत्ततयोज्ज्वलं मदेन गर्वेण नमन्ति भावाधिपयाद्भान्योजःप्रसादमाधुर्य्याणि यत्र तद्धृदयम्। ओजो बलम्। मदा मदनमात्रं नित्यमित्यर्थः।

इति—लाटाख्यप्रदेशे (यस्य गुजरात् इत्याधुनिकी संज्ञा) प्रचलितमनुप्रासकमनुपलक्ष्य सत्। स तु कोमलताया परुषताद्वयवभेदेन बहुधा भिन्नश्चेत्याकरे द्रष्टव्यः। तस्य ग्रन्थविस्तरभिया सर्वाभेदकथनं न मयेतनमभ्यतम्। 'वैदर्भी' 'वैदुषी'त्युभयत्रापि भावपदार्थस्य पदा: विभो प्रयोग: यकारस्यानुद्देशश्च सामग्रीचातुरीत्यादिवत्। यथा, पितृकरग्राहितारे बहुधामिति बामदः। भिन्नभिन्नेति—इयमेव लाटानुप्रासादमकस्य भिदा। यमकपुंगमाया इत्यादि भिन्न भिन्न यथार्थः। ज्ञानमन्यत्रापि। असौ नैव लाटानुप्रासः। अन्योदाहरणे 'मधुरा' इत्यत्र ललितात्मिका 'मधुरकाया' इत्यत्र यमक पुनिताया इत्यर्थः। लाटानुप्रासे तात्पर्य्यमात्रभेदः यमकेऽभिधागतार्थभेदोऽपि, एवं टीकाकृद्भिः 'गगे'त्यादि न भद्रा, यमकस्यानुप्रासापवादत्वेन विशालमत्यर्थम्।

(6) 'जयति व्रजराजयुवराज' इति पाठः (ख) पुस्तके।

कानने जयति यत्र सदा सत् का न नन्दति यदेत्य सुखश्रीः ।

का न नन्दतनयस्य मनोज्ञा काऽननन्यति वा न हि तस्य (ग) ॥ २१

यथा वा---(ग) नवपयोधरकान्त ! विरम्यतां न वप योधरसं हृदि मान्मथम् ।

नवपयोधरकान्त ! [illegible] ये भवाननव योऽधरपः प्रतियोषिताम् ॥ २२

कामन्दधाना हृदयेऽनुरागं स्मरालसाङ्गी विदुनोति बाला ।

स्मरालसाङ्गीकुरु तां मुकुन्द ! का मन्दधाना न भवेद् विना त्वाम् ॥ २३

समस्तकल्याणगुणैकवारिधे ! समस्तवास्ते कतमस्त्रिलोक्याम् ।

नमामि, मे माधव ! सम्प्रसीद, न मामिमे घ्नन्तु दुरन्ततापाः (8)॥ २४

हे नवपयोधरकान्त ! नवमेघश्याम ! मान्मथं योधरसं हृदि न वप नारोपयेत्यर्थः । नवपयोधरा कान्ता यस्य हे तादृश ! नवा नवीनाः, तासां च । प्राणप्रोषक ! ये ऽयो वै प्रोषयो, हे सञ्जीवनपोषकेत्यर्थः । यस्त्वं मदिपधरमणीनामधरं पिबसीति । कामं यथेष्टमनुरागं दधाना बाला । स्मरतां स्मराङ्गीकुरु च, हे चलस । त्वां विना का मन्दधाना न भवेत् अपि तु सर्वैव । धानं धारणं, मन्दं धारणं यस्याः दु.स्थितेत्यर्थः । दान्तु खण्डयन्तु ।

(ग) तुल्यश्रुतिनिदाना माधुर्य्यस्तुतिरनादिकालतः मवैनैव मानवमनोहरिं ह्रादयन्ती शोभाकारितयाऽलङ्कारमार्गे प्रकृष्टमुपस्थाप्यते—तत्र भाषासु कासुचिदैचित्र्योपधायकता-सुखेन तस्या ऐकान्तिकतया स्वरतो वर्णतो वा स्वरवर्णमिलिताद्वाऽवराधाऽविर्भावः, कासुचित् पुनरन्यथाऽपि स्वरवर्णसंहतिमाहात्म्येन तस्याः स्फुरणम् । पूर्वत्र क्रमगणनाऽर्थ-भेदादिचिन्ता च व्यभिचारिणी, इतरत्र क्रमो विभिन्नार्थवत्ता च मुख्यं लिङ्गम् । प्रथम-स्त्वावदनुप्रासपदवाच्यः, द्वितीयो यमकमित्यन्वर्थमभिधीयते । पूर्वत्र रसपुष्टिरव्याहता भवितुमर्हति, अन्यत्र तु कष्टकल्पनाश्रयतया रसपरिपन्थित्वं बहुश एव जायते, यदाहुः— 'तत्तु नैकान्तमधुर'मिति यमकाग्रहेषो व्यालङ्कारिकचूडामणय आचार्य्यदण्डिनः 'सानुप्रासा रसावहे'त्येतिह्रितेनाप्यनुप्रासमतो बहुशो लघुं विपुणं प्रतिपिपादयिषवः मन्यन्ते—अपरे-ऽप्यर्वाचीनाः तां विमतिमुद्घोषयन्तो रसाश्रितकाव्यतत्त्वाः 'प्रायेण यमके चित्रे रसपुष्टिर्न दृश्यते' इत्यादिमतवादेन । परमासीत् कश्चन कालः यत्रास्य भूयानादरो निपुणकविकर्मतया काव्याङ्गरूपेण स्वीकारश्च कविसम्प्रदायसम्मतो जातः । कालिदासकृते रघुवंशे भारविकाव्ये च कांचिदक्षतिमेव शोभेनमुपनीय वरीवर्त्तीति सहृदयानामुपलब्धिरेव प्रमाणं—भट्टिकाव्ये

(8) अत ऊर्ध्वं "यथा वा—सदासदानन्दमय नमस्ते सदामदामोदितकर पुरस्य ।

अहो महोद्दामरसप्रवाहमहो महो भूरि तवैव लब्ध ! ॥'

इत्यधिकः श्लोकः (ख) पुस्तकस्य तलभागे दर्शितः, मुद्रितपुस्तके चोपलभ्यते । टीका च तस्या मचित्समायी-मनुभवते ।

पादजं नवधा यमकं दर्शितम् (ग)—अथ पादभागजानि दर्श्यन्ते ।

कलहं कलहंसानां कलहं क-ल-हंसकाः ।
अभ्यस्यन्तीव गोपीनां चरणाम्भोजवासिनः ॥ २५

मधुरा मधुराकाया रजनी सा यदाऽजनि ।
मधु-राम-धुरा कासां तदा नासीद्धरेः पुरः ॥ २६

साध्वसाध्वन्यदत्ताङ्घ्रिः गुरूणामपि सन्निधौ ।
कृष्णं वीक्ष्योत्सुका साऽऽसीत् साध्वसाध्वविचारतः ॥ २७

काञ्चीदाम्नो रवस्तस्या रणतोऽरणतोऽतनोः ।
रण-तोरणतो भूरिश्रियः कृष्णमनोऽहरत् ॥ २८

गोपीनां कलहंसकाः कं सुखं लान्तीति तथाभूता हंसकाः पादकटकाः कलहंसानां कादम्बकानां कलहमभ्यस्यन्तीव ; ते यथा परस्परं कलहायन्ते तथा कलहायन्ते इव । कीदृशम् ? कलमव्यक्तमधुरध्वनिं जिहीते प्राप्नोतीति तथा, तत् कृन्तीति वा सारमित्यर्थः । हरेरग्रे कासां पीयमानैर्मधुभी रामधुरा रमणातिशयो नासीत् । साध्वसाध्वनि साध्वस-पथे न कदाऽपि दत्ताङ्घ्रिः यथा सा गुरूणामप्यग्र उत्सुका आसीत् । काञ्चीदाम्नः—कथम्भूतस्य ? अरणतो गमनाद्धेतो रणतः शब्दायमानस्यातनोः कन्दर्पस्य रणसम्बन्धि-तोरणाद्वन्दनमालायाः सकाशादपि भूयसी श्रीर्यस्य तस्य । नपुंसकाद्दाम्नो नुमागमश्च ।

माघकाव्ये तदनुसारिणि नातिप्रसिद्धे गड्डलिकाप्रवाहपतिते सर्गबन्धकाव्यकदम्बके, यमकमाला-कलङ्कजीविते कीचकवध हरिप्रबोध नलोदयाद्यनेककाव्यविशेषेऽस्य स्फुरणन्तु न तथा सहृदय-हृदयहारि । नैतच्चित्रं यदस्य इह उद्धर्मसर्वाचीनकविसमयसमये गये काव्यान्तर्गडुभूततया सुष्ठुत्वमयसिद्धान्तः । तथा सति न तावदस्य परमार्थतो माधुर्यशब्दकत्वमपाक्रियते—परं न निखिलं माधुर्यं शब्दाश्रयमेव प्रशस्यमित्यपरीकारः । नाप्यनेन सकलजनसंवेद्यः सहृदय-मनोभिः शब्दमाधुर्यास्वादो वाऽपलप्यते यमाश्रित्य प्रतीच्यसाहित्यभेदेषु Onomatopeic poetry इति काव्यभेदपरिगणनं यमुपलक्ष्य च तत्रत्यसमालोचकानां समयः—'Tis not enough no harshness gives offence The sound must seem an echo to the sense'. प्राचीनार्यसाहित्ये चास्य वैशिष्ट्यस्य 'स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनां झणिति रणितमासीत्तत्र चित्रं कलञ्च' इत्यादिकोमलतन्त्रे पद्ये, 'एते ते कुहरेषु गद्गदनदद्-गोदावरीवारयः' इत्यादिकठोरप्रियायां भवभूतिरचनायां, 'चञ्चद्भुजभ्रमितचण्डगदा-ऽभिघाते'त्यादि वेण्यां साटोपोक्तौ च प्रकाशः । परमेषामनुप्रासतया प्रसिद्धं सम्प्रदाय-मननमित्यविचारम्—अनुप्रासभेदाश्च बहवः प्रतिवृत्तं प्रत्यालङ्कारिकवर्यं भिन्ना इति

दृशोरगोचरेणैव हरिणा हरिणाक्षि ! ते ।
कपोलभित्तिर्मानेभहरिणा हरिणाकृतिः ॥ २९
अगोचरे सति हरौ दहत्येष मनो मम ।
मदनो मदनोदेनामदनो मदनोजसा ॥ ३०
सदासदासीनिकरैः परिच्छदैः सदा सदानन्दविलासविग्रहः ।
सदाऽस-(ग)दाक्षिण्यकृपाऽऽदिभिर्गुणैः सदासदारो विललास माधवः ॥ ३

दृशोरगोचरेणैव सता हरिणा श्रीकृष्णेन तव कपोलभित्तिः हरिणाकृतिः पाण्डुच्छविरभूत् । कीदृशेन ? मान एव इभो हस्ती तस्य हरिणा सिंहेन । मदनो मनो दहति । केन ? मदनोदेन मत्तताखण्डनेन । कीदृशः ? मदनोजसा ममावज्ञेन मदनोऽहर्षदः, मदि हर्षे । (१) परिच्छदैः सह सदा सदानन्दमयो विलासो विग्रहश्च यस्य स माधवः । दा दानम्, असो दीप्तिः, दाक्षिण्यञ्च तदादिभिर्गुणैः सन्नाय उपदेशो येषान्ते दारा यस्य सः ।

---

ख्यातमेव । श्रुत्यनुप्रासस्य निरूढानुप्रासनिरुक्तसवर्णत्वमयव्यञ्जननिष्ठत्वस्वरूपस्य, 'दृष्टा दर्भं मनसिजं जीवयन्ति दृशैव याः' इत्यादिलक्ष्येषु स्फुटस्य, अन्त्ययोर्व्यावर्त्तितया ख्यातस्यान्त्यानुप्रासस्य 'मन्ये मन्दोऽसि घनागमलक्ष्म्यां कुरु तनुबुद्धे मनसि विलक्ष्या'मित्यादि-बहुप्रसिद्धलक्ष्येष्वाविर्भवतो यथा नात्र ग्रन्थे ग्रथनं, तथा प्रतिदेशं भिन्नस्य कार्णाटी-कौन्तलीत्यादि-नाम्ना लक्षितस्य कण्ठाभरणकृता कृतोद्देशस्य लाटप्रविधस्यापि न सूचनमित्यप्यविरुद्धो मार्गः, यत एषां दिग्दर्शनन्यायेन विन्यास एव साधीयान् । नाट्यशास्त्रकृता पुनर्यमकस्यैकस्य शब्दालङ्कारतया ग्रथनं कृतं, तथाऽलङ्कारिकसम्प्रदायसिद्धस्यैव यमकस्य तत्र लक्ष्यलक्षणानि । अनुप्रासस्य तत्र कथं न ग्रहणमिति तु सम्यग्विमर्शनीयम् । 'एतद्दशविधं ज्ञेयं यमकं नाटकाश्रयम्' (१६।६२) इत्यभिधानमत्र, परं नाटकाश्रयस्यालङ्कारजातस्य गणनायां शब्दालङ्कारकक्षेऽनुप्रासस्यैव ग्रहणपरो निर्बन्धो वरीयानिव प्रतिभाति । इदानीं परिचितेषु नाटकेष्वनुप्रासस्यैव प्रसारो दृश्यते, यमकन्तु तत्र विरलविरलमेव । रामायणादिप्राचीनतमरचनादिष्वप्येवम् । एवं स्थिते प्राचां यमकपदेनानुप्रासस्यापि ग्रहणं, द्वयोर्मध्ये यमके चाद्यादरप्रसङ्गः न सुशकः प्रतिपादयितुमिति बहवः । 'नानाकारैश्च कान्तभ्रूरारोधितमनोभुवा । विविक्तेन विलासेन ततक्ष हृदयं नृणा'मित्यादौ स्वरैकव्यञ्जनाऽऽवृत्तावपि केषाञ्चित् यमकत्वकथनमेतत्पक्षेऽनुकूलं यमकतोऽनुप्रासस्योद्भवे विश्वासकारितावीजमपीति बोध्यम् । अत्र तावत् प्राचा भामहेन कृतो भरतीयनाट्यशास्त्रनिर्दिष्टेऽलङ्कारचतुष्केऽनुप्रासस्य पृथक्तया योगः

---

(१) "दासदासीनिकरैः सह वर्तमान" इत्यधिकोंऽशोऽस्माकं (ख) पुस्तक एवोपलभ्यते ।

मनोज-हार-प्रतिमा समाना सरस्वतीते ! मद-सु-स्वरूपे ॥

मनो जहार प्रतिमा समाना सरस्वती ते मदसुस्वरूपे ! ॥ २४

अर्द्धाहृतिः ।

न वंशी-कर-मासाद्य यमानुजनिभङ्गतः ।

कस्या विशदतां याति मनो मानपरिप्लवम् ॥

नवं शीकरमासाद्य यमानुजनिभङ्गतः ।

कस्याविशदतां याति मनो मानपरिप्लवम् (ग) ॥ २५

श्लोकाहृतिः । अयमेव समुद्गकः । एकविंशतिः ।

हे मदसुस्वरूपे ! मत्प्राणतुल्ये । तव सरस्वती वाणी मम मनो जहार । कीदृशी ? मां प्रति समाना सादरा । पुनः कीदृशी ? मनोजस्य हारस्य प्रतिमा हृत्काहारतुल्या हृदयधारणार्हेत्यर्थः, समानाऽवक्रा । मदस्य मत्ततायाः यत् सु सुष्ठु स्वरूपं तस्मिन् सरस्वति सम्भ्रद इति सङ्गते । हे मूर्त्तमत्ततासमुद्रप्रविष्ट इत्यर्थः ।

अथ सर्वासामपि वैयर्थ्ये यथा सन्नासक्तप्रयोगः क्रियते तथा मानभङ्गार्थं नानाविधोपायानां वैयर्थ्ये सति श्रीकृष्णेनापि सद्धेतसुरलीवादनं क्रियते, सुरलीनादश्रवणमात्रेण (१०) वा विगलितमाना प्रवसन् बभूवेत्याह—नेति । वंश्याः करं वादनमासाद्य यमनियमासनाद्यष्टाङ्गयोगस्य प्रथमो यमस्तस्यानुं पश्चाज्जनस्तदुत्पत्तिर्यस्य स नियमस्तस्य भङ्गतः, तथा च श्रीकृष्णेन सह मया कदाऽपि सङ्गो न कर्त्तव्य इति यो नियमस्तस्य सुरलीश्रवणेन भङ्गान्मानेन चञ्चलं कस्या मनो विशदतां न याति, अपि तु सर्वासामेव । पुनस्तस्यैव श्लोकस्यार्थान्तरमाह—यमानुजनिर्यमुना पुण्यनदी तस्या भङ्गस्तरङ्गाज्जातो यो नवीनः शीकरः जलकणस्तमासाद्य मानेनाभिमानेनार्थाद् गर्वेण दोषेण परिप्लवं कस्य मनः च न विशदतां याति, अपि तु सर्वेषामेव, यमुनाजलस्पर्शस्य सर्वदोषनाशकत्वप्रसिद्धेरिति भावः ।

दिना विभागेन भेदसंख्या प्रकाशकता सूचितापि न विस्तरतो दर्शिता, सा च मनोरमैः पद्यैरिह निबद्धा । यमकमित्यारभ्यास्य पूर्वतः श्लोकाष्टकात्प्राक्कारतो संकृता नियमवादा निबद्धा संज्ञा, इयमेव शैली प्राचीनानां शास्त्रकृतां यत्ते दर्शितानां संज्ञानिबद्धतार्थं सहकारिगुणान्तराणि प्रकटयन्ति । सा च सुस्पष्टं दर्शिताऽचार्यदण्डिना गुणालङ्कारादिविवेचनप्रस्तावे । यथा वेति—'कानन'मित्यादि श्लोक आदिमकिरणे दर्शितवतया पठित इत्यतो यथा चेति प्रतीकेन नूतनतरस्यावतारः । पादजमित्यादि—अर्द्धाहृत्तिरित्यादि—एषां वक्ष्यमाणानाञ्च भरत भामह दण्डि रुद्रटोद्भटादिप्रतान्यत्र कल्पभेदाद्यथायथं सुखगर्भ इत्ति-पुष्प इन्त-

(१०) "श्रीकृष्णेनापि वादितसद्धेतमुरलीनादश्रवणमात्रेण" इत्ययं पाठो मुद्रितपत्रके ।

आद्यन्तमध्यभेदेन क्रमादथ समुच्चयात् ।
अन्तादिभेदेन पुनर्बहुधा यमकक्रिया (ग)॥ २११ का

आदियमकमन्त्यमकं मध्ययमकमाद्यन्तमध्ययमकमन्त्यमकमिति षट्
भेदाः। क्रमेणोदाहरणानि—

कलाकलापेन गरीयसा हरिर्मदीनदोतिः करुणारसाम्बुधिः ।
सुरासुराणां मुकुटाटवीमणिः सदा सदानन्दचिदात्मको बभौ ॥ २१

दोषेण प्रथमेन हि नागरी गरी-यसा(ग) कठोरत्वमुपेत्य भात्यभा ।
विहाय मानं हरिमानयानया धिया हि सर्वं भवतीहितं हितम् ॥ २७

मदन सङ्गर-सङ्ग रसाकुला भव विहारिणि हारिणि । माधवे ।
कुसुम-राजि-विराजि-विभूषणा मधुप-राग पराग-परागिता (ग) ॥ २८

माऽसो मासो मरीच्यः समधुर मधुर प्रेयसी-प्रेय-सीमा-
वृन्दा वृन्दावनश्रीरुपवन-पवन-भ्रान्तिरभ्रान्तिरम्या ।

गरीयसा प्रथमदोषेण कठोरत्वमुपेत्य काऽपि नागरी न हि भाति। यतोऽभा विगत कान्तिका। धिया तव सर्वं हितमीहितं वाञ्छितं भवति, वर्त्तमानसामीप्ये वर्त्तमानप्रयोगः।

हे हारिणि। मनोहारिणि! माधवे विहारिणि सति मदनयुद्धस्य सङ्गे यो रसस्तेना कुला भव। कथम्भूता? कुसुमश्रेणिभिर्विराजि भूषणं यस्यास्तथाभूता सती। अथ मधुपानां रागो रङ्गनं येष्वस्तथाभूते, सुगन्धैः परागै, परागिता व्याप्ता सती च।

उद्दीपनविभावानाह—माऽस इति। मासचन्द्रस्य मरीच्यः किरणाः माऽसः मा शोभामस्यन्तीति माऽसः शोभानिषेधिका इत्यर्थः। वृन्दावनस्य श्रीः शोभा कीदृशी? समधुरा शृङ्गाररससहिता एवं मधुराश्च या प्रेयस्यस्ताभिः प्रेयं पूरयितुमर्हं सीमा वृन्द यस्याः सा, तथाच वृन्दावनीयशोभायाः सीमासमूहावधिः प्रेयसीनां साहित्येनैवेति भावम्। उपवनेषु पवनस्य भ्रान्तिर्भ्रमणम् अभ्रान्तिरम्या अभ्रान्तिर्वृन्दावनीयोपवने मम मन्द गमनमेवोचितमिति या सावधानता तया रम्या। आलम्बनविभावमाह—इह समये य

पुच्छ पङ्क्ति परिवृत्ति मदंश-काञ्ची पदान्ताम्रेडित श्लोकाभ्यास ससुद्गक यमकावलि महायम कादयोऽपरविधा भवति संज्ञा—इतोऽधिकानि संख्याऽन्तराणि च तथो भट्टिकाव्यादितश्चैव ग्राह्याणि। बहुधेति—आद्यन्तादिभेदगणना प्राचीनानुसारिणी हिसबद्धेत्यादिविच्छित्तिविशेष जीवातुरवांर्षीनैरुद्भाविता। वस्तुतस्तसंख्य एवायं भेदक्रमः। समविंशतिरिति तु वस्तुगत्या गणनायां न किमपि तात्पर्यं 'बहुधा यमकक्रिये'त्येव निष्कर्षः। अयुक्पाद युक्पाद मिश्र

नन्दानन्दाप्यकन्दः स्मर-समर-स-म-व्यूह-हारीह हारी
सङ्गी सङ्गीतदेव्या अहरहरहरद्राधराधां स राधाम् (ग) ॥३९

न मानमाधेहि मनस्यदःस्यदः शुभं शुभंयोः स्यति देवि ! तेऽवित्ते (ग) ।
यशो यशोरात्नक्षताऽरूपा रूपाऽयशो यशोदाभुवि विद्यतेऽद्य ते ॥ ४०

प्रतिपादसर्वयमकं यथा—

ममत्वयाऽममत्वया न वेञ्छितं नवे ! हितम् ।
स्मराधिके स्म राधिके ! चर चमाश्च रक्ष माम् ॥ ४१

हरी राधामहरत् । कीदृशः ? नन्दः (ग) सन्दहो य आनन्दस्तस्याप्यकन्दः प्रथममूलं स्मरसमरे समः मा शोभा तत्सहितो यो बलविन्यासस्तं हरतं शीलं यस्य सः । 'व्यूहस्तु बलविन्यासे' इत्यमरः । तथा हारी हारवान् सङ्गीतदेव्याः सङ्गी । राधां कीदृशीम् ? अहरहः प्रतिवासरमेव रावराधां रावस्य राधः संसिद्धिर्यतस्ताम् ।

दूती प्राह—न मानमिति । मनसि मानं नाधेहि । कुतः ? अदःस्यदः अमुष्य मानस्य वेगः हे देवि ! शुभंयोः प्रशंसावत्यास्ते तव शुभं मङ्गलं स्यति नाशयति अहंशुभमोर्युस्, इति युस् । शुभमिति मान्तमव्ययं प्रशंसावचनम् । अहो इत्याश्चर्ये । अहोरात्रक्षतमक्षमनःपीड़ा यतस्तथा रूपाऽवित्ते इति सम्बोधनम्, तथा च तादृश्या रूपा त्वमधुनाऽपि ज्वलिता नाभूरित्याश्चर्य्यं, यशोदाभुवि श्रीकृष्णेऽद्य तेऽयशो दुर्यश एवेदं वर्त्तते । श्रीकृष्णोऽप्याह—मम त्वयेति । हे राधिके त्वया मम न हितं न वा ईप्सितं वाञ्छितं भवति । कुतः ? अममत्वया मयि ममत्वशून्यया । ननु तर्हि मामुपेक्षस्व तत्राह—हे नवे ! नित्यनूतनत्वात्त्वं मे चेतो लोभयसीति भावः । अथ च चेतः पीड़यसि चेत्याह—स्मरेण स्मरणेनाधिर्मनःपीड़ा कामोद्गमो यतः हे तथाभूते ! यद्वा स्मरेण कन्दर्पेण हेतुनाऽधिर्मनःपीड़ा यतः हे तथाभूते राधिके ! तस्मात् त्वं मां चर प्राप्नुहि माश्च रक्ष । स्मेति पादपूरणे ।

---

सर्वयमकादयोऽन्ये च अनामकाः सनामकाः बहवोऽस्मोदाहार्य्याः । 'सदासे'त्यादिष्वप्रयुक्तता लभ्या, 'कस्या विशदता'मित्यादिष्वपि कृत्रिमो पदभङ्ग इति स एव प्राचीनो दोषः, 'राधे-चरे'त्यादिषु, 'सखारसा' इत्यादिषु च पदानां चादीनामनुद्देश्यः, 'तेऽवित्ते' इत्यादिष्वर्थान्तरैकपदतेत्यादि दोषप्रसङ्गाः यमकतया कथमपि सोढ़व्याः । 'गरीयसे'त्यत्र पादेन पदच्छेदेऽत्र न किमपि माधुर्यं—माध्यर्म्यमिव प्रत्युत भासते । न तावत् सर्वत्रैयं दोषदृष्टिः, यतो 'मदनसङ्गरसङ्गे'त्यादिषु उपभोग्येव काऽपि स्वादुता, 'त्रिवतते'त्यादौपद्ये नखोदयादित्दाकारपद्येष्विव किमपि वैरस्यसुक्तमेव, अतो हानोपादानयोर्भेद निदर्शनम् । मदनेति—राधां प्रति

सर्वयमकं यथा—

(५)(८) (४) (१) (२)
ससार सा ससारसाऽस-सार-मास सार-सा ।
(३) (७) (६)
ससारसाससारसा स सारमास-सार-सा (ग) ॥ ४२

प्रत्यक्षरयमकमपि केचिदिच्छन्ति । तद्यथा—

(४) (५) (६) (८) (९)
वि-वितत-नाना-भाऽभा विविधघना ना-ववस्थाख्या ।
(१०) (७) (२) (११) (३) (१)
सा साधुधुततरारा मम वसते लेहि-ह्रित-ततु ! तु (ग)॥४३ इत्यादि

एवं सप्तविंशतिर्भेदाः(ग) । द्विखण्डत्रिखण्डादिकश्लोकोदाहरणेष्वन्तर्भवतीति पृथङ् न दर्शितम् । तथाहि 'अहो अशोरावकताऽवपातया' (४० श्लोके) इत्यादौ द्विखण्डम् । 'मासो माऽसो मरीच्या' (३९ श्लोके) इत्यादौ द्विखण्डम् । 'विविततें'त्यादौ (४३ श्लोके) चतुःखण्डम् । एवमन्यान्यप्यूह्यानि । गद्येषु तु नायं क्रमः । तत्र यथा—'सदा सोदरे दामोदरे गुणसाराधिका सा राधिकाऽनुरज्यति स्मे'ति ।

सा राधा प्रातर्निकुञ्जाच्चलति स्म । कीदृशी ? ससारसा सलीलाकमलाऽसकार-सासनारसा या सम्यक्प्रकारेण आसो विक्षेपो यत्र तथा क्षेपके । तथाभूते सारे गमने यः सासो निद्रा तस्य सारं बलं स्यति क्षोयप्रतिभया हूसयतीति सा । स गतौ सोऽन्तकर्मणि अन्तकर्मशब्दस्य नाशो ह्यासश्चार्थः । ससारसा—ससारसा ससन्ति मृतं गच्छन्तीति ससाः, आ सम्यक् रसन्ति शब्दायन्त इत्यारसाः, असन्ति दीप्यन्त इत्यसाः सारसाश्चक्रवाका यतः यां विलोकयेत्यर्थः सा । सस गतौ, रस शब्दे, अस दीप्तौ । सः श्रीकृष्णः ससारेति पूर्वेणान्वयः । कीदृशः ? सारसाम सार सा सारसानां पक्षिविशेषाणामास्योपमेयस्य सारः स्थैर्यं तत् स्यति (नाति) नाशयति स्वीयगमनेन चकितीकृत्येति भावः ।

सा यमस्वसी नावस्थाऽऽख्या नौ आवयोरवस्थामेवाख्या व्याप्या आख्याङ् व्याप्तौ । त्रिधीस्य नामग्रहणं सङ्केतस्थलत्वात् । कीदृशी ? विभिः पक्षिभिर्विततानाना सा शोभा यस्याः सा । अमाऽपरिमिताऽनुपमा वा । विविधानि घनानि यस्यां सा । साधु यथा स्यात्तथा धूमतरोऽतिशयितस्याऽरो गतिर्यस्या यया सा यां प्राप्यान्यत्र गमनं नैव युज्यत इति भावः ।

---

विशाखाऽऽहेति कण्ठानन्दिन्यां मङ्गलिमूचना । माऽसि इत्यत्र मसा मुरा यस्येति प्रेमप्रकर्षे ममस्नेहोक्तिर्यमर्ष्यिमवव्याप्यार्थः नन्दानन्देत्यत्र नन्दस्य नन्दराजस्य नन्दन इति सुगम एवाभीष्टः ।

**भिन्ना अप्यर्थभेदेन युगपद्भाषणक्षमाः ।**
**त्यजन्ति भिन्नरूपत्वं शब्दा यत् (४) श्लेष (यच्छ्लेप) एव सः॥**
**२१२ का**

'अर्थभेदेन शब्दभेद' इति न्यायात् काव्ये स्वरस्यानुपयोगेन स्वरगतभेदाभावाच्च, केवलार्थभेदेन भिन्ना अपि शब्दा युगपदेकदा यत् यद्यर्थान्तरभाषणक्षमाः सन्तो भिन्नरूपत्वं त्यजन्ति तदा सः श्लेषः (घ) । अर्थद्वयश्लेषणाच्छ्लेषः ।

**स प्रकृतिलिङ्गवर्णप्रत्ययभाषाविभक्तिपदवचनैः ।**
**अष्टविधो, निरपेक्षस्तुल्योभयवाच्य एव नवमः स्यात् ॥२१३ का**

निरपेक्षः प्रकरणादिव्यतिरेकेणापि तुल्यवाच्यद्वयः (घ) । क्रमेणोदाहरणानि—

मनस्तुदन्ती क्षणदा बलिष्ठा विधौ विरुद्धे तमसि प्रवृद्धे ।
तस्मिन् प्रसन्ने हरितः प्रसादं धन्या लभन्ते तमसि प्रनष्टे ॥४४

सा क्षणदे बलवती भवति स्म । मम चेतसि मम मुखमाधुर्यास्वादिनी क्षिप्ता च तत्पुर्यस्याः, हे तथाविधे ! तु इति सम्बोधनम् । राधिका दामोदरे रज्यति स्म । कथम्भूता ? गुणेषु साराधिका गुणेषु मध्ये ये सारभूता गुणास्तैरधिका । दामोदरे कथम्भूते ? सदा मोदं राति ददातीति तस्मिन् ।

मनस्तुदन्तीति—विधौ चन्द्रे विरुद्धे सतीष्टाऽपि क्षणदा ऋतुसंवदाहतया यथार्थनाम्नो रात्रिर्मनस्तुदन्ती स्यादिति. तस्मिन् विधौ प्रसन्ने हरितो दिशः कर्त्र्यः प्रसादं प्रसन्नतां लभन्त इति । पक्षे, विधौ विधातरि विरुद्धे सति यत्तमस्तमोगुणस्य वृद्धं तस्मिन् सति इष्टाः पदार्थाः इत्यत्रच्छेदकाः सन्तो मनस्तुदन्तीति प्रथमार्द्धस्य, हरितः श्रीकृष्णात् जना धन्याः प्रसादं लभन्त इति द्वितीयार्द्धस्यान्वयः ।

---

अत्रापि क्रमस्याचाराणाञ्च नियमितत्वात् यमकमेव नानुप्रास इति । गद्येऽपिनि—तथा च रुद्रटकारिका :—'प्रायश्छन्दांसि विषयोऽस्ये'ति । तत्र टीकाकृतां नमिसाधुचरणानां विवृतिः—'प्रायोग्रहणात् गद्यमपि क्वापी'ति चोदाहार्यां । 'मम चेतो'त्यत्र सापेक्षत्वेऽपि गमकत्वात् समासः ।

(घ) 'द्विधा तु भिद्यते शब्दो रूपतः स्वरतोऽर्थत' इति शाब्दिकनयेनार्थभेदभिन्नानामेव शब्दानामत्र कारिकया परामर्शः । रूपत आकृतितो न तु प्रकृतितः । वस्तुतस्त्वेतेषामाकृतितोऽभिन्नानामपि प्रकृतितो भिन्नत्वं दुरपह्नवमित्याह वृत्तौ, 'अर्थभेदेन शब्दभेद' इति । 'सकृदुच्चरितः शब्दः सकृदर्थं गमयती'त्यभियुक्तोक्तिरत्र प्रमा । भाठगये सुनिगा

अत्र 'इच्छयदे'ति दाप् लवने, 'यणटे'ति डु दाञ् दाने, इति प्रकृतिभेदः। 'दृष्टा' इति पुंलिङ्गम्। 'दृष्टे'ति स्त्रीलिङ्गम्—इति लिङ्गभेदः। पुन'र्दृष्टा' इति बहुवचनं, 'दृष्टे'त्येकवचनं, तेन वचनभेदः। "विधा"वितीकारोकार साम्ये वर्णभेदः। "तुदन्ती"ति शतृ प्रत्ययः, "तुदन्ति" इत्याख्यातप्रत्ययः, तेन प्रत्ययभेदः। 'हरित' इति पञ्चमी, 'हरित' इति जस्, तेन विभक्तिभेदः। अनेनैकेन षड् भेदाः प्रदर्शिताः। पुनरपि भङ्ग्यन्तरेण लिङ्गवचनभेदं दर्शयति—

लीलाऽम्भोरुहगञ्जिनी रतिरणक्रीडाश्रमोद्गारिणी
निद्रोद्भेदविलासिनी स्ववशताऽसङ्कोचसञ्चारिणी।
अन्योन्यप्रणयप्रकाशनविधावन्योन्यसंह्लादिनी
राधाया नयने हरेरपि तनुः क्षेमं विधत्तां तव (11)॥ ४५

भाषाश्लेषो यथा—(घ)

उद्दामकामकण्डूलकरमण्डलचण्डिमा।
कालिन्दीकुञ्जरो धत्ते विहारं वारिमञ्जुलम्॥ ४३

लीलाम्भोरुहेति—राधाया नयने तव क्षेमं विधत्तां कुरुतामिति परस्मैपदस्य द्विवचनं, तथा हरेरपि तनुश्च तव क्षेमं विधत्तामित्यात्मनेपदस्यैकवचनम्, धाञ् धातोरुभयपदित्वात्। नयनयोस्तनोश्च विशेषणान्याह—लीलेत्यादि। स्ववशतेति—नेत्रपक्षे या श्रीकृष्णाविष्ट-वशीभूतता तस्या असङ्कोचो विस्तारस्तस्य सञ्चारिणी, तनुपक्षे स्वकर्तृका या जगद्विष्ट-वशीभूतता तस्या इत्यादि।

भाषाश्लेषः शौरसेन्याः श्लेषः। उद्दामेति—संस्कृतपक्षः सुगमः। प्राकृतपक्षे—हे चण्डि। हे कोपने। कालिन्दीकुञ्जरोधसत्ते (घ) चलं युगलं दन्द्वयो विहारं वारिसं वारयिष्ये। कथं वारयिष्यसीत्याह—इत्यकरमं प्रस्तुतं कर्म मा हल मा हल इत्युताह मारि कर्म कुर्वित्यर्थः। प्रस्तुतकर्म कीदृशम्? उद्दामकामकम्। 'कालिन्दीकुञ्जरे'ति 'उद्दामकामे'ति पदद्वयेऽपि समानार्थत्वात् भाषासमावेशः, अन्यत्तु सर्वसर्वभेदाद्भाषाश्लेष इति।

भरतेन 'हास्यशृङ्गारयोः स्वरितोदात्तं वीररौद्राद्भुतेषूदात्तस्वरित'मित्यादिक्रमा द्विधा प्रतिपादितस्वरनियमिकोऽपि काव्ये स्वरभेदप्रसङ्गः प्रकृतेऽप्रकृत इत्यर्थं दुर्विदग्धशौण्डिप्रकटनेन। एवं स्थिते एकमेवाकारमाश्रित्य वर्तमानस्य पदस्य श्लेषकाव्यजिनो भिन्नार्थत्वप्रकटने शब्दा श्लिष्यन्तीत्यभिन्नरूपेण भिन्ना इति शब्दाश्रयालङ्कारस्य श्लेषसंज्ञा। अलङ्कृतिरियमार्थ

(11) 'विधत्तां शुभः' इति (क) (ख) पुस्तकयोः पाठः।

पदश्लेषो यथा—

समराला रुचैवेयं राधिके ! सर्वदारुणा ।
मतिश्च तव दृष्टिश्च समे एव बभूवतुः ॥ ४१
कृष्णपक्षे बलवती दोषाकरपराङ्मुखी ।
समे द्वे तामसी रात्रिः सात्त्विकी च सतां मतिः ॥ ४२

वाक्यगतत्वेनायं समोभयवाच्यः। शब्दार्थश्लेषयोरयं भेदः—यत्र शब्दपरिवर्त्तनेनापि न श्लेषत्वभङ्गः सोऽर्थश्लेषः, अन्यस्तु सभङ्गाभङ्गत्वाभ्यामेव शब्दश्लेषः । स चोक्तोदाहरणेषु, शब्दपरिवृत्त्यभावात् (ङ) ।

अर्थश्लेषो यथा—

विलोलसंफुल्लकदम्बमालः समुल्लसच्चञ्चुलबर्हिबर्हः ।
अशेषसन्तापहरो जनानां कृष्णश्च मेघश्च सहोज्जिहीते ॥ ४३

अत्र 'कदम्बा'दिशब्दानां परिवृत्त्याऽपि न श्लेषत्वहानिः, इत्यर्थश्लेष एव(ङ) ।
अथ शब्दालङ्कारप्रस्तावे प्रासावसरतया चित्रकाव्यमपि दर्श्यते । तत्र यद्यपि—

मानवतीं श्रीराधां प्रति श्रीकृष्ण आह—समरालेति। साम्ये हेतुमाह—इयं मतिर्दृष्टिश्च सर्वदारुणा सर्वस्मिन् काले दारुणा सर्वदाऽरुणा च समराला दृष्टिपक्षे सम्यक् कुटिलेत्यर्थः, यदुक्तम् मेदिनीकारेण 'अरालः कुटिले सर्जरसे सामजि दन्तिनी'ति । मतिपक्षे समरो युद्धं तत् आलातीति। कृष्णपक्ष इति—कृष्णपक्षे शुक्लातिरिक्तपक्षे भवत्पक्षे च। दोषाकरश्चन्द्रो दोषोत्पत्तिस्थानञ्च। विलोलेति—माला स्रक्समूहश्च।

---

भारतीयसाहित्ये स्वतःस्फूर्त्तैव स्वाभाविकीति सर्वैरेवास्या अकुण्ठप्रसरः—परं गद्यकाव्येष्वस्या भूयानुत्कर्षो लक्ष्यते। अत्रापि 'सर्वमत्यन्तगर्हित'मिति नीत्याऽतिवेलभीतो निकर्षोऽपि प्रासङ्गिक प्रकृतः। यद्येऽप्यस्या विच्छित्तिं स्थूलदृष्ट्या प्रेक्ष्यैवं प्राचां निर्बन्धप्रकटनं 'श्लेषः पुष्णाति सर्वासु प्रायो वक्रोक्तिषु श्रिय'मिति । भाषाश्लेषस्यापरैरुक्ताद्भाषासमाख्यालङ्कारात् स्वतन्त्रविषयता, पूर्वत्र भाषाभेदादर्थभेदोऽप्यानुषङ्गिकः, उत्तरत्र न तथेत्याभाषणात्। रुद्रटादिभिस्तूभयोर्भेदेऽङ्गीकृतेऽपि संज्ञाभेदकल्पः प्राचीनमतनियन्त्रितत्वात् कथमपि परिहृतः। काव्यप्रकाशोक्तदिशा नात्र तस्य तथा व्यतिरिक्तस्य वेशतः सूचनमपि। भाषाश्लेषे क्वचित् भाषासमेऽपि कष्टकल्पनाश्रयः दुष्करः परिहर्त्तुं य'थोद्दामे'त्यादौ लक्ष्ये ।

(ङ) 'सभङ्गः शब्दश्लेषः अभङ्ग एवार्थश्लेष' इति प्रायोदाहृतमपाकर्त्तुं रुद्रटादिकृता सर्वस्वकृता कृताश्रयाश्रयिभावरूपां शब्दार्थोभयालङ्कारनिर्देशव्यवस्थां दूषयितुमेवेयमवतारणिका। मम्मटादिभिर्विध्वस्ता समुदयन्त्याद्यार्वाचीननिबन्धकृद्भिरुज्जीवयितुमिष्टाऽपि

प्रतिलोमानुलोमो श्लोको यथा—

(१) (६) (५) (४)
मानसाररसाधारा साऽयन्तो वनमालिना ।
(८) (२) (७) (३)
संललास महामोदा साऽऽमोदनि-साध्वसा ॥
(२) (३) (१) (७) (६)(५) (४)
साध्वसानि दमाश्वासा दा मोहामसलालसम् ।
(१४)(८) (१३)(१०)(११)(१२) (८)
नालि ! मानवतीयं सा राधा सार-रसा-नमा ॥ ५२

महामानवती राधा सम्प्रति किं करोतीति पृच्छन्तीं सखीं प्रति सखी प्राह— मानसाररसाधारा मानस्य सारं रसं न धारयतीति तथा, यतो वनमालिना सहायन्ती गच्छन्ती (च) सती आशु शीघ्रं संललास, इत्थं गतौ प्रवृत्ताः। कीदृशी ? महामोदेनातो दीप्तिर्यस्याः सा। आमोदनिसाध्वसा आ सम्यक् मादेन सौरभमत्ततया निसाध्वसा निर्भया निशब्दोऽयं निषेधार्थो "यथा दीपो निवातस्थ" इतिवत्। अहं साधु यथास्यात्तथा असानि वर्ते। यतो दमाश्वासा दमेनैवाश्वासोऽभूदित्यर्थः। ननु मा त्वया वादीः साध्वमानस्य शीघ्रमेवोपशमं न सम्भावयामीति वदन्तीं प्रत्याह—असलालसं यथास्यात्तथा ऊहां वितर्कं मा दाः, किन्तु सलालसं यथास्यात्तथा वितर्कं खण्डयेत्यर्थः। निश्चयं प्रदर्शयत्याह—नालीति। हे आलि ! सेयं राधा मानवती न किन्तु सारसेन श्रेष्ठरसेन आनमतीति सा।

---

एतच्च प्रकाशटीकाकृता सोमेश्वरेणोद्धृतमपीह्यते—'यमकानुलोमतदितरचक्रादिभिदा हि। अभिधानमात्रमेतत् गड्डलिकादिप्रवाहो वे'ति। 'क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे। परव्यामोहने चैव सोपयोगाः प्रहेलिका' इत्युपलक्षणमुखेन च तस्योद्घाटनम्। शक्तिरुभरा इति—सा च शक्तिर्गोष्ठीगरिष्ठानां कुतुकिनां तूपश्लेषाणां स्वान्यनुवृत्तिकृतविधिरेव सप्रकाशेति भट्टबाणादिग्रन्थेषूल्लेखतः प्रतीयते, खड्ग-चक्र-बाणादिराजसभासिद्धपदार्थानुकृतिमिषावधीयते। 'अनेकधावृत्तवर्णविन्यासैः शिल्पकल्पना। तत्तत्प्रसिद्धवस्तूनां बन्ध इत्यभिधीयते' इत्यग्निपुराणे (३४२ तमाध्याये) अस्य चारुशिल्पकल्पं पुरस्कारसूचनम्। 'भगवत्विषय'मिति कृत्वा यदेषामत्र सार्थकत्वसमर्थनं तत् भक्तवैष्णवकविसहृदयसार्थकतयैव। गर्भाचरादीनि तत्कालोपयोगीनि चित्राणि। आकार-गति-स्वर-व्यञ्जन-स्थान-च्युतक-गुप्त-प्रहेलिकादिभेदैरत्र भूयान्विस्तर आकरतो मृग्यः। अमीषामादित्यचतुर्णां प्रचुरतो लक्ष्यलक्षणानि। पद्मादिबन्धानां मुद्रितग्रन्थेषु बहुशः प्रदर्शितत्वादिह प्रायाणि छत्र-खड्ग-पताका-गदा-मुद्गरबन्धमयान्यत्र परिशिष्टे दर्श्यन्ते। एषां ग्रन्थालङ्काराणां सर्वदेव बहुभि-

महासर्वतोभद्रं यथा—(च)

(७) (४) (५) (१) (२) (१२)
साधाराऽश्रीः श्रीराधा सा धामाकामा मा-कामाऽधात् ।
(३) (४) (१०) (८) (११) (९)
राकाधीमा माऽधीकारा श्रीमा मानेनेमामाश्रीः (च) ॥ ५४

सर्वतोभद्रं यथा—
(३) (५) (६) (७)
धाराऽसाररसा राधा रासलास्यस्य लासरा ।
(४) (१) (२)
सालाकाररकालासा रस्यरस्यस्व ! रस्यर ! ॥ ५५ (12)

साधारेति—सा श्रीराधा साधाराश्रीः साधं सिद्धिमियर्त्ति प्राप्नोति साधारा च्चा सम्यक् श्रीः शोभा यस्यास्तथाभूता भवतीत्यन्वयः। कीदृशी ? धामाकामा धाम्नि निकुञ्जगृहे अं श्रीकृष्णं कामयत इति सा। 'शीलिकामिभक्ष्याचरिभ्यो णः' (३।२।१ वार्त्तिके) इति ण प्रत्ययः। ननु किं स्वीयकामस्यार्थं कामयत इति तत्राह—माकामा। मेति निषेधे, न विद्यते कामः स्वसुखतात्पर्यं यस्याः सा, कृष्णसुखार्थमेव तं कामयत इत्यतः प्रेमवतीति भावः। राकाधीमा राकायां पौर्णमास्यां धियो बुद्धेर्मा शोभा यस्याः सा रास-विलासविहारार्थमिति भावः (12a)। माधीकारा मा आधिर्मनःपीडा यस्याः इं कन्दर्पं कं सुखञ्च च्चा सम्यक् रातीति, सा च सा च सा, अतएव तस्याः सर्वतः ऐश्वर्यात् श्रीमा सम्पत्तिरूपा लक्ष्मीः मानेन आदरेण आश्रीः आश्रयसंख्या इमां राधामधात् स्वसर्वसम्पत्ति-समर्पणेन पालयामास। धाराऽसाररसेति—धारायामासारः सम्पात [illegible] रसो यस्यां सा

राढसतया प्रतियुगं नवाः भंग्याः क्वचित् कविकालिदासादिभिर्ग्रन्थेषूल्लिखितप्रायतया मनुकार्यरूपमादरेण विदग्धगोष्ठ्यामित्यपरोक्षमेव प्राचीनसंविनाम्। आधुनिकप्रायाणां

(12a) '—मिति शेषः' इति स्यात्। पर टीकायन्त्र सर्वत्रोपदर्शित एव।

(12) इतःपरं 'रदा सा, मालोकामरकाऽस्मो नालोक साररसावलो। कामा रसासारसाऽकामरसा सम साऽऽर न।' इत्यधिकः पाठः (ङ) (ग) पुस्तकयोरुपलभ्यते। टीकाऽपि तत्राधोदर्शिता यथा— "अतो राधोऽन्तरे प्रकाश श्रीकृष्णस्य तत्र श्रीराधिकामपश्यतः स्वयमुक्तिरियम्। सा अस्माकमधिकतया [illegible] न कार नालकवती। किन्तु सा ? अकामरसा मदिच्छेद्वक्ष्यमाणेन दुःखेन, "अयं पापदुःखयो"-रिति मेदिनीकारवचनात्, न कार्मा श्रीवन स एव रसो विषं यस्या सा, "रसो जलरसे स्वादे। शृङ्गारादौ विषे वीर्ये" इत्यादि मेदिनी। अतएव रसासारसा अमदा शृङ्गारकुञ्जसमानाकारां इति मर्ति नयवदलीति शिष्। [illegible] [illegible] किन्तु ? कामा इति—कालं नीतिमाप्नोति शोभमानेत्यर्थः। पुनः कीदृशी ? अत्रोन्नेत्यादि

छत्रबन्धो यथा—(च)

(६) (५) (२) (३)
तनुतां तनुतां राधाकृष्णयोश्चरितश्रुतिः ।
(४) (१) (८)(७)(९) (१०)
छत्तापानां सुधासिन्धुधारा तां नु ततां नुत ॥ ५६

खड्गबन्धो यथा—

राधामाधवयोः केलिः श्रुतिछत्सुखदायिका ।
काममातनोतु वः क्षेमं प्रेमानन्दौघनिर्भरा ॥ ५७
रासारम्भे नृत्यगीतवादित्रादिमनोहरा ।
राभसासारा सौभाग्याधरीकृतपरा परा ( च ) ॥ ५८

राधा "धारावम्पात आसार" इत्यमरः, चतुर्थ्यांकारिष्ठ'छिताविदयं धाराऽसारशब्दो ज्ञेयः। रासलास्यस्य रासाख्यनृत्यस्य लासदा लासं कान्तिं राति ददातीति, तया विना तव रासविलासो न सिध्यतीति भावः। पुनः कीदृशी ? साराकाररकालाधा साराकारं राति ददातीति साराकाररो यः कालो यौवनसमयः तत्रास: सम्यक् दीप्तिर्यस्याः। हे रसरसस्य ! रसेभ्यो हिताः रसा: रसिनो रमणपराश्च ये युवतिजनास्ते रसो गम्यः, हे तथाभूत ! हे रसार ! रसान् रमणीयान् विलासादीन् राति तेभ्यो ददातीति हे तथाभूत श्रीकृष्ण !

तनुतामिति—चरितश्रुति चरितश्रवणं छत्तापानां तनुतां कृशतां तनुतां विस्तारयतु । कीदृशी ? सुधासिन्धुधारा। नु भोः, तां ततां विस्तृतां नुत स्तुत, इत्यर्थेन विदुक्तिः।

रासारम्भ इत्यस्य पूर्वेणान्वयः। रासस्य नृत्यविशेषस्यारम्भे नृत्यं हस्तपादादिचालनविशेषः, गीतं षड्जादिमिलनं, वादित्रादि वीणाऽऽदि, तैर्मनोहरा राभसाऽस्य कौतुकस्य सारः स्थिरांशो यस्यां सा। सौभाग्येनाधरीकृता अधःकृताः परे ब्रह्मानन्दादयोऽपरे (13) सार्वभौमसुखादयो यया सा इति, केल्याः मकाशान्न केऽपीति भावः।

---

श्री 'यविदुषासुत्तम्भितसंस्थानसुद्राणामालङ्कारिकधुरीणानां प्रेमचन्द्रतर्कवागीशपादानां 'छतवद्धे क्रमवद्धे चक्रताऽऽकुले व्रजति मारशब्दे (Marshall) च मधुव्रते। क्षिप्रिवशादधुना मधुनाऽऽहतो रसमयः समयः समुपाययाविन्यादि संग्रहीतॄणामामोदमुत्तेजयति। 'व्रयन्तौ'-त्यादि—जीवातुस्तु, व्रय गताविति धातोरनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति। 'उदयति

---

—न लीनोऽलिर्यस्यां सादृशी, मानसावधी छन्ममधुरिकिरिव भ्रमरादुत्ता मधुरमधुधारेव परमानन्दइत्यर्थः। पुनः कीदृशी ? नालीकं पद्मविकासनं यस्याः सा, बहुव्रीहौ कः।" तृतीयचतुर्थचरणसन्धौ सन्धस्तु न सरसः, अतो हेय एवायम्।

(13)—'दधः परं' इति क्वचित् पाठः।

पद्मबन्धो यथा—

राधिका रुचिराकारा राकारासस्थलीसरा ।

रासलीलापरा सारारासारा गीः पिकाधिरा (छ) ॥ ६२

चक्रबन्धो यथा—

(१७) (१) (७) (१३) (२२) (१६) (१०) (४)

[यस्य] श्री तु लना न [क-थन] ग मी भक्तोव ता पा र्दनो

(१८) (२) (८) (१६) (१४) (११) (५)

[ध्वस्ता-] ना थ बल- [च्छ-विः] स न हि मां त्वं मुञ्च मो द घ्नम !

(२०) (३) (६) (१५) (२१) (१२) (६)

[सन्ना-] थ ! व्र जकेलि- श-ब्दनमनः [यद्वा-] न दी कौ तुकी(छ)

(२३)

कीलप्राय इहाध्वनीह सततं नो [मत्समः] पातकी ॥ ६३

अत्र— श्रीनाथपादकौतुक्यनमामोदो कविः शमी (छ) ।

यस्य ध्वस्ताऽच्छविः सन्नाऽयद्वा कथन मत्समः(13) ॥ ६४

गर्भाक्षर इति—एतान्येवाक्षराणि क्रमनैरपेक्ष्येण गर्भे निधाय कविना नानाच्छन्दोभिः श्लोकाः क्रियन्तामित्येतदप्येकं चित्रम् (च)। राधिकेति—राकायां रासस्थलीं सरतीति सा। साररासारा सारं साररसम् आ सम्यक् रासस्य ददातीति सा। गीःपिकाधिरा गीर्भिः पिकानामप्याधिं रातीति सा। यस्येति—यस्य श्रीयुक्ता तुलना कथन कश्चिदपि न गमी न गमिष्यति। यस्त्वं ध्वस्तानाथबलच्छविः ध्वस्तमनाथानामसुराणां बलं छविश्च येन स त्वं मां न मुञ्च। हे मोदघ्नम। भक्तजनानन्दने समर्थ। हे सन्नाथ। इहाध्वनि भक्तिमार्गे सततेऽविरते मत्समः कीलतुल्यः कोऽपि पातकी नास्ति। कीदृशः? व्रजस्य केलेः कथाश्रवणेनैव या मनसि श्रद्धानदी तस्यां कौतुकी स्नातुं कौतुकवान्, तथाप्यन्त्या-योग्योऽपीति भावः।

श्रीनाथस्य पादे पदसेवायां कौतुक्यं कुतुकिनो भावस्तस्मिन् नते आमोदी कविः पण्डितः शमी शान्तः। यस्याच्छविम्लानिना ध्वस्ता अयद्वा च सन्ना विशीर्णा तत्समः कोऽपि न भवेत्। पक्षे कविः स्वदैन्यं स्वयमेव वर्णयति स्म—श्रीनाथस्य श्रीगुरोः पादयोः कौतुक्यं पादावस्यैव संश्रयामीति यत् कौतुक्यं तस्मात् एव नत आमोदी, न तु पादयोः कदाचित् कामपि सेवामकरोदिति भावः। कविः श्रीमहाप्रभुदत्तशक्तिकः शमी विरक्तो गुरुकृपया-

---

(छ) बन्धश्लोकेषु नामाङ्कता हि प्रायशः प्राचीनश्लोककर्तां शैली। अत्र क्वचित् कवेर्गुरु-स्मरणं गुरुनामाङ्कता च वरीवर्त्ति। तत्र विस्तरः कण्ठाभरणादितो ग्राह्यः। नीरसा-

(13) अत्र "न तत्सम" इति पाठ (ख) (ग) (ङ) पुस्तकेषु, स च टीकाकृता गृहीतः।

शार्ङ्गमल्लो यथा—श्रीकृष्णगाथा नामेयं कर्मणा च कदाचन ।
नासाद्यते पावनिका विना तस्य दयां हरेः ॥ ६५
कथमस्य कृपासिन्धोर्जनेषु च मिथोरतिः ।
जायते बहुजन्मान्ते सुकृतैः कारणायितैः ॥ ६६
चरणासवलाभेन दारुणाकरुणात्मनाम् ।
मोहं हित्वा किल प्रीतिं तमनु सततं स्मर ॥ ६७
तस्य रूपं चेतसि च मन्त्रवत् सततं लिख ।
तेन साधुतया कृष्णे भविष्यति समागमः ॥ ६८

एषु— श्रीनाथपादपाथोज—(14) रसलालसचेतसा ।
कृतेयं ततमोदा च सुजने कविता तया ॥ ६९ इति श्रीकान्तरम् ।

यथा वा—श्रीगप्रीतिः स्वनामाकृतिकथनविनाभावपदे न, विद्या-
ऽमोदश्रद्धाकलापादपि सुखदमिथोभावसाम्राज्यतश्च (15) (छ) ।
रम्या रम्यस्थलस्थप्रसरमदकलामोदलक्ष्मीसमेत-
प्रेमासक्तप्रगीतप्रणयिनि रुरुचे तास तन्ना विसाभा ॥ ७०

सेवायामप्यनासक्त इति भावः । व्यनयत यस्य स्वविभैसमंमदि भक्ता, मत्ता च मत्ता, तत्समो महाप्रभुभक्तमण्डले कोऽपि नास्ति, स एवैकोऽस्ति इति भावः । पर्थेति—दारुणः कठोरोऽपि ।

श्रीगप्रीतिः श्रीकृष्णविषया प्रीतिः स्वं स्वीयं यन्नामाकृत्योर्नामरूपयोः कथनं कीर्तनं तद्विनाभावपदे न भवति, किन्तु तदविनाभावपद एव भवतीत्यर्थः । विद्याया आमोदः सौरभं, तत्रापि न इत्यर्थः । श्रद्धायाः कलापः समूहश्च तयोर्द्वन्द्वैवं, तस्मादपि न भवति, तथा सुखदो यो मिथोभावः परस्परप्रीतिस्तस्यापि साम्राज्यतः साम्राज्यात् "ल्यब्लोपे-पञ्चमी"त्यर्थः । कीदृशी ? रम्या, रमा शोभा तस्यां साधुः, रम्यस्थले श्रीवृन्दावने तत्रस्था

अत्र च— श्रीनाथपदपाथोजरसलालसचेतसा ।

भाविता ततमोदस्वरसा सुकविना कृतिः(छ) ॥ ७१

एकाक्षरपादो (छ) यथा—

शंशीः शशी शशाशाशां पापोऽप-पाप-पः पपिः ।

लोलो (छ) ललाल ली-ला-लीं ययाऽयं योऽयया ययौ ॥ ७२

एकाक्षरो यथा—

न नाना नानिनोऽनेना नानाऽनेनाननं नु नुः ।

नूनं नोनान्ननूनानु नुन्नुन्ननून्निनीः ॥ ७३

ये प्रखरा जङ्गमाः पशुपक्षिमृगादयस्तेषां मदो भावोन्मादः, कला वैदग्धी, मोदो हर्षो, लक्ष्मीः शोभा, तत्समेतो यः प्रेमा तमासन्नोऽनुगतो यः प्रतीतः प्रतिष्ठितः प्रणयिजनस्तस्य रुचे रोचते स्म। तातेति तातुमन्त्रेण सम्बोधनम्। हे मतुप्रियशिष्य। तद्वा तस्य प्रणयिजनस्य भा शोभा विलाभा ज्योत्स्नालसच्छशी व्यतिनिर्मलेत्यर्थः।

श्रीनाथेति—सुकविना कृतिः काव्यं भाविता आविर्भाविता। कीदृशी? ततमोदस्यो विस्तृतानन्दस्यो रसो यस्यां सा। एष शार्ङ्गबन्धस्यैव प्रपञ्चः। कश्चित् सख्यमभिसरन्ती चकसाचन्द्रमुदितं वीक्ष्याभिमर्षमसमासुतयति—शंशीरिति। शशी चन्द्र आशां पूर्वां, दिशं शशाश शाप, शश् प्लुतगतौ, पश्चिमस्यां दिश्यस्तीभूय पुनः प्लुतिनैव पूर्वां दिशं जगामेत्यर्थः। कीदृशः? शंशीः शं कल्याणं, तत्र शेते, न तु मत्कल्याणे जागर्तीति भावः शीङ् स्वप्ने क्विबन्तः। यद्वा मत्कल्याणस्य शीर्हिंसा यतः, शॄ हिंसायां सम्पदादित्वात् क्विप्, शमिति मान्तमव्ययम्। दुःखेन शशिनमाक्षिपति—पाप इति। अप पाप-पः अपगत-पापानसद्विधयुवतिजनान् पायन्ति, (16) पै ओ वै शोषणे। पुनः कीदृशः? आशामसम्मनो-रथं पिबतीति सः, ण लोकेत्यादिना षष्ठीनिषेधः। अतएव लोलो युवतिसतृष्णः लभ्यो लीनाश्लेषं लाति ददातीति याऽली सखी तां ललाल कामितवान्। 'लोलश्चलसतृष्णयोः', लीङ् श्लेषणे, लल ईप्सायाम्। यया लीलालया सह अयं शुभावहं विधिं सन् योगं ययौ प्राप। कीदृश्या? अयया न विद्यते या यानं यस्यास्तया सम्प्रयोगे स्थिरयेत्यर्थः, साम्यमकुर्वत्येवेति भावः। यद्वा, न यातीति अया तया।

नेत्यादि—ना पुरुषः परमेश्वरो नाना न भवति, किन्त्वेक एवेत्यर्थः। कीदृशः? अनिनः न विद्यते इनः प्रभुर्यस्मात्, स एक एव प्रभुरित्यर्थः। 'इनः सूर्यः प्रभौ राज्ञी'त्यमरः।

---

घटिते श्लोकान्तरगर्भे बन्धे। तत्घटकश्लोकेष्वेषु श्रीकृष्णभक्तिः, तदङ्गेषु च गुरोः स्तुतिरिति द्विविधा भणितिपरिपाटी। श्रीमद्भागवतपुराणोपरि निबन्धंकर्ता ग्रन्थकृतः स्वग्रामे

---

(16) 'पाययती'ति ,(ग) (ङ) (च) पुस्तकेष्वसङ्गतः पाठः। 'पापयतीति' (ख) पुस्तकेऽनवधानकृतः पाठश्च।

सिंहावलोकश्लोकान्तरगर्भो यथा(छ)—

(२) (१)
तेजः किञ्चन [तनदस्य] सततं [नव्याम्बुदाभं भज]
(४) (३)
स्निग्धं लोचन-[लोभदञ्च-] तुरता-[लीलाविलासावलि] ।
(६) (५)
अन्तश्चिन्तय [तां रसस्य] सरणिं [श्रीराधिकामोढ़िम-]
(८) (७)
प्रेमार्द्रं रुचि-[रच्छवि स्म]-रवतों [क्रीड़ां दधद्धामसु] ॥ ७४

अत्र—नव्याम्बुदाभं भज तनदस्य लीलाविलासावलि लोभदञ्च ।

श्रीराधिकामोढ़िमतां रसस्य क्रीड़ां दधद्धाम सुरच्छवि स्म (छ) ॥ ७५

इति श्लोकान्तरगर्भः ।

(६) पुनरुक्तवदाभासः पुनरुक्तवदेव सः ॥ २१५ का—

तव तनुशरीरसदृशो काञ्चन कनकस्य बोधं नैचे ।

राधे ! सुमुखि ! न भवत्या मुखवदनङ्कोऽपि शुभ्रांशुः ॥ ७६

अनेनाः, न विद्यते एनः पापं यस्य, "अयमात्माऽपहतपाप्मे"तिवत् । यद्वा विषमजगत्सृष्ट्याद्य-नेना निरपराधः । एकस्यैव तस्य नानाविधजगत्कारणमाह—अनेन परमेश्वरेणैव नाना नानाविधमायिकं जगद्भवतीति भावः । नु भो नुर्जीवस्याजडस्यापि अनतं जीवनमनेन परमात्मनैव भवति, किं पुनर्मायिकस्य नानाविधजगत इति भावः । नूनमिति वितर्कः । जगान् न्यमान् नृन् पुरुषान् अनूनान् अन्यूनांश्च पुरुषानत् तत्त्वीकृत्य न सुनुत्रवति, तु नुतौ क्षिपि तुत् नुतं नुतं नुदति दूरीकरोतीति तथाभूतो न भवति, अनुत्कृष्टमुत्कृष्टं वा पुरुषं कश्चित् ईश्वरत्वेन स्तौतु, तत्राप्यवहित्थता नास्त्यमानुषस्यादिति भावः । प्रत्युत ननु निश्चित-तमिनोः ऊर्ध्वं स्वर्गं महर्लोकादिकञ्च नितरां नयतीति, अनिकृष्टोत्कृष्टदेवतोपासकाना-मपि स एव स्वर्गादिकं फलं प्रापयति, तस्यैव सर्वफलदातृत्वादिति भावः । तेजः कथम्भूतम् ? अन्तश्चिन्तयतां जनानां रसस्य सरणिं वर्त्म । 'सरणि'मित्यस्य तेजोविशेषणत्वेऽप्यजहल्लिङ्ग-त्वान्न क्लीवत्वम् । धामसु कुञ्जगृहेषु सात्वतीं क्रीड़ां दधत् परिपुष्णत् । सुराणां सूर्यादीना-मपि छविस्तेजो यस्मात्, 'न तद्भासयते सूर्य्य' इत्यादि, "न तत्र सूर्यो न च चन्द्रतारकाः" "तमेव भान्तमनु भाति सर्व"मित्यादिश्रुतेः, "यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक"-मिति स्मृतेश्च । यमकचित्रकाव्यव्याख्या समाप्ता ।

कुमारहट्टग्रान्तः काञ्चनपल्लीग्रामाभिधे श्रीकृष्णराधारूपदेवायतनप्रतिष्ठातृणां परमभागवतानां शिवरायाणां श्रीनाथचरणानां आदरमरणं श्रीकृष्णचैतन्यस्योद्देशदीपिकायामानन्दवृन्दा-

अयं शब्दार्थनिष्ठोऽपि (ज) । यथा—

घनजलदरुचिर ! सुन्दरधाम ! महःसञ्चयौघलिप्ताशः ।
विधुरमृतकरकलानिधिरेष नभःपुष्कराकाशः ॥ ७७

अत्र शब्दवदर्थोऽपि पुनरुक्तवदाभासते, न तस्य पौनरुक्त्यम् । नभाः श्रावणस्तत्सम्बन्धि पुष्करं व्योम तद्वदा सम्यक् काशः प्रकाशो यस्य स तथेति । कृष्ण-पक्षेऽनेनैव श्यामत्वोपलब्धेः, पुन'र्घनजलदे'त्यादिना पुनरुक्तवच्छ्यामत्वमर्थः प्रतिभासते, न तु पुनरुक्तम् । वस्तुतस्तु 'नभःपुष्कराकाशे'त्यस्य साध्यस्य

श्रीकृष्ण व्याह तवेति—अत्र 'तनु''शरीर'योरेकपर्यायत्वेन एवं 'काञ्चन''कनक'योरेकपर्यायत्वेन च पुनरुक्तत्वम् । अनया सुखवदनचन्द्रो निष्कलङ्कोऽपि शुभ्रांशुश्चन्द्रो न भवतीत्यर्थः । अत्रापि 'सुख''वदन'योः समानपर्यायत्वेन पुनरुक्तत्वं ज्ञेयम् । घनेति—हे निविडजलद इव रुचिर श्रीकृष्ण ! पुनश्च हे सुन्दरदेह ! एष त्वं विधुः सर्वेषां संसारदुःखं विधुनोति हरतीति तथाविधः सन् भासि । त्वं कथम्भूतः ? महःसञ्चयस्य कान्तिसमूहस्यौघेन वेगेन लिप्ताऽऽशा दिक् येन सः । पुनः कथम्भूतः ? अमृतकरस्यासौ कलानिधिश्चेति । यथा कला वैदग्धी तस्या निधिरिव । नभःपुष्करस्य श्रावणमाससम्बन्ध्याकाशस्येव आ सम्यक् काशः श्यामदीप्तिर्यस्य सः । अत्र 'घन''जलद'शब्दयोस्तथा 'रुचिर''सुन्दर'योः 'धाम''महसोः' 'सञ्चयौघ'योरेकपर्यायत्वेन पुनरुक्तवदाभासत्वं ज्ञेयम् । एवमुत्तरार्द्धेऽपि । चन्द्रपक्षे, हे निविडमेघेन सुन्दर ! किञ्चिद्दूरवर्त्तिमेघेन चन्द्रस्य शोभाऽतिशयो भवतीति सर्वैरेव दृश्यते इति ज्ञेयम् । अमृतकिरणश्चासौ कलानिधिश्चेति, कला षोडशो भागस्तस्या निधिः ।

---

समाप्यचम्पूग्रन्थे च कविकर्णपूरेण विहितम्—यथा 'गुरुं नः श्रीनाथाभिधमवनिदेवान्वय-विधुं नुमो भूयात्रं सुत इव विभोरस्य दयितम्' इति, 'कुमारहट्टे यत्कीर्त्तिः सम्यद्देवो विराजते,' इति च । यथा तत्र तथाऽत्रापि श्रद्धायुतो वैष्णवजनोचितो विनयमहिमा मनागुपभोग्यः । श्लिष्टकाव्यत्वादेषु 'अनङ्गकेलिशब्दनमनः' "अस्ताऽक्वविः" 'ततमोदा च सुजने' 'रम्या रम्यस्थल....' 'कुरुच्छवि सा,' इत्यादौ क्लिष्टताऽर्थापरिपोष-नेयत्व-निरर्थकत्वादीनां दोषाणां समाधानं नातिदुष्करम् । लोल इति—'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ' विति विशेष्यार्थबोधः । श्रीकृष्णस्य स्वयं भगवत्त्वेऽपि लोलता भक्ताकर्षणव्याजेनेति सर्वमवदातम् । साम्राजतश्च—अस्य शुनादिगणपाठसिद्धत्वं न पाणिनीयानुशासनसंवादि । एतदधिका· लङ्कारिकसम्मतक्रियाकारकगुणस्थानचितादीनां भेदा व्याकरणतो ज्ञेयाः ।

(ज) पुनरुक्तवदाभासस्य केवलशब्दनिष्ठत्वं शब्दार्थोभयनिष्ठत्वञ्चोभयमेव प्रकाश-कारादिकृतरीत्या । आदौ कल्पेऽस्यैवास्यावतारः सम्यङ्, द्वितीयेऽपि तथैव, अतोऽत्रानुसृता

'घनजम्बे'त्यादि हेतुभूतम्। एवं चन्द्रपक्षेऽपि, तेनोक्तरूपशब्दपरिवृत्तावपि 'विधु'रिति नानार्थस्य शब्दस्य स्थितौ तथाविधार्थालङ्कारस्य प्राधान्यम् (ज)।

॥ * इत्यलङ्कारकौस्तुभे शब्दालङ्कारनिर्णयो नाम सप्तमः किरणः ॥ *

नभस्याकाशे पुष्करं श्वेतकमलमिव व्या सम्यक् काशो दीप्तिर्यस्य। सरोवरे यथा श्वेतकमलं शोभते तथैव नभोरूपसरोवरे चन्द्रोऽभाति॥ *

---

भेदघटितव्यतिरेकधा न्यायानुसारिणी, तथा च शब्दालङ्कारतोऽर्थालङ्कारोत्तरत्वमपि पुनरयमेव साधीयान् हेतुरित्याशयः। आधयार्थविन्यासमनुरुन्धाना रुय्यकादयस्तिममर्थालङ्कारत्वेन स्मरन्ति। परिवृत्तिसहत्वासहत्वयुक्तिमुपयुञ्जाना अपि दर्पणकृदाद्याः केचिदस्योभयरूपस्य शब्दप्राधान्यमिति स्वीकृत्य तन्निबन्धेऽप्यादायैवास्यालङ्कारस्य विमर्शेन सर्वस्वकृतां क्रमभक्तिमुपजीवन्ति। अर्थालङ्कारप्राधान्यमिति—नानार्थशब्दोत्थितत्वेनास्यार्थालङ्कार-प्राधान्यपरिकल्पना प्राचीनमतवादं प्रति श्रद्धावृद्धितः प्रसूतेत्यापाततः प्रतिभाति। इति—*

## अष्टमः किरणः ।

अथार्थालङ्कारा उच्यन्ते—

### यथाकथञ्चित् साधर्म्यमुपमा (१) (क)—२१६ का

उपमानोपमेययोर्यथाकथञ्चिद्येन केनापि समानेन धर्मेण सम्बन्ध उपमा । स च धर्मेण, (क) न तु सर्वैरंशैः—सर्वांशत्वेनाभेदादुपमानोपमेयभाव एव न भवतीति ।

### —सा भवेद्द्विधा ।

### पूर्णा लुप्तेति—२१७ का

सा उपमा । **—पूर्णा तु धर्मेणेव-यथाऽऽदिभिः ॥**

### उपमानोपमेयाभ्याम्—२१८ का

यथाकथञ्चिदिति सूत्रस्यार्थमाह—उपमानोपमेययोरित्यादिना । उपमानोपमेययोः सादृश्यसम्बन्ध उपमाऽलङ्कारः । सादृश्यसम्बन्धमेवाह—यथा कथञ्चिदिति । एक द्व्यादि-धर्मेण, न तु सर्वेण धर्मेणेत्यर्थः । येन केनापी'ति साधारणेन धर्मेणेत्यर्थः । 'समानेने'ति उपमानोपमेयवृत्तिनेत्यर्थः । 'धर्मेणे'ति 'धान्येन धनवान्' इति-वदभेदे तृतीया । तथाचोपमानोपमेयवृत्त्येकद्व्यादिसाधारणधर्माभिन्नः सम्बन्धः सादृश्यसम्बन्धः । नतु सर्वैरंशैरिति—सकलोपमानवृत्तिगणवत्त्वो धर्माद्यैरित्यर्थः । अभेदादिति—स्वनिष्ठयावद्धर्मेण स्वघटस्य स्वमेव, अतोऽभेदेन उपमानोपमेयभाव एव न सम्भवतीत्यर्थः ।

---

(क) यथाकथञ्चिदिति—इयमिहत्तोपमालक्षणच्छायैवानिर्वाच्यमतीव प्रतीयमानैर्थं लक्षण-घटना वृत्तिग्रन्थाद्वाक्यादिविरिक्तैव प्रतिपाद्यते। नात्र तत्र गृहीतायाः प्रतीयमानसादृश्याया उपमाया अन्तर्भावो कथञ्चिद्विभाव्यः । स चांशेनेति—'भूयोऽवयवसामान्ययोगो जात्य-न्तरस्य यदि'ति कैश्चिल्लक्षितस्य सादृश्यलक्षणस्यानुबन्ध, स्फुट एव। एतदभिप्रेत्यैव प्रकाश-सर्वस्व कौस्तुभ इत्यादीनां लक्षणेषु साम्य-सामान्य-सादृश्यादिपदत्यागेन साधर्म्यपदस्य निवेशः । कृष्णचिन्तकया मतद्वयसमाधानमित्य' वैश्विचेष्टितस् यथा, 'यत्र किञ्चित् सामान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः' इत्युक्ते सर्वस्वग्रन्थोक्ते । उपमाया विच्छित्तिमात्रा-ऽतिरेकोऽनेकालङ्कारजीवातुभूतत्वस्याविकालतः कलितमित्यस्यानन्यसाधारणत्वेनाग्रिम-निर्देशबीजम् । अत्र साधारणधर्मस्यासाधारणस्यापि सामान्यं क्वचिदेकरूप्येण प्रत्यैक्य-मयत्वेन वा,क्वचिदा तस्य पृथक्तया निर्देशो वस्तुप्रतिवस्तुभावेन,यथा लक्ष्य यान्त्या। सुच्छुर्वलित-कन्धरमाननन्तदावृत्तवृन्तशतपत्रनिभं वहन्त्या' इत्यादि मालतीमाधवपद्ये, 'पाण्ड्योऽयमंसा

'घनजलदे'त्यादि हेतुभूतम्। एवं चन्द्रपद्येऽपि, तेनोन्नरूपशब्दपरिवृत्तावपि 'विधु'रिति नानाऽर्थस्य शब्दस्य स्थितौ तथाविधार्थालङ्कारस्य प्राधान्यम् (ज)।

॥ * इत्यलङ्कारकौस्तुभे शब्दालङ्कारनिर्णयो नाम सप्तमः किरणः ॥ *

नभस्याकाशे पुष्करं श्वेतकमलमिव भा सम्यक् काशो दीप्तिर्यस्य। सरोवरे यथा श्वेतकमलं शोभते तथैव नभोरूपसरोवरे चन्द्रोऽपीति ॥ *

---

भेदसहिष्णुरेकधा न्यायानुसारिणी, तथा च शब्दालङ्कारतोऽर्थालङ्कारोत्तरणकल्पे पुनरयमेव साधीयान् सेतुविन्यासः। आश्रयाश्रयिन्यायमनुसरन्तो रूपकादयस्त्विममर्थालङ्कारत्वेन स्मरन्ति। परिवृत्तिसहत्वासहत्वयुक्तिमुपयुञ्जाना अपि दर्पणकाराद्याः केचिदस्योभयस्वरूपस्य शब्दप्राधान्यमितिसूत्ररीत्या संश्रयत्वेऽप्याश्रयेवास्यालङ्कारस्य विमर्शनेन सर्वस्वकर्ता क्रमभक्तिमुपजीवन्ति। अर्थालङ्कारप्राधान्यमिति—नानार्थशब्दोत्थितत्वेनास्यार्थालङ्कार-प्राधान्यपरिकल्पना प्राचीनमतवादं प्रति श्रद्धानुहितः प्रभुरित्यापाततः प्रतिभाति। इति—*

## अष्टमः किरणः ।

अथार्थालङ्कारा उच्यन्ते—

**यथाकथञ्चित् साधर्म्यमुपमा (१) (क)—२१६ का**

उपमानोपमेययोर्यथाकथञ्चिद्येन केनापि समानेन धर्मेण सम्बन्ध उपमा । स च यांशेन, (क) न तु सर्वांशैः—सर्वांशत्वेनाभेदादुपमानोपमेयभाव एव न भवतीति ।

**—सा भवेद्द्विधा ।**

**पूर्णा लुप्तेति—२१७ का**

सा उपमा । **—पूर्णा तु धर्मेणैव-यथाऽऽदिभिः ॥**

**उपमानोपमेयाभ्याम्—२१८ का**

यथाकथञ्चिदिति सूत्रस्यार्थमाह—उपमानोपमेययोरित्यादिना। उपमानोपमेययोः सादृश्यसम्बन्ध उपमाऽलङ्कारः। सादृश्यसम्बन्धमेवाह—यथा कथञ्चिदिति। एक द्व्यादि-धर्मेण, न तु सर्वेण धर्मेणेत्यर्थः। 'येन केनापी'ति साधारणेन धर्मेणेत्यर्थः। 'समानेने'ति उपमानोपमेयवृत्तिनेत्यर्थः। 'धर्मेणे'ति 'धान्येन धनवान्' इतिवदभेदे तृतीया। तथाचोपमानोपमेयवृत्त्येक द्व्यादिसाधारणधर्माभिन्नः सम्बन्धः सादृश्यसम्बन्धः। न तु सर्वांशैरिति—नतूपमानवृत्तियावन्तो धर्मास्तैरित्यर्थः। अभेदादिति—स्वनिष्ठयावद्धर्मैक्य स्वघटत्वं स्वमेव, अतोऽभेदेन उपमानोपमेयभाव एव न सम्भवतीत्यर्थः।

---

(क) यथाकथञ्चिदिति—इत्थंकृतोपमालक्षणव्याख्यायेवानियामकतैव प्रतीयमानेयं लक्षण-घटना इतिगन्त्याद्याकाङ्क्षातिरिक्तैव प्रतिपाद्यते। नात्र तत्र गृहीतायाः प्रतीयमानसादृश्याया उपमाया अन्तर्भावो कथञ्चिदिभावः। स चांशेनेति—'भूयोऽवयवसामान्ययोगो जात्य-न्तरस्य यदि'ति केचिल्लक्षितस्य सादृश्यलक्षणस्यानुबन्धः स्फुट एव। एतदभिप्रेत्यैव प्रकाश-सर्वस्व कौस्तुभ रुद्रादीनां लक्षणेषु साम्य-सामान्य-सादृश्यादिपदव्युदासेन साधर्म्यपदस्य निवेशः। रुच्यकेचिकया मतद्वयसमाधानमित्य' केचिच्चेष्टितम् यथा, 'यत्र किञ्चित् सामान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः' इत्युक्ते सर्वस्वग्रन्थोक्ते। उपमाया विच्छित्तिमात्रा-ऽतिरेकोऽनेकालङ्कारजीवातुभूतत्वचानादिकालतः कलितमित्यस्यानन्यसाधारणतैवात्राभिम-निर्देशबीजम्। अत्र साधारणधर्मस्याभाधारणस्यापि सामान्यं क्वचिदेकरूप्येण प्रत्येक्य-मयत्वेन वा,क्वचिद्वा तस्य पृथक्तया निर्देशो वस्तुप्रतिवस्तुभावेन,यथा लक्ष्ये यान्त्या मुहुर्वलित-कन्धरमाननन्तदावृत्तवृन्तशतपत्रनिभं वहन्त्या' इत्यादि मालतीमाधवपद्ये, 'पाण्डोऽयमंसा-

धर्मः सामान्यधर्म आह्लादकत्वादिः । इव-यथा-वाऽदय औपम्यवाचकाः । उपमानं चन्द्रादि । उपमेयं मुखादि । एतैर्युक्ता पूर्णेत्यर्थः ।

—इयमेवेव-वाऽऽदिभिः ।

युक्ता श्रौती— २१९ का

इयमेव पूर्णा इव-यथा-वाऽऽदिभिर्युक्ता चेद्भवति तदा श्रौती । 'तत्र तस्येवे'त्यनेन (पा ५।१।११६) विहितो वतिश्च श्रौत्यामेव ।

समाद्यैस्तु सा स्यादार्थी च—२२० का—

सा पूर्णा समाद्यैर्युक्ता यदि भवति तदाऽऽर्थी । समादयस्तु सम-समान-सदृश-सदृक्ष-सदृक् तुल्य-सन्निभ-निभ-चोर-बन्धु—प्रभृतयः (क) । 'तेन तुल्यं क्रिया चेद्वति'रित्यनेन (पा ५।१।११५) विहितेन वतिना चार्थी । तत्र तेन तुल्यमिति तच्छब्द उपमानपरः । तुल्यशब्द उपमेयपरः । तस्य तुल्यमित्यत्र विपर्ययः । उभयं तुल्यमित्युभयनिष्ठः ।

—तद्धिते ।

वाक्ये समासे चेत्येते पोढ़ा—२२१ का

एते श्रौत्यार्थी च । तद्धितादित्रिके षड्विधा भवति । तद्धितन्तु वत्यादि—तद्यथा वति-कल्प-देश्य-देशीय-बहुच्-प्रभृतयः । वाक्यं प्रसिद्धं, समासश्च । तद्धितगा श्रौती, वाक्यगा श्रौती, समासगा श्रौती, तद्धितगा आर्थी, वाक्यगा आर्थी, समासगा आर्थी, इति पूर्णा षड्विध ।

—लुप्ता तु लोपतः ।

धर्मवाद्युपमानानामेकद्वित्रिक्रमेण हि ॥ २२२ का

धर्मादीनामेकस्य द्वयोस्त्रयाणां वा लोपतो लुप्ता भवतीत्यर्थः ।

पूर्णा त्विति—यत्र वाक्ये एते सर्वे शब्दा वर्त्तन्ते, तत्र पूर्णोपमाऽलङ्कारो ज्ञेय इति समुदायार्थः । विपर्ययश्च इति—तस्योपमेयस्य तुल्यमुपमानमित्यर्थः । उभयं तुल्यमित्यत्र

दितमन्त्रद्वार' इत्यादि रघुपद्ये च । परं न स भेदः साधर्म्यप्रतिपादकः । एतमेवाभिप्रायं केचिदाचार्य्यदण्डिप्रभृतयो 'उक्तं'मिति पदेनैव गतार्थं मन्यन्ते । परमाचार्य्यपादैर्वाक्यार्थेऽस्य तत्र तत्र साहाय्ये भिन्नार्थघटनेऽप्युपमाऽऽदिनि स्फोटना, न तन्त्रौपाधिकालङ्कारिकपक्षसम्मत-

**धर्मलोपे क्रमेणैषा पूर्णावत् षड्विधोदिता ।**

**किन्तु तद्धितगा श्रौती लुप्तायां नेति पञ्चधा ॥२२३ का—**

एषा लुप्ता तद्धितगाऽऽदिभेदेन पूर्णावत् षड्विधा भवितुमुचिता । श्रौती लुप्ता त्रिविधा, आर्थी लुप्ता त्रिविधेति । किन्तु धर्मलोपतद्धितगा श्रौती लुप्ता न भवतीति पञ्चैव—वाक्यगा श्रौती लुप्ता, समासगा श्रौती लुप्ता, तद्धितगा आर्थी लुप्ता, वाक्यगा आर्थी लुप्ता, समासगा आर्थी लुप्तेति ।

**क्यचि कर्माधारकृते कर्त्तृकर्मकृते णमि ।**

**क्यङि चेति पुनः पञ्चेवादिलोपे यथाक्रमम् ॥ २२४ का—**

कर्मकृते क्यचि, आधारकृते क्यचि, कर्त्तृकृते णमि णमुलि, कर्मकृते वा णमुलि, क्यङि चेति सा लुप्ता पुनः पञ्चेति दश ।

**उपमानानुपादाने द्वैधं वाक्यसमासयोः ॥ २२५ का**

तत्र लुप्तायामुपमानानुपादाने सति वाक्यसमासयोर्निमित्तयोर्द्वैधं भवति ।

**इवादेरनुपादाने द्वैधं स्यात् क्विप्समासयोः ॥ २२६ का**

पुनस्तस्या इवादिलोपे क्विपि समासे च द्वैधम् ।

**धर्मोपमानयोर्लोपे द्वैधं वाक्यसमासयोः ॥ २२७ का**

पुनस्तस्या द्वैधमित्यर्थः ।

**धर्मेवादिलोपे तु द्वैधं स्यात् क्विप्समासयोः ॥ २२८ का**

पुनर्द्वैधमित्यर्थः ।

उपमानोपमेयोभयनिष्ठधर्मः प्रतीयते । किन्त्विति—यत्र तस्योपमेयस्य तुल्यमित्यर्थे 'वति'प्रत्ययस्तत्रैव श्रौती लुप्ता । अत्र यदि धर्मलोपस्तदा वाक्यार्थ एव न भवति, तद्यथा वक्ष्यमाणोदाहरणे 'त्वदाननस्ये'त्यादौ माधुर्य्यादिधर्मलोपे वाक्यार्थसङ्गतिर्न स्यात्, तस्मात्तद्धितगा श्रौती लुप्ता नास्तीत्यमी द्विधैव श्रौती लुप्ता ।

---

मिति विशेषः । उपमाद्योतकानामिव वदादीनां सुष्ठु संग्रहः काव्यादर्शतो ग्रहणीयः । अस्य भेदपरिगणने प्राचीनैर्भामहदण्ड्यादिभिः, नातिप्राचीनैरुद्भट-रुद्रटादिभिरर्वाचीनैर्भोज-मम्मट-विश्वनाथादिभिश्च यथारुचि भिन्न एव मार्गोऽश्रावलम्बि । तत्र नवीनमतपक्षपातिना

उपमेयस्य लोपे तु स्यादेका प्रत्यये क्यचि ॥ २२९ का

पुनरेका ।

धर्मोपमेयलोपेऽन्या विलोपे तु समासगा ।

एवं दशैकादश च लुप्ता स्यादेकविंशतिः ॥

पूर्णा षडेव तेन स्युरुपमाः सप्तविंशतिः ॥ २३० का—

तत्र पूर्णादिक्रमेणोदाहरणानि । तद्धितगा श्रौती पूर्णा यथा—

तदाननस्य माधुर्यं लोचनानन्दि चन्द्रवत् ।
अक्ष्णोश्च तव लालित्यं राधे ! नीलसरोजवत् ॥ १ ।

अत्र'तत्र तस्येव'त्येनेन वतिः श्रौत्यर्थप्रतिपादकः ।

वाक्यगा श्रौती पूर्णा यथा—

श्यामे वचसि कृष्णस्य गौरी राजति राधिका ।
कनकस्य यथा रेखा विमले निकषोपले ॥ २ ।

अत्र श्यामगौरत्वं धर्मः, यथाशब्दः उपमावाचो, उपमानं कनकरेखाऽऽदि, उपमेयं राधाऽऽदि । अत्र व्यङ्ग्यमपि धर्मान्तरमुपमागतम् (क), तथथा कनकरेखानिकषोपलयोर्मिथ्यन्दत्वेन राधाकृष्णयोरानन्दनिष्यन्दत्वम् ।

समासगा श्रौती पूर्णा यथा—

राधाकृष्णौ मम नवतड़िद्श्यामसेघाविवाक्ष्णोः
स्तातान्तापप्रशमनकृतौ पीतनीलप्रकाशौ ।
यावन्योन्यावयवरुचिभिः काञ्चनैरिन्द्रनीलै-
राक्रान्तेन प्रकटमहसा निष्कराजेन तुल्यौ ३ ।

'कनकरेखादौ'त्यादिपदेन निकषोपलस्य । "राधे"त्यादिपदेन कृष्णस्य च । राधाकृष्णौ परस्पराङ्गरुचिभिः स्वर्णेन्द्रनीलमणिमिश्याक्रान्तेन निष्कराजेन पदकश्रेष्ठेन तुल्यौ।

---

कौस्तुभकृता दर्पणानुमोदिताः सप्तविंशतिरेव भेदाः समितद्धाः, मम्मटोक्तास्तु पञ्चविंशतिः । एतच भेदपरिकल्पनामुपलक्षणमन्तरायं दाक्षकारमिव च केचिदाधुनिका मन्यन्ते—वस्तुत आमाम्यतो भित्तं पञ्च इति ध्वनिकिरणव्याख्याने अस्माभिरुपपादितम्, परं भेदसद्भावघृत मपि न सुगमो भेदमार्गो युक्तिमुक्तिप्रनिरुः, यथाऽधोदर्शितेऽनवीनस्य कस्यचिदुपमाभेदप्रपञ्चे—'समानमधिकं हीनं विपरीतमेकदेशिकम् । यादृच्छिकमभूतश्च धर्मोपम्यार्थसंग्रहः।'

अत्र पूर्वार्द्धे 'इवेन नित्यसमासो विभक्त्यलोपः, पूर्वपदप्रकृतिस्वरत्वञ्चे'ति इवेन समासः। आर्थी तद्धितगा पूर्णा यथा—

कोमलं ते वपुस्तन्वि ! राधे ! भाति शिरीषवत् ।
परुषं वर्त्तते कस्मान्मनो दम्भोलिवत्तव ॥ ४ ।

अत्र 'तेन तुल्यं क्रिया चेद्व'त्यनेन वतिः; तेन तुल्यार्थत्वादार्थी । वाक्यगाऽर्थी पूर्णा यथा, "राधाकृष्णौ मम्रे"त्यादेरुत्तरार्द्धे (३य श्लोके) 'यावन्योन्याववयवविभिः (1) काञ्चनेन्द्रनीलरत्नैराकृतेन प्रकटमहसा निष्करराजेन तुल्यौ ।' समासगाऽर्थी पूर्णा यथा—

मृदुलमपि शिरीषतुल्यमङ्गं कमलसमं विकसन्मुखन्तवेदम् ।
रमयति च वचः सुधासमानं कथमशनिप्रतिमं मनो दुनोति ॥ ५

इति पूर्णायाः षड् भेदाः । अथ धर्म्मलोपे वाक्यगा श्रौती लुप्ता यथा—

राधे ! सुन्दरताऽङ्गेषु वाग्भङ्गी वदने तव ।
मनसि प्रेमवैदग्धी सत्यं वच्मि सुधा यथा ॥ ६

समासगा श्रौती लुप्ता यथा—

भ्रुवौ तव धनुर्लते इव, तदग्रतो लोचने
लसन्मदिरदम्पती इव, पुरस्तयोर्नासिका ।
स्मरेषुधिरिव स्फुरत्पुरटनिर्मिताऽधोमुखी,
तदीयशिखरे न्यधात् भमिव कः कृती मौक्तिकम् ॥ ७

हे राधे ! तवाङ्गमिदं मुखञ्च सुधासमानं वचश्च मां रमयति सुखयतीत्यर्थः । सुधा यथा—सुधेव स्वादो, अत्र स्वादुत्वबोधकपदाभावादेव धर्म्मलोपो ज्ञेयः, तथापि धर्मवाचकपदाध्याहारादेव शाब्दबोधो ज्ञेयः । एवमुपमानादिलोपेऽपि बोध्यम् ।

भ्रुवाविति—धनुर्लते इव वक्रे, मदिरदम्पती खञ्जनस्त्रीपुरुषाविव चञ्चले । कन्दर्पस्य स्वर्णनिर्मिताऽधोमुखी इषुधिस्तूण इव नासिका मनोहरा । तस्या नासिकाया अग्रभागे

इति ; अतोऽत्रोत्तरेऽपि कश्चिद्वैयाकरणालङ्कारिकपदार्थमधुरमन्यं भेदन्त्वं मत्सिद्धार्थमित्यलं पल्लवितेन । अङ्गमपीत्यादि—नालाब्धारस्य अङ्गासुखेन संस्थितिरिति, स चालङ्कारस्य एवेत्याधुनिकानां वाग्मोग्युक्तिर्युक्तिमङ्गता, परं अङ्गासुखेनागतस्यैव दिष्टा तातुपर्य्यालोचनायां शोभर-

(1) "काञ्चनेन्द्रनीलरत्ने"रिति (क) पुस्तके पाठः । 'नीलरत्नै'रित्युत्तरत्र मूले पाठः ।

तद्धितगाऽर्थी लुप्ता यथा—

शिरीषकल्पान्यङ्गानि राधे ! सृष्टा विधिस्तव ।
दम्भोलिदेश्यं धीराक्षि ! चेतो निर्राममीत किम् ॥ ८

वाक्यगाऽर्थी लुप्ता यथा—

सवाक्यं सममञ्जेन मधुना सदृशं सितम् ।
राधिके सुधया तुल्या वाचि शब्दार्थमाधुरी ॥ ९

समासगाऽर्थी लुप्ता यथा—

कनककम्भुसमौ बत ते कुचौ मम करावपि नीरजसन्निभौ ।
त्वमपि चन्द्रकशेखरसेविनी यदुचितं तदिहादिश राधिके ! ॥ १०

यथेवादिलोपे कर्मक्यचि यथा—

वाणीयति कटाक्षं ते कार्मुकीयति यो भ्रुवम् ।
हया वामः पुष्पबाणकार्मुको भुवि विश्रुतः ॥ ११

आधारक्यचि यथा—

वनीयति गृहे राधा गृहीयति वनान्तरे ।
यावदालोकितः कोऽपि त्वया नवघनद्युतिः ॥ १२

क्वङि यथा—

हरीयते सा स च राधिकायते निरन्तरं भावनयोभयोरुभौ ।
विपर्ययेणापि विपर्ययोत्थितां वियोगबाधां सदृशीमुपेयतुः (क) ॥ १३

कर्मणमुलि यथा—राधे ! सुधाधामदर्शं पश्यन्मुखमिदं तव ।

कर्तृणमुलि यथा—कृष्णचकोरमन्नावं सञ्चरत्येष लालसः ॥ १४ एवं दश ।

अनिशं निरन्तरमित्र। उभयो राधाकृष्णयोर्मध्ये सा राधा श्रीकृष्णस्य भावनया हरीयति अहमेव हरिरित्यात्मानं हरिमिवाचरति, तथा श्रीकृष्णोऽप्यहमेव राधिकेत्यात्मानं राधिकामिवाचरति। विपर्ययेण राधायाः श्रीकृष्णरूपत्वस्य श्रीकृष्णस्य राधिकारूपत्वस्य च विपर्ययेण। विपर्ययोत्थितामिति—श्रीराधिकायाः स्वस्याः श्रीकृष्णत्वभावनया श्रीकृष्णविरहपीडाद्यभावेऽपि श्रीकृष्णस्य यथा राधिकाविरहपीडा जायते तत्सदृशी राधिकाविरहपीडा राधिकाया भवतु, एवं श्रीकृष्णस्य स्वस्य राधिकात्वभावनया राधिकाविरहपीडाद्य-

---

भावरूपाभावः कृतरादेव प्रकृदयात्क्लेशः। हरीयते इति,—"मधुरिपुरहमिति भावनशीले"-ति जयदेवपदानुसारार्थम्। तथा यथो कर्माणि—एवंविधार्थोपन्यासयोगा अनमाप्या-

उपमानानुपादाने द्विधा यथा—

त्वदाननस्य सदृशं किमपीह न दृश्यते। इति वाक्यगा।

नहि त्वत्सदृशी क्वापि राधे! काऽपि विलोक्यते ॥ १५ इति समासगा।

इवाद्यनुपादाने द्वैधं यथा—

अशनयति कुसुममशनिः कुसुमति हालाहलत्यमृतम्।
हालाहलमप्यमृतति समयेऽस्या दुःखसुखदत्वे ॥ १६ इयं क्विप्गा

नवधाराधरश्याममभिराममिदं महः।
श्यामयवयनानन्दं कस्य नो हरते मनः ॥ १७ इयं समासगा।

धर्मोपमानयोर्लोपे द्वैधं यथा—

तम्मसि किं ति पिबन्तो कट्ठरसं सुरलिवाअणे कण्ह।
जस्स समो णत्थि रसो सो इह णअरे घरे घरे होइ ॥ (क) १८

इयं वाक्यगा। इहैव "अच्छरिसो णत्थि रसो"इति पाठे समासगा। धर्मवादिलोपे द्वैधं यथा "अशनयति कुसुम"मित्यादौ (१६ श्लोके) 'कृष्ण कदाचिदपि तासां' मिति चतुर्थचरणे यदि स्यात्तदेवादिलोपे धर्मलोपे च क्विप्गा।

राधे! शारदपीयूषमयूखमुखि! मौनताम्।
मुञ्च, पीयूषवचनैः सिञ्च मे कर्णयोर्युगम् ॥ १९

भावेऽपि श्रीराधिकाया यथा श्रीकृष्णविरहपीड़ा जायते ततुसदृशी श्रीकृष्णविरहपीड़ा श्रीकृष्णस्य भवत्येवेत्यर्थः।

अस्या राधिकायाः समये श्रीकृष्णविच्छेदसमये दुःखमयवस्तुनः सुखदत्वे सति कुसुममशनिरिव भवति पुष्पस्योद्दीपनत्वेन वज्रतुल्यतापकत्वात्। तथाऽशनिः कुसुममिव भवति, चन्द्रस्य सद्यःप्राणहारकत्वेन विरहज्वालामिवर्धकत्वात्। अमृतस्य मरणमिवर्धकत्वेनाऽमृतमपि हालाहलतुल्यं भवति—तथा हालाहलस्य सद्यःप्राणहारकत्वेन हालाहलमप्यमृततुल्यं भवति—जीवनापेक्षया मरणं तस्याः सुखदं भवतीति ज्ञेयम्। तम्मसि किमिति पिबन् काष्ठरसं मुरलीवादने कृष्ण।। यस्य समो नास्ति रसः स इह नगरे गृहे गृहे

---

लङ्कारान्तरलक्षणानीति केचित्—'सर्वदैवोपमानिषेधोऽसमाख्योऽलङ्कारः' इति तेषां लक्षणम्। परन्तु तस्य भिन्नतया स्वीकारेयुक्तिर्विम्बसितैव रसगङ्गाधरप्रभृतिनिबन्धेषु। रसनोपमायाः पृथक्त्वेन स्वीकारकल्पो न सर्ववादिसम्मतः तथा च प्रकाशकारसता हेतुमन्त्रितः—'एवंविधवैचित्र्यसद्भावसम्भवात्, उक्तभेदानतिक्रमाच्चे'ति। अनन्वयोपमा—इति मतमस्या

बद्धो राधिकयाऽपाङ्गलतया कृष्णकुञ्जरः ।

तत्केलिसाधनीभूतो न गन्तुं क्वचिदर्हति ॥ २०

अत्र धर्मवादिलोपे समासगा ।

उपमेयलोपे क्वचि लेका, यथा—

कोमलाऽपि प्रकृत्यैव शिरीषादपि राधिके ! ।

अहो मानस्य माहात्म्यं येन त्वमयनीयसि ॥ २१

अत्र "आत्मानमयनीयसी"ति वक्तव्ये आत्मशब्दस्योपमेयस्य लोपः ।

धर्मोपमेयलोपे यथा—

जयति मनोभवसिद्धि क्वाऽपि शरच्चन्द्रमःसमं दधती । (2)

इत्यत्र उपमेयलोपो धर्मलोपश्च, "शरच्चन्द्रललिताक्षे"ति यतो न स्नातम् ।

त्रिलोपे समासगा । पूर्वश्लोकोत्तरार्द्धम्—

चकितमृगशावनयना नयनानन्दं चकारोच्चैः ॥ २० ॥

अत्र मृगशावस्य नयने इवायते नयने यस्या इति समासे उपमानं, तद्द्योतकमिवादि च, तद्धर्मश्च, त्रयाणां लुप्तता—इत्येकविंशतिः । पूर्णाभिः सह सप्तविंशतिः ।

एकत्वमुपमेयानामुपमानामनेकता ।

धर्मैकरूप्यवैरूप्ये द्वेधा मालोपमा भवेत् ॥२३१ का—

भवति । अत्र 'यस्य सम' इत्युपमानलोपो धर्मलोपश्च । मनोभवस्य कन्दर्पस्य विद्धिरूपा काऽपि ललसुन्दरी जयति । 'शरच्चन्द्रमसं दधती' अत्र सुखपदस्य लालित्यरूपधर्मबोधकपदस्य च लोपो ज्ञेयः । 'शरच्चन्द्रललिताक्षे'त्युक्ते उभयोरेव विद्यमानत्वान्न धर्मोपमेययोर्लोपः ।

यत्रोपमेयानामेकत्वमुपमानानामनेकत्वं तत्र मालोपमा भवेत् । सा द्विविधा, यत्रोपमेयोपमानयोरेक एव धर्मस्त्वेका, यत्रोपमेयस्यैको धर्म उपमानानामनेको धर्मस्तत्रान्या ।

---

अनन्वय इति भामहादीनां प्राचां नवीनानाञ्च बहूनामाहृता संज्ञा, उभयत्रैव सार्थकत्वा निर्देशः । आचार्यदण्डिमते इयमसाधारणोपमायाः एव, यदाहुक्त एव—'अनन्वयससन्देहावुप

(2) अत्र (क) पुस्तके । 'चन्द्रमसं दधती' ति (ग) (ङ) पुस्तकयाष्टीकाकृता च इति पाठः । स च छन्दो नियमभङ्गात् "चन्द्रमः समंदधती" मित्युपात्तमस्माभिः । उपरिगृहीते पाठे उपमेयलोपस्याभावश्च, 'सम'पदेन विशेषणीभूतेन विषयस्य धर्मस्याभाव उक्तत्वेन । अस्मत्पाठस्तु न क्वापि प्राचीन दृष्टः ।

उपमाप्रपञ्चोऽयम् (क)। उदाहरणम्—

मूलस्थितेनेव महोरगेण लता दवेनेव कुरङ्गबाला ।
हिमागमेनेव सरोजिनी सा मद्वियोगेन दुनोति राधा ॥२३

अत्र धर्मैकरूप्यम् ।

त्रैलोक्यसम्पदिव निर्भरगर्वहेतुर्माध्वीकपीतिरिव विह्वलताविधात्री ।
प्रस्तापनास्त्रफलिकेव मनोभवस्य त्वं ज्ञानविप्लवकरी मम भासि राधे ! ॥ २४

अत्र वैरूप्यं नानाविधत्वात् ।

**उपमेयस्योपमात्वमुत्तरोत्तरतो यदि ।**
**अभिन्नभिन्नहेतुत्वे द्विधा सा रसनोपमा (३)(क)॥२३२का—**

यथा—आकृतिरिव ते प्रकृतिः प्रकृतिरिव व्यवहृतिः सुमुखि ! ।
व्यवहृतिरिव सत्कीर्त्ती रम्या रमणीसभासु सखि ! राधे ! ॥ २५

अभिन्नधर्मा ।

वपुरिव मधुरं रूपं रूपमिवानन्ददायि गुणवृन्दम् ।
गुणवृन्दमिव विशुद्धं यशः कृशाङ्गीसभासु तव राधे ! ॥ २६ भिन्नधर्मा ।

**एकस्यैवोपमानोपमेयत्वेऽनन्वयोपमा (४) ।**
**एकवाक्ये (क)—                    २३३ का—**

उपमानान्तरासम्बन्धोऽनन्वयः । यथा—

आलोकि सा बालकुरङ्गनेत्रा राधेव राधा भुवनेऽद्वितीया ।
अद्यापि मे सन्ति मनोनिखातास्ते तत्कटाक्षा इव तत्कटाक्षाः ॥ २७

**विपर्य्यास उपमेयोपमा (५) द्वयोः ॥ २३४ का**

द्वयोरुपमानोपमेययोर्विपर्य्यासे उपमेयोपमा । यथा—

त्रैलोक्यसम्पद्यथा निर्भराहङ्कारहेतुः, एवं माध्वीकस्य पीतिः पानं यथा विह्वलताकर्त्री, तथा कन्दर्पस्य जृम्भणास्त्रस्य फलिका यथा विह्वलताकर्त्री, तथा त्वमपि मम ज्ञानस्य पूर्वापरानुसन्धानस्य विप्लवकरी नाशकरी ।

उपमेयस्योपमानत्वमुत्तरत्र यदि भवति तदा रसनोपमाऽलङ्कारो ज्ञेयः । सा द्विविधा—उपमानोपमेययोरभिन्न एको धर्मश्चेदुपमाऽलङ्कारस्य हेतुस्तदैका, एवमुपमेयोपमानां भिन्ना

---

मास्वेव दर्शिता'विति । एषा सर्वेषां प्रसिद्धस्तूपमायाश्चोपमाप्रपञ्चत्वेनाभिधानं वक्रोक्तिजीवितादौ दण्डिमतस्यानुगतत्वेन,परं भामहादीनां मतेनोपमानान्तरसम्बन्धाभावादुपमातो

तनुरिव शोभा शोभेव तनुर्गरिमेव मधुरिमा तस्याः।
अथ मधुरिमेव गरिमा राधायाः किमपरं ब्रूमः॥ २८

यथा वा—हरिरिव राधा राधेव हरिर्गरिमेव मधुरिमा च तयोः।
अथ मधुरिमेव गरिमा महिमेव कृपा कृपेव महिमा च॥ २९

इयमेवान्योन्योपमा।

**उपमानस्य निन्दायामयोग्यत्वे निषेधतः।**
**प्रशंसा योपमेयस्य सोपमेयोपमाऽपरा (क)॥ २२५ का—**

यत्रेति शेषः। यथा—

कल्पद्रुमे स्थावरता दृढत्वं चिन्तामणौ कामगवीषु गोत्वम्।
स्वभक्तसङ्कल्पविधेर्विधाने हे नाथ! कृष्ण! त्वमिव त्वमेव॥ ३०

अत्रोपमानस्य निन्दा।

इन्दीवरं वा दलिताञ्जनं वा नवाम्बुदो वा मरकतमणिर्वा।
कृष्णस्य धाम्नः सदृशं न किञ्चित्तदीयधामेव तदीयधाम॥ ३१

अत्रायोग्यत्वे निषेधः।

एवमन्येऽपि बहवः सन्ति, ग्रन्थगौरवभयान्नोदाह्रियन्ते।

**असम्भाव्यं समुद्भाव्योपमानेऽसम्भवोपमा (६) (क)॥२२६ का—**

या क्रियत इति शेषः। यथा—

पूर्णः सदैवास्तु सुधामयूखः कलङ्कहीनश्च सदैव भूयात्।
नायं चकोरैरपि पीयतां च राधे! त्वदास्येन तुलां बिभर्तु॥ ३२

नानाधर्मांश्चेद्धेतत्वतदाऽन्या। उपमानस्य निन्दायां सत्यां यत्रोपमेयस्य प्रशंसा, एवमुपमानस्यायोग्यत्वे सति तस्य निषेधादुपमेयस्य प्रशंसा साऽपरा उपमेयोपमा। असम्भाव्यमिति—उपमानेऽसम्भाव्यं यद्वस्तु सम्भावना नास्ति तस्य सम्भावनां कृत्वा योपमा क्रियते साऽसम्भवोपमा।

---

भिन्नैवेयम्, अतः किल नामकरणेन व्यामोहनिवारणायोपमेयोपमेत्यभिधानं परित्यक्तमितीव प्रतिभाति। उपमेयोपमाऽपरेति—नाम्ना व्यापन्नतः प्राचां ग्रन्थेषु मद्वयम्, उभयत्रैवोपमानस्याक्षेपः चन्द्रिकाकारमतानुमतोपालङ्कारा अस्याङ्गुरेव भेदस्पर्शः। ग्रन्थकृतामुदाहृत इदमनन्वयमर्मस्पृष्टेव भातित्रयमनुकृतिमतीति प्रतिभाति। असम्भवोपमा—'उभौ यदि व्योम्नि पृथक्प्रवाहौ' इत्यादिदिङ्निर्देशैः वैचित्र्यावहत्वे भिन्नालङ्कारत्वमिति केचित्—उत्प्रेक्षायाः प्रस्तावे तु हेतुत्वेनालङ्कारत्वेन कौस्तुभकृता विहित इति च मन्तव्यम्।

**सम्भावनोपमानेनोपमेयोत्कर्षहेतुका।**

**उत्प्रेक्षा (७) नूनमित्यादिशब्दद्योत्या—(ख)॥२३७ का—**

उत्प्रेक्षानामाऽलङ्कारः। सम्भावना हेत्वन्तरोपन्यासेन वितर्कनम्। नूनं-मन्ये-शङ्के-इव-ध्रुवं-नु-किम्-किमुतेत्यादयो नूनमादयः। यथा

नष्टो नष्टः प्रतिकुहु मुहुः पूर्णतामेति चन्द्रो
राकां राकां प्रति ननु भवेदन्यरूपः कदापि।
नान्यो हेतुस्तदिह ललिते! वीक्ष्य वीक्ष्य त्वदास्यं
नूनं धाता समतिचतुरो निर्मिमीतेऽनुमासम्॥ ३३

यथा वा 'उत्कोर्णैरिवे'त्यादि ( द्वितीय किरणे १म श्लोकः )। यथा वा—

कृष्णाऽनुबन्धविकसद्वदनोदराणां चन्द्रः करेण कृपयेव कुमुद्वतीनाम्।
निर्माय गाढविरहानलमुज्ज्वलन्तमङ्गारपुञ्जमिव कर्षति भृङ्गसङ्घम् (ख)॥ ३४

यथा वा—श्रीवत्सस्य च कौस्तुभस्य च रमादेव्याश्च मध्याकरो
राधापादसरोजयावकरसो वक्षःस्थलस्थो हरेः।

प्रतिकुहु सर्वस्याममावस्यायां चन्द्रो नष्टोऽभवत् नश्यत्येव। एवं सर्वस्यामेव पूर्णिमायां चन्द्रः पूर्णतां प्राप्नोति। कदापि कस्यामप्यमावस्यायां पूर्णिमायां वा चन्द्रोऽन्यरूपो न भवति। अत्र सर्वस्याममावस्यायां नाशे सर्वस्यामेव पूर्णिमायां पूर्णतायाश्च पुराणादौ योऽन्यो हेतुः श्रूयते स न, किन्तु मयेदं सम्भाव्यते, हे ललिते। त्वन्मुखं वीक्ष्य वीक्ष्य विधाताऽनुमासं मासि मासि तं चन्द्रं निर्मिमीते। अयम्भावः—सर्वजगन्निर्माणं कृत्वा ललितामुखं दृष्ट्वा तत्सदृशे किञ्चिद्वस्तुनिर्माणे विधातुरिच्छा यदाऽजनि तदा प्रतिपद्दिनमारभ्य पूर्णिमायां सम्पूर्णचन्द्रं निर्माय ललितामुखसादृश्यमदृष्ट्वा दुःखेन पुनः प्रतिपद्दिनमारभ्य किञ्चित् किञ्चिद्विखण्ड्यामावस्यायां पूर्वनिर्मितं पूर्णचन्द्रं दूरीकृत्य पुनश्चन्द्रान्तरनिर्माणे प्रवृत्तश्चतुरो विधाताऽद्यापि मासि मास्येवमेवं करोति, न तु निवृत्तो भवति।

---

(ख) सादृश्यमूलानामलङ्काराणां विवेचनप्रसङ्गे उत्प्रेक्षाया अवतारार्थं ग्रन्थकृतां मम्मटाद्याचार्यमतं प्रति यदाग्रहं सूचयति। अर्वाचीनाः प्रायेण निर्विशेषमुत्प्रेक्षायां व्यञ्जितसादृश्यमूलकस्याध्यवसायविशेषस्य कल्पितसम्भावनमेव लिङ्गं मन्यन्ते; परं प्राचीनाचार्या भामहादयः नवीनाश्च केचनाद्यं कल्पमेवोपजीवन्ति—तदनुसारिणो बहव-श्चन्द्रालोककाराद्याश्चक्रवर्तिप्रभृतयः कुवलयानन्दकृतोऽर्वाचीनाश्च। एषां मते उपमानस्यालौकिकत्वमेवोपमातः उत्प्रेक्षायाः कक्षान्तरत्वघटकं, न तदतिरिक्तः कश्चन विलक्षणो

बालार्कद्युतिमण्डलीव तिमिरैश्चन्द्रेन बन्दीकृता

कालिन्द्याः पयसीव पीतविकचं रक्तोत्पलं पातु वः ॥ २५

अत्र 'इव' उत्प्रेक्षायाम्—इत्यादौ सर्वत्र सम्भावनमेव ।

—स संशयः ।

भेदानुक्तौ तदुक्तौ तु सन्देहः (८) (ग)—२३८ का

सन्देहालङ्कारः । क्रमेणोदाहरणे—

राधे ! मुखं तव विधुर्नु सरोरुहं नु नेत्रे च खञ्जनयुगं नु चकोरकौ नु ।

मूर्त्तिश्च काञ्चनलतैव नु चन्द्रिका नु धाता नु पञ्चविशिखो नु रसो नु वाऽयम्॥

(ग) ॥ २६

मेघः किमेष, स कथं धरणौ, किमस्मिं-

चन्द्रोऽयम्,अस्य विगतः क्व नु वा कलङ्कः ।

माला किमत्र तडितः, स्थिरता क्व तस्याः,

कृष्णः किमेष सुमुखः सखि ! पीतवासाः ॥ २७

मुद्रितकलिकानां चन्द्रदर्शनेन मुद्रितत्वात्र एव जृम्भारम्भत्वेन प्रकाशितवदनोदराणां कुमुदिनीनां गाढ़निरुद्धानलम्पसमुच्छलत्समङ्कारसमूहं चन्द्रः सपदेव सञ्चितमकरन्दपकरेण निरोध्य पश्चात् कुमुदगर्भोज्झितं ज्वालारहितमनल एव श्याममेवमङ्गारपुञ्जमिव भृङ्गसमूहं कर्षतीत्युत्प्रेक्षा । अत्र कुमुदनीभ्रमरयोर्यत्सङ्कारो यथा—रात्रौ विकशितानां कुमुदिनीनां मध्ये मकरन्दपानार्थं ये भ्रमराः प्रविष्टा आसन् प्रातःकाले सूर्यदर्शनात्मुद्रितानां मध्ये त एव सद्धा बभ्रुः, पुनः सन्ध्याकाले चन्द्रदर्शनाद्विकशितानां तासां मध्ये ये भ्रमरा निर्गताः, त एवाङ्गारपुञ्जत्वेनोत्प्रेक्षिता इति भावः ।

श्रीकृष्णवक्षःस्थलस्थः श्रीराधापादपद्मरोमधारकरणो युष्मान् पातु । कदम्भूतः ? श्रीवत्स-कौस्तुभभूषणोऽस्तमानिरस्कारं करोति, धावकशोभाया अग्रे कौस्तुभादयस्तिरस्कृता भवन्तीत्यर्थः । तत्रोत्प्रेक्षामाह—प्रथमः श्याममात्मपान्धकारेबन्दीकृता प्रातःकालीन-सूर्यद्युतिमण्डलीव । ननु सर्वांशयतात्मोऽन्धकारः कथं सूर्यमण्डलीं बन्दीकरोति, तत्राह—चन्द्रेति । श्रीकृष्णवक्षःस्थलस्य चन्दनचर्चितत्वात्सूर्यतिरस्कर्त्तत्वमित्यर्थः । उत्प्रेक्षान्तर-माह—कालिन्द्याः पयसि पुष्टं विकसितं रक्तोत्पलमिव ।

---

धर्मः । विनोदवन्नाटेन प्रायश्च प्रायो इत्याचार्याः 'न के निरूपणनोपमाकरोति भावाद्युपमेयं उपमानमयोऽन्येषामित्यर्थं न्याय्यापित्ततात्पर्यमिदं सिद्धान्तयन्ति— उपमानभावान्तरविहरोतेति निरूपितेनोपमानयोरमात्रदिभेदावादनगमालार्थेशिशारदे

नात्र 'स कथं 'घरणा'विति सन्देहोच्छेदः, अपि तु तत्परिपोष एव। एतेन निश्चयान्तोऽयं न भवति। 'कृष्णः किमेष' इति 'किं' शब्दो निश्चयं बाधते। केचिन्निश्चयान्तमपि सन्देहं मन्यन्ते (ग)। स यथा—

मेघो नायं, व्रजपतिसुतो, नापि सौदामिनीयं,
पीतं वासः, सुरधनुरिदं, नैष बर्हावतंसः।
बालाकीयं न खलु विततिः, पश्य मुक्तावलीयं,
विस्रब्धा त्वं विहर, शरदि प्रावृषः कोऽवकाशः? ॥ ३८

—रूपकन्तु (६) तत्।

यत्तादात्म्यं द्वयोः—२३९ का

द्वयोरुपमानोपमेययोः। अतिशयाभेदादपह्नुतभेदत्वं तादात्म्यम् (घ)।

—तच्च द्विधेति विदुर्बुधाः।

समस्तवस्तुविषयमेकदेशविवर्त्ति च ॥ २४० का—

स इति—उपमेय उपमानस्य भेदानुक्तौ यः संशयः सः सन्देहनामाऽलङ्कारः, किं वोपमेय उपमानस्य भेदस्योक्तौ यः संशयः स सन्देहनामाऽलङ्कारः। 'तु'र्विकल्पे। अत्र प्रथमे उपमेये मुखे चन्द्रस्य भेदोक्तिर्नास्ति। एषः श्यामसुन्दरः पदार्थः किं मेघः? इति सन्देहोऽत्र वर्त्तत एव। अत्रोपमेये उपमानस्य मेघस्य भेदोक्तिर्वर्त्तते। मुखं चोदाह—अयं निष्कलङ्को दृश्यते, स तु सकलङ्कः, अतः प्रसिद्धचन्द्रो न भवति। तथाप्ययं क इति सन्देहो यथास्थित एव। पीताम्बरमालक्ष्याह—मालेति। अत्रापि निश्चयो नास्ति, तस्मादयं निश्चयान्तसन्देहः। कस्यचिन्मते निश्चयान्तसन्देहोऽप्यलङ्कारविशेषः तन्मत अन्यस्योदाहरणमाह—मेघ इति। वक्षःस्थले दृश्यमानेयं विततिः श्वेतवस्तुनो विस्तारो न बालार्को न बकपङ्क्तिसमूहः। अयं श्रीकृष्ण एवेति विश्वस्ता सती त्वमनेन सह विहर।

द्वयोरुपमानोपमेययोर्यत्तादात्म्यं तद्रूपकम्। तथा च चन्द्रवन्मुखमित्यत्र उपमानोपमेययोर्भेदबोधक'वति'प्रत्ययोऽस्ति, अतो न रूपकम्—किन्तु यत्र 'मुखं चन्द्र'मिति

---

कृतम्। अयमाशयः एषां निष्कर्षो यत्तिङन्तसमभिव्याहृतेवादिशब्दघटितत्वेऽस्या उत्प्रेक्षाया एवावकाश इति। अर्वाचीना सर्वेऽपि प्रायः एतद्विशेषेणदलस्यान्यथोपयोगमाचक्षाणा उत्प्रेक्षाया विशालक्षेत्रत्वमङ्गीकुर्वन्तः प्रतिभोत्थापिताभध्यवसायलक्षणां बुद्धिमेवास्याः सादृश्यमूलालङ्कारात् भेदलक्षणे बीजत्वेन निर्दिशन्ति। विस्तरस्तत्र चित्रमीमांसायां चित्रमीमांसाखण्डने च द्रष्टव्यः। परमेतन्नापलाप्यं यत् प्रकारम्***र्भिर्गन्यत्रक्षित्यालङ्कार-

आरोप्यमाणआरोपविषयो यत्र शब्दगौ ।

तदादिः— २४१ का—

आदिः समस्तवस्तुविषयम् ।

आरोप्यमाणः शाब्द आर्थश्च तत्परम् ।

एकदेशविवर्त्ति— २४२ का—

शाब्दः शब्दोपात्तः, आर्थोऽर्थगम्यश्च । क्वचिच्छाब्दः क्वचिदर्थमर्यादया अवसेय इत्येकदेशविवर्त्तित्वम् । क्रमेणोदाहरणे—

उदञ्चद्वक्षोजस्तवकनमिता बाहुविटप-
द्वयीदोले रम्या स्मितकुसुमसौरभ्यसुभगा ।
इयं सन्ध्यारागच्छविलसदुपाख्याङ्गुलिदला
नवीना ते राधे ! विलसति तनूरत्नलतिका ॥ ३९

चन्द्रमुखयोरभेदप्रतीतिस्तत्रैव रूपकमित्यर्थः । यत्रारोपविषयस्योपमेयस्य तथाऽऽरोप्यमाणस्योपमानस्य च द्वयोरेव बोधकशब्दौ वर्त्तेते तत्र समस्तवस्तुविषयं रूपकं, यत्र तु आरोपविषयस्योपमेयस्य बोधकशब्दो वर्त्तते किन्त्वारोप्यमाणोपमानबोधकशब्दः काव्ये नास्ति, अपि तु अर्थमर्यादया स शब्दोऽनुक्त एव, यस्मिन्नेव पदे कुत्रचिदपि उपमानबोधकशब्दोऽप्यस्ति, तदेकदेशविवर्त्तिरूपकं ज्ञेयम् । एवं क्रमेण भेदद्वयं भवतीत्यर्थः ।

इयन्तनूरूपा रत्नलतिका विलसति । कथम्भूता ? स्तनरूपस्तवकेन नमिता—सतुरपि साद्दविकलव्यथा किञ्चिन्नम्रा भवति । पुनश्च बाहू एव शाखाद्वयी तस्या दोलनविषये रम्या, लताऽपि शाखायाः किञ्चिच्चलने रमणीया भवति । हस्तयोः किञ्चिच्चलने माधुर्यस्योत्कर्षो भवति । पुनः सन्ध्याकालीनरक्तच्छविं कान्ति वहन्ति ये मृदुपाण्यङ्गुलयस्त एव पल्लवा यत्र ।

---

भेदस्य विधर्मनिमर्षेण विभागनिर्देश चावश्या स्फुटीकृता । कुम्भानुबन्धेत्यादि—अत्र चन्द्राद्युद्दिकमिना कुसुरवर्णी श्रीकृष्णो वर्ण्यतीति प्रकरणनिर्देशः साहित्यकौमुद्याम् । अत्रान्तिमे पादे भामहादिरदर्शितानुप्रेक्षा ।

(ग) ससन्देहालङ्कारस्य सन्देहाख्य इति सन्देहः केषाञ्चिदाचार्याणां टीकाकृतामुपस्थापितम् । भामहादयस्तु प्राचीना एनं ससन्देहमेवाहुः, उभयथापि नियतार्थस्य मध्यादर्शं निर्दर्शनाधो विचारणीयमनुकृतिस्वभावमामोदस्मारमिति दिक् । साहित्यशास्त्रे स्वादय सन्देहोद्बोधावाधकः 'सन्दे' शब्दे प्रश्नमय इव सन्देहबाधकाः किं पुनरतः केवलेव सद्भावे । रसो न वाच्यः :—वाच्यः यथा इति टीकाकृतमान्यमस्तु न चमत्कारकारी,

अत्र समस्तवस्तुविषयम्, आरोप्यमाणारोपविषययोः शब्दोपात्तत्वात् ।

प्रसूनैर्नानाभैः सितमलिनिमारुण्यपिशुनै-
र्लसद्यानाभावा मधुपगणझङ्कारकलहा ।
श्रिया सार्द्धं स्पर्द्धां बत विदधती गोकुलपते-
रुरस्था रस्यानामुपरि वनमाला विजयते (घ) ॥ ४०

अत्र वनमालाया नायिकात्वेनारोपः, श्रियः प्रतिनायिकात्वेन—स चार्थ एव, प्रसूनानां स्मितत्वाद्यारोपस्तु शाब्द, इत्येकदेशविवर्त्ति ।

## आरोपविषयाभावेऽप्यारोप्यं यदि तत् परम् । २४३ का—

परमन्यप्रकारमित्यर्थः । यथा—

मधुरिमरसवापीमत्तहंसीप्रजल्पः प्रणयकुसुमवाटीभृङ्गसङ्गीतघोषः ।
सुरतसमरभेरीभाङ्कृतिः पूतनारेर्जयति हृदयदंशी कोऽपि वंशीनिनादः(घ) ॥४

अत्र 'मधुरिमरसवाप्या'दीनामारोप्याणामारोपविषयो नास्तीति ।

## उक्तं प्रसङ्गि—२४४ का—

प्रसङ्गि प्रकृष्टसङ्गवत् सजातीयबहुलमित्यर्थः । त्रिविधभेदमेव यदुक्तम् ।

नानाभैः श्वेतश्यामरक्तनानावर्णैः प्रसूनैर्लसद्यानाभावा श्रीकृष्णस्य उरस्था उरसि भवा वनमाला रस्यानामास्वाद्यानां वस्तूनामुपरि विजयते । प्रसूनैः कीदृशैः ? स्मितेति—अत्र 'स्मिते'त्यनेन प्रसादः, 'मलिनिमे'ति वाम्यं, 'आरुण्ये'त्यनुरागः, एतेषां सूचकैरित्यर्थः । अत्र श्वेतपुष्पे स्मितत्वारोपः, श्यामपुष्पे वामत्वारोपः, रक्तपुष्पे अनुरागित्वारोपो बोध्यः । वनमालाया नायिकात्वारोपः रेखारूपाया लक्ष्म्याः प्रतिनायिकात्वारोपश्चार्थ एव, नतु शाब्दः, तयोर्बोधकशब्दाभावात्, पुष्पेषु स्मितत्वारोपस्तु शाब्द एव, स्मितादिबोधकशब्दानां विद्यमानत्वात् । अतोऽत्र शाब्द आर्थश्चोभयमपि वर्त्तत इत्येकदेशविवर्त्ति । यत्र केवलं शाब्द एव तत्र समस्तवस्तुविषयं रूपकमिति भेदो ज्ञेयः । आरोपविषयस्योपमेयस्याभावेऽपि यद्यारोप्यमुपमानं वर्त्तते तदा तद्रूपकमन्यप्रकारम् । मधुरिमेति—माधुर्य्यरसस्य वापीस्वरूपे श्रीकृष्णे या मत्तहंसी तस्याः प्रजल्परूपो वंशीनिनादो जयति, अत्रोपमेयस्य कृष्णस्य बोधकपदाभावादन्यप्रकाररूपकम् ।

---

परम् 'आद्यो' इम इत्यन्वय एव वरम् । तथाचात्रार्थे प्रमाणं 'शृङ्गारैकरसः स्वयं [illegible] मदन' इति विक्रमोर्वशीयपद्यस्य प्रकाशोदाहरणं यदुपजीव्य रचितं स्यात् पद्यमदः । निश्चयान्तमपीति—निश्चयान्तस्य सन्देहस्य प्रकाशकृतां स्वीकृतत्वं स्मरणीयम् । अभियुक्तश्रेष्ठा उद्भटभट्टाः प्रकाशग्रन्थोपजीव्यभूता न निश्चयान्तं सन्देहं स्वीकुर्वन्ति, निश्चयस्य वाच्यत्वे न तादृश-

—निःसङ्गमेकमेव विवक्षितम् ॥ २४५ का—

एकमेव प्रधानत्वेन विवक्षितं तथाविधसजातीयशून्यं निःसङ्गम् ।

यथा— न पश्यति न भाषते न च शृणोति न स्पन्दते
निमीलति विघूर्णते पतति मूर्च्छतीयं यतः ।
तदेतदनुभीयते किमपि बाधते राधिकां
मुकुन्दविरहव्यथाविषविसर्पविस्फूर्जितम् ॥ ४२

मालारूपकमन्यत्तु ज्ञेयं मालोपमानवत् (च)॥ २४६ का—

यथा— नयनयोः कुवलयमक्ष्णोरञ्जनमुरसो महेन्द्रमणिदाम ।
वृन्दावनरमणीनां मण्डनमखिलं हरिर्जयति (च) ॥ ४३

यथा वा— शौटीर्यं स्मरभूपते,र्मधुमदो लावण्यलक्ष्म्याः, स्थयः
सौभाग्यस्य, विलासभूर्मधुरिमोल्लासस्य, धामः श्रियः ।
चाद्वैतं गुणसम्पदा,मुपनिषत् केलीविलासावलेः
सेयं लोचनचन्द्रिकाचयचमत्कारायकीर्त्तिया ॥ ४४

श्लिष्टस्य वाचकस्यानुरोधाद्दारोप एव यः ।
सोऽन्यस्यारोपहेतुश्चेत् परम्परितनामकम् (च) ॥२४७का—

अन्यस्याश्लिष्टस्यारोपे यदि हेतुः स्यात्तदा रूपकं परम्परिताख्यम् । यथा—
पद्माननोत्सुकतया भ्रमरः, कलाभिः सर्वाभिरन्विततया त्वमखण्ड इन्दुः ।
त्वन्मानसे कनकपङ्कजिनीतयाऽसौ सा राधिका सुरमणीनिकराधिकेव ॥ ४५

अत्र पद्मं पद्मा च, कलाश्चतुःषष्टिः, कला चन्द्रस्य षोड़शो भागश्च, मानसं चित्तं मानससरश्च, सा राधिका सारिकाधिका साराधिका च, इत्येषां श्लिष्टानां वाचकानामनुरोधात् 'भ्रमरा'दिशब्दानामारोपः ।

**भेदे सत्यपि तत्— २४८ का**

तत् परम्परितम् । यथा—रत्नस्तम्भौ व्रजजनदृशां चित्तदोलोत्सवस्य
श्रीराधाया रतिजयकलातोरणोत्तानदण्डौ ।
दैत्येन्द्राणां परिभवमहायज्ञनीलेन्द्रयूपौ
भुजौ कामप्रमदकरिणोः क्ष्माबाहू स्मरामः (ध) ॥ ४६

अत्र चित्तदोलनादेर्भिन्नशब्दवाच्यस्योत्सवाद्यारोपेण बाह्वो रत्नस्तम्भत्वाद्यारोपः सिद्ध एव । आद्ययोर्मिश्रत्वं, उत्तरयोः शुद्धत्वम् ।

'पद्माननेति' श्लिष्टपदम्—पद्माऽननमेव पद्माननं तत्रोत्सुकतया हे सख्य ! त्वं भ्रमरः । अत्र पद्मा चन्द्रावल्याः सखी, तस्या आनने कमलाननारोपः, तेनारोपश्लिष्टस्य भ्रमरस्य कृष्ण आरोपः, अतोऽत्र परम्परितरूपकम् । तथा कलाभिरेव कलाभिः ; अत्र चतुःषष्टिकलायां चन्द्रस्य षोड़शभागरूपकलाऽऽरोपः, तेनारोपेण श्लिष्टस्य चन्द्रस्य कृष्ण आरोपः । एवं त्वन्मानसमेव मानसं सरस्तत्र स्वर्णकमलिनीत्वेनासौ वा प्रसिद्धा राधिका स्वर्गाङ्गनानिकरेभ्योऽधिकेव । अत्र मानसे चित्ते मानससरोवरारोपः, तेनारोपेण श्लिष्टायाः स्वर्णकमलिन्या राधिकाऽऽरोपः ।

भेदेऽश्लिष्टे सत्यपि तत् परम्परितरूपकं भवति । बाहू कथम्भूतौ ? चित्तदोलनमेवोत्सवस्तस्य रत्नस्तम्भौ श्रीराधाया रतेर्या जयकला उत्कर्षवैदग्धी सैव तोरणं बन्धनमाला तस्य बन्धनार्थमुत्तानदण्डौ । भिन्नशब्दस्याश्लिष्टपदस्य वाच्यस्य चित्तदोलनादेराद्ययो रत्नस्तम्भदण्डयोर्मिश्रत्वं मालारूपकेण सह मिलनं ज्ञेयं, धर्मैकरूप्यात् । तद्यथा चित्तस्य दोलनेन य उत्सवस्तस्य रत्नस्तम्भौ, रतेर्या जयकला उत्कर्षवैदग्धी तत्र तोरणमिति

इच्छन्ति, परं न तत् प्रामाणिकसम्मतं 'मुखमपरश्चन्द्र' इत्यादावपि तथाकथिततादूप्यरूपकेऽभेदरूपकस्यैव सम्भवात् । उपमावन्मनोहारित्वमादधदप्येषः न तथा विपुललक्ष्य इति सुविदितमेव, तथाऽपि प्राचां वाल्मीकिव्यासाश्वघोषभासकालिदासादीनां प्रबन्धेष्वस्योत्कर्षो न हीयते । यथा 'प्रज्ञाऽम्बुवेगां स्थिरशीलवप्रां समाधिशीतां व्रतचक्रवाकाम् । अस्योत्तमां धर्मनदीं प्रवृत्तां तृष्णाऽर्दितः पास्यति जीवलोकः ॥' इत्यादि बुद्धचरितपद्ये ।

रसनारूपकमन्ये पठन्ति (घ)। यथा—

कुसुमस्मितैर्लतानां स्मितकुसुमैर्गोपरमणीनाम्।
किसलयकरैरमूषां स करकिसलैश्च पिप्रिये तासाम्॥४७

स कृष्णः, अमूषां लतानाम्, तासां गोपरमणीनाम्।

—या तु प्रकृतस्यान्यथाकृतिः।
साऽपह्नुतिः (१०) (ङ)—२४९ का—

अपह्नुतिनामाऽलङ्कारः। अन्यथाकृतिः प्रकृतं निषिध्यान्यस्य स्थापनम्। यथा—

ताम्राधरोष्ठदलमुन्नतचारुनासमत्यायतेक्षणमिदं तव नास्यमास्यम्।
*बन्धूकयुग्मतिलकुसुमसरोजयुग्मैः(ङ)संपूजितः स्वयमसौ विधिनैव चन्द्रः॥४८*

यथा वा— इदन्ते लावण्यव्रततिफलयुग्मं, न तु कुचौ,
मते रज्जून्माथो नभसि, तव राधे! न वलयः।

व्याख्याने मालारूपकम्। (4) हे राधे! तव मध्यदेशरूपनभसि वलयस्त्रिवली न भवन्ति, किन्तु मनेः श्रोणीकुचद्वयबन्धनार्थं रज्जुरूप उन्माथो कूटयन्त्रं भवति। तथैव तनुदरायां लतिका रोमावली न भवति, किन्तु नाभिरूपह्रदे मग्नः कन्दर्परूपमधेन्तस्य पद्मोपमनोः प्रकाशात् समुत्पन्ना कान्तिर्भवति।

इयं नाभीमज्जत्स्मरफणिफणानीलमणितः
समुद्यान्ती कान्तिस्तव तनुरुहाणां न लतिका ॥ ४९

यथा वा— क्षीराब्धेः कति वीचयः; कति लसद्रक्तोत्पलानां दल-
द्रोणीसञ्चयसृष्टयः (ङ) कति मधून्मत्तालिविञ्छोलयः ।
हेलोदञ्चदवाञ्चतोर्नयनयोः कृष्णस्य लीलेक्षण-
व्यापारे कति नोन्मिषन्ति विविधज्योतिर्विलासच्छलात् ॥ ५०

—अनेकार्थप्रतिपादकता यदि ।
एकार्थस्य तु शब्दस्य तदा श्लेषः(११) स कथ्यते(च) ॥२५०का—

यथा— उदयति यस्मिन्नुदयति तिरोभवत्यपि तिरोभवति ।
जगदेव तत्र तमसां नाशिनि कः कृष्ण ! तन्यतां कोपः ॥ ५१

हेलयोदञ्चत्तिरश्चीनयोः श्रीकृष्णनयनयोर्लीलेक्षणव्यापारे सति विविधानां श्रीकृष्ण-नेत्रस्थश्वेतरक्तश्यामज्योतिषां विलासच्छलात् क्षीरसमुद्रस्य कति तरङ्गा नोद्गच्छन्ति, अपि तु उद्गच्छन्त्येव (5) । तथाच श्रीकृष्णस्य तिरश्चीनावलोकनसमये नेत्रस्थमिदं श्वेतरूपं न भवति, किन्तु क्षीरसमुद्रस्य तरङ्गा एव दृश्यमाना भवन्तीत्यपह्नुतिरेव । एवमुत्तरत्रापि ज्ञेयम् । नेत्रस्थमिदं रक्तं रूपं न भवति किन्तु प्रफुल्लरक्तोत्पलानां दलान्येव द्रोणी-सङ्घातास्तेषां सृष्टयः कति नोन्मिषन्ति । वसन्तसमये उन्मत्तभ्रमरश्रेणयः ।

(ङ) अपह्नुतिरिति—'उपमेयं मृषा कृत्वा सत्यत्वेनोपमानकम् । स्थाप्यते चेत्तदा ज्ञेयाऽपह्नुति'रिति काव्यदर्पणे लक्षणमप्येतदभिप्रायम् । आचार्यदण्डिमतमुपपादयन्तः केऽपि यत्किञ्चिदपह्नुत्यान्यस्य कस्यचित् प्रदर्शनमपह्नुतिरिति लक्षणं वर्णयन्ति । दण्डि-लक्ष्यं 'न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणा'मित्यप्येतद्विनिगमकम् । एवमुद्योतकृतो नागो-जीभट्टाः । अत्र सादृश्यमूलता ('किञ्चिदन्तर्गतोपमे'ति भामहलक्षणे) भूतार्थापह्नवश्चेतर-व्यावर्तकत्वे बीजं, नापलापमानमाचार्यदण्डिप्रभृतिभिर्दिष्टमिति विमर्शकाणां सरणिः । एव-मेतेन न सर्वथा निर्विवादं वामनमतम् 'अपह्नुतौ वाक्यार्थयोरार्थिकं तादरूप्यं, रूपके तु पदार्थयोः शाब्दं तादरूप्यमिति भेद' इति । सर्वस्वकृद्दर्शितमस्य भेदत्रयं भ्रान्तिहेतुकैतव-पूर्वमपह्नुतिसंज्ञाकल्पनं मालाऽपह्नुतेश्च लक्षणप्रदर्शनमन्यत्रैवास्तां विस्तरः । बन्धूक-द्युतीति—अत्र द्युम्नपदस्य पुनः प्रयोगो न सुष्ठु, परं नानार्थपौनरुक्त्यान्त्वधरोष्ठद्वितयेनैकत्र ध्यायते द्युम्नयुगलेनापरत्र यथाक्रमं साम्यादिति बोध्यम् । 'द्रोणीति'—स्त्रीत्वमनियतलिङ्गशब्द-विषयकम् ।

(5) एवं सर्वत्रैव पुस्तकेषु, परन्तु 'अपि तु सर्व उद्गच्छन्त्येवे'त्यनेन भाव्यम् ।

इत्यर्थस्यैव श्लेषो, न शब्दस्य, परिवृत्तिसहत्वात् । अत्र वाक्यमेकार्थमेव(घ), तच्च सूर्यप्रतिपादकं, तथापि श्रीकृष्णं प्रति काऽप्यभिमानवती विचारेणाभिमानखण्डनपूर्वकं वदति—यस्योदये सर्वोदयः, यस्य तिरोभावे सर्वतिरोभावः, तत्र त्वयि को नाम कोप इत्यर्थान्तरम् ।

यथा वा—'विम्बोष्ठसंफुल्लकदम्बमाल' इत्यादि ( ७म किरणे ४८ श्लोकः ) ।

**श्लिष्टैर्विशेषणैरेव विशेष्यस्यान्यथास्थितिः ।**

**समासोक्तिः (१२) (छ)— २५१ का—**

विशेष्यस्य केवलस्य श्लिष्टैर्विशेषणैरन्यथास्थितिरन्यथाभासनं समासोक्तिनामाऽलङ्कारः ।

यथा— त्वदङ्गसङ्गेन विनैव राधे ! क्षणे क्षणे म्लायति नन्दसूनुः ।
सदैव वक्षःस्थलकेलियोग्या न रोचतेऽस्मै वनमालिकाऽपि ॥ ५२

उदयतीति—अत्र 'उदयतिरोधाना'दिपदानां परिवृत्तिसहत्वान्न शब्दश्लेष', अपि तु अर्थश्लेष एव । एवमसोदयाद्यनेकपदघटितमेकं वाक्यं सूर्यरूपैकार्थप्रतिपादकं, तथाप्येतद्वाक्यश्लेषेण कृष्णरूपार्थान्तरमपि बुध्यते । विशेष्यस्य केवलाश्लिष्टस्य ।

(घ) भामहप्रभृत्युक्तः श्लेषालङ्कारो दण्ड्युक्तोऽभिन्नपदश्लेषश्च बहुत्र तावदर्थोऽद्दृततयार्थालङ्कार एवेति विमर्शने प्रतिभाति । परं भामहोद्भटादिलक्षितमस्य साम्यमलोद्घाटनम् 'उपमानेन यत्तत्त्व'मित्यादि तल्लक्षणस्थं सहोक्तिहेतूपमाविशेषं भेदत्रयं चिरन्तनानां श्लेषोपमाघटकसम्बन्धविचारोत्थापकताऽनुक्ताऽप्यनावमीयते । दण्डिकृतपरिगणनमोऽस्य साम्यानभिन्नायास्तिरस्कारपुरस्कृत उल्लेखः । अयमपि क्रमशोऽलङ्कारान्तरकल्पको जातः अनियमस्यास्यैवाधुनिकैः परिसंख्यारूपेण गणितत्वात् । एतस्य शब्दार्थोभयात्मकतया भेदस्वीकारः कुन्तकाद्युक्तोऽपि नातिरुचिर इति शब्दालङ्कारानुशीलन एव सूचितमस्माभिः । यथा वेति—अत्र सहोक्तिमूलता लभ्या । 'छायावन्तो गतव्याला' इत्यादाविव विशेष्यस्यापि साम्यं द्वयोश्च वाच्यत्वमिति व्यावर्तकत्वे बीजम्, अलङ्कारान्तरविविक्तो नास्य विषयोऽस्तीति, सर्वालङ्कारापवादोऽयमिति, अभिन्नपदत्व एवार्थश्लेष इति च प्रायोवादाः । श्लेषः—इदमस्यास्यार्थालङ्कारत्वे बीजं प्रागेव दर्शितम् । अत्रानेकार्थवाचकत्वेन शब्दशक्तिमूलध्वनिभेदाद् भेद इति ध्वनिकिरणे उट्टङ्कितम् । वाक्यमेकार्थमेवेति—वाक्यं वैयाकरणादिनिरुक्तम्, वाक्यसमन्वितिः प्रयोजकं पदमत्र वाक्यमुच्यते । अत्र यद्यप्यभिधाया अनियन्त्रणात् द्वावपि कृष्णसूर्यौ वाच्यौ, तथापि प्रकरणान्नियमेनैकोऽप्योऽर्थो बोद्धव्यः । यद्वा एकार्थता उभयोः सामान्यरूपैकस्यार्थस्य घटकता । स कृष्णपक्षे सूर्यपक्षे च सविशेष इत्यस्तु, परं सामान्यत ऐक्यमिति केचित् । कष्टकल्पनैषेत्याद्यः पक्ष एव वरम् ।

अत्र वनमालिकायाः प्रतिनायिकात्वं केवलेन 'वनमाला'शब्देन नायाति, अपि तु 'सदैव वक्षःस्थलकेली'त्यादिना विशेषणेनैव। समासः सङ्क्षेपस्तेनोक्तिः।

—असम्भवस्वरूपं वस्तूपमाकृति।

निदर्शनैषा दृष्टान्तप्राया (१३) (ज)—२५२ का

निदर्शननामाऽलङ्कारः। यथा—

क्व नाम कृष्णस्य कृपाकटाक्षः क्व तावदस्मिन् बत नोऽभिलाषः।
रत्नाकरस्योदरवर्त्ति रत्नं वयं करेणैव जिघृक्षवः स्मः॥ ५३

यथा वा—धाकृष्यतां तक्षकमौलिरत्नमुल्लास्यतां हेमगिरिः करेण।
माच्छिद्यतां केशरिकेशराली न स्पृश्यतां केशव! मत्सखीयम्॥५४

मालारूपाऽप्येषा।

यदुपमाकृत्यसम्भवस्वरूपा एषा निदर्शना किन्तु दृष्टान्तप्राया च। हेमगिरिः सुमेरुः करेणोल्लास्यतां ध्रियताम्। असाध्ये तक्षकफणारत्नाकर्षणे साहसं क्रियताम्। ततोऽप्यसाध्ये मत्सखीस्पर्शने कदाऽपि मा साहसं कुर्विति भावः। एषा मालारूपा निदर्शना।

---

(झ) समासोक्तिरिति—अन्वर्थताऽस्य प्राचीनैरूपलक्षिता, सा चालेव क्वापि चाप्यर्वाचीनैरप्युद्दिश्यते। प्रकृतार्थस्य यदत्राप्रकृतार्थबोधनं तद्विशेषणबलादेव भवतीत्यस्य ध्वनेरलङ्कारान्तराच्च भूयान् भेदः। 'कार्य्य लिङ्ग-विशेषणै'रिति 'व्यवहारसमारोप' इति च विश्वनाथलक्षणे लक्ष्यस्यालङ्कारस्य स्फुटीकरणार्थं, तत्र एव विचारो ग्राह्यः। केवलस्येति—विशेष्यपदे न श्लेष इति यावत्। 'अनोपमेयस्यानुक्तौ समानगुणन्यायात् समासोक्तिः, सङ्क्षेपवचनात् समासोक्ति'रित्याख्ये'ति वामनः। 'पिबन्मधु यथाकामं', 'स्कन्धवानृजुरव्याल' इत्यादि च लक्षणेष्वस्या भाष्यमूलता लक्षणीया। एवं प्राचीनाचार्य्याः। न च साधीयान् कल्पः, प्राचीनाप्रस्तुतार्थकथनं प्रस्तुतस्य प्रतीतोक्तात् समानविशेषणत्वलिङ्गात्, प्रस्तुतेऽप्रस्तुतस्य वस्तुनो व्यवहारसमारोप एवास्यालङ्कारस्य विषय इति नवीनानां नवं दर्शनम्। श्लिष्टविशेषणेति—अपरे तु श्लिष्टविशेषणोत्थापिता, साधारणविशेषणोत्थापिता चेति द्विधेवेति मन्यन्ते। मतैस्त्रटुद्भाविताना मस्य भेदानामस्य ध्वनितायतिरिक्तायाश्च विषयस्य दर्पणरसगङ्गाधरादिषु विचारो जिज्ञासुभिरवश्यमवलोकनीयः। यद्यपि भरतनिर्दिष्टेऽलङ्कारचतुष्के नास्योल्लेखो दृश्यते, तथापि चिरन्तनानां चिन्तासन्तु'भिन्न एष इति मानिशयवादः। एवमप्याहुः प्रवीणाः—

—यत्र क्रियैव हि ।

वक्ति स्वरूपं हेतुञ्च साऽन्या—(ज) २५३ का

यत्रैकैव क्रिया स्वरूपं हेतुञ्च वक्ति साऽन्या निदर्शना ।

यथा—अभिवन्द्यवन्दनविपर्ययः सदा विदधाति नूनमियतीं हि यातनाम् ।
अधिकण्ठसीम परिधाय राधिका रमणीमणिर्न हि मणीकृता यतः ॥५५

अत्र 'यातनां विदधाती'ति क्रियां स्वरूपं रमणीमणेर्मणीकरणविपर्ययरूपं हेतुञ्च वक्ति ।

—अप्रासङ्गिकस्य वाक् ।

प्रासङ्गिककथायां स्यादप्रस्तुतप्रशंसनम् (१४)॥(झ)२५४ का—

अप्रासङ्गिकस्याप्राकरणिकस्यार्थस्य वाक् कथनं यत् प्रासङ्गिककथायां तदप्रस्तुतप्रशंसा स्यात् ।

कदाचित् श्रीकृष्णो राधां सङ्केतकुञ्जस्थां विधाय तस्याः प्रतिपक्षरमणीचन्द्रावलीकृतप्रतिबन्धकवशात्तन्निकटे गन्तुं न शशाक, तदा श्रीराधिका मानिनी बभूव, तस्या मानभङ्गार्थं कृतेऽपि यत्ने यदा मानशान्तिर्न बभूव (?) तदा श्रीकृष्णः खिन्नः सन् मानाय्याथ ललितामकार्षं जगाम, तं प्रति ललिताऽऽह—अभिवन्द्य ति—"यदि अभिवादनस्तुत्योः स्तुत्यर्हायां वन्दनविपर्ययोऽनादरादिर्हि निश्चितमियतीं यातनां विदधाति यतस्तया गतरागावधिकण्ठसीम कण्ठसीमायां परिधाय राधिकारूपरमणीमणिर्न हि कौस्तुभमणीकृता । अत्र यातनाविधानरूपक्रिया स्वहेतुं बोधयति, तथाच यातनाविधानरूपकार्यलिङ्गेन रमणीमणेर्मणीकरणं भावरूपं कारणमनुमीयत इत्यर्थः ।

---

Personification is as old as language. Man never knows fully how anthromorphic he is परमस्य मर्यादाशङ्कनमिव दोषाय । प्राचीनगणनायामप्रस्तुतप्रशंसातः समासोक्तिर्भेदः सूक्ष्मः, अतो नेदं विस्मयकरं यत् केचित् कुन्तकादिभिरप्रस्तुतप्रशंसास्वरीकुर्वद्भिरन्यथा चास्याः शोभाशून्यत्वं सिद्धान्तितम् ।

(ज) दृष्टान्तप्रायेति—निदर्शनं निश्चित्य दृष्टान्तकरणम् । अत्र वस्तुनोर्वाक्यार्थयोः पदार्थयोर्वा सम्बन्धः स्वतो दुरुपपादः, परमेतत्सम्बन्धकरणद्वारा सादृश्याक्षेपेणौपम्यकरणं सादृश्यपरिकल्पनं बिम्बानुबिम्बत्वबोधो वा । दृष्टान्तालङ्कारादस्य भेदो दर्पणादौ स्फुटीकृत । अत्र द्वितीयसम्बन्धो भवन्नपि सादृश्यमुखेनैव स्थितिमानित्यस्य सादृश्यमूलता ज्ञेया। अन्येति । अत्रापरैर्लक्षितलक्षणसम्भवतो वस्तुसम्बन्धस्याभावः—परमत्र भेदप्रकटनं भिन्नार्थमिवेति प्रतिभाति ।

काय्यकारणसामान्यविशेषेषु तदन्यगीः ।
प्रस्तुतेषु च तुल्ये च तुल्यगीः पञ्चधैव तत् ॥ २५५ का—

तदप्रस्तुतप्रशंसनं प्रस्तुतेषु कार्य्यादिषु तदन्यगीः कारणादिनिरुक्तिः; चकारादन्येषामप्रस्तुतप्रसङ्गतुल्ये प्रस्तुते तुल्यस्याप्रस्तुतस्य गीश्चेति पञ्चधा । कार्य्ये कारणकथनं, कारणे कार्य्यकथनं, सामान्ये विशेषकथनं, विशेषे सामान्यकथनं, तुल्ये तुल्यस्याप्रस्तुतस्य कथनमित्यर्थः । क्रमेणोदाहरणानि—

गेहेन किं तेन सदासितेन (5a) दिनैर्वृथा तैः किमु यापितैर्वा ।
न यत्र मे चन्द्रकशेखरस्य यागोदयः सिध्यति साधु साध्वः ॥ ५६

अत्र गृहान्निशि कश्चिद्वनाय गच्छामीति कार्य्ये प्रश्ने प्रस्तुतेऽप्रस्तुतस्य तत्कारणस्य प्रशंसा ।

'कुतः समागच्छसि' राधिके ! त्वं' ? यत्र स्थिता तस्य मुखं निरीक्षे ।
'क्व यासि सुधाक्षि ! समं सखीभि'र्मे कस्य पुष्पावचयो ह्यभीष्टः ? ॥

अत्र 'कुत आगच्छसि' 'क्व यासी'ति प्रश्ने प्रस्तुतेऽप्रस्तुतस्य तस्य तत्-कारणस्य तन्मुखावलोकनस्य पुष्पावचयस्य च प्रशंसा । यत्र तन्मुखावलोकनं भवति तत्रैव यामः, पुष्पावचयस्तु व्याज इति ध्वनिः (भ) ।

अस्ताचलं चुम्बति भानुबिम्बे गृहे गृहे गोकुलसुन्दरीणाम् ।
दिव्यानुलेपाभरणाम्बराणि कृष्णाह्रियन्ते परितः सखीभिः ॥ ५८

अत्र तदागमने प्रस्तुते कारणे कार्य्यमुक्तम् ।

सदासितेन वन्धनाधिकरणेन तेन गेहेन किम् ? षिङ् बन्धने अधिकरणे क्तः । यत्र गृहे दिवसे वा मम चन्द्रकशेखरस्य महादेवस्य पक्षे श्रीकृष्णस्य यागोदयः पूजोदयः पक्षे कन्दर्पयागोदयो न साधु सिध्यति । अत्रेति—कश्चित् प्रश्ने । हे सखि ! वनाय गच्छामीति प्रस्तुतस्य कार्य्यस्य प्रश्नेऽप्रस्तुतस्य तस्मिन् वनगमने कारणस्य गृहे कन्दर्पयागाभावस्य सिद्धेः प्रशंसा कथनमित्यर्थः । अस्ताचलमिति—अप्रस्तुतस्य वस्त्राभरणाद्याहरणरूप कार्य्यस्य प्रशंसा तया दूत्या कृता—तथाच सन्ध्याकाले वस्त्राभरणादिभिर्विभूषितास्ताः सर्वाः श्रीकृष्णं मिलिष्यन्तीति भावः । साधूनां शरीरेषु च स्वभावेन कामादिदोषा

(भ) वाक् कथनमिति—एतदेव प्राचीनैर्लक्षितात्लक्षणात भेदस्फुटीकरणम् । एवमपि

(5a) 'सुख मितेनेति (ग) पुस्तके पाठ ।

अन्तर्लतागृहमनस्तमसं तमिस्रमालिङ्ग्य सा तव तनुभ्रमतो वसन्ती ।
दैवोदितेन्दुकिरणैर्विरतेऽथ तस्मिन्मा गाः प्रिय ! त्वमिति सीदति कृष्ण ! राधा ॥

अत्र तदाकारेऽपि साऽनुरज्यतीति सामान्ये विशेषकथनम् ।

अनुरागिवधूमनोज्वरक्षतये त्वं ननु कृष्ण ! भेषजम् ।
स कृती स सुहृत् स वत्सलः सुहृदाधिप्रतिकारको हि यः ॥ ६०

अत्र त्वां नीत्वा यदि तस्या विरहज्वरं नाहं शमये तदा कोऽपि न भविष्यति । अहञ्च न कृतिनी, न सुहृत्, न वत्सला । तस्या मनोज्वरशमनं विना तद्रूपेण भेषजेन न सम्पत्स्यते । तस्मात्त्वं शीघ्रमेव गन्तुमर्हसीति विशेषे प्रस्तुते सामान्यकथनम् ।

तुल्ये प्रस्तुते तुल्यस्याप्रस्तुतस्याभिधानेऽस्य त्रयः प्रकाराः श्लेष-समासोक्ति-सादृश्य-रूपाः । क्रमेणोदाहरणानि—

न दोषदर्शी भवितैव विद्वान्वपुःस्वभावेन सतां वपुःषु ।
युज्येत फेनादिभिरम्बुदोषैरघौघविध्वंसि गाङ्गमम्बु ॥ ६१ एष श्लेषरूपः ।

[6 यथा—लोलोऽपि पानविलोलोऽपि तव स्वरूपोऽप्याचिन्त्यतां सम्प्रति । न भ्रमर, कदापि ।
जात्यैव खेलनपरो मलतीभवन् यः सारग्राही भवति तस्य महागुणस्य ॥ ६२
अत्र कृष्णस्य मानिन्याश्च तुल्ययोर्भ्रमरमालत्योरभिधाने श्लेषरूपः ।]

हंहो प्रेम तवायशो विरचितं सद्योऽविनिर्गच्छता
येनानेन हतेन जीवितमिदं तद्येन सम्भाव्यते ।

दृश्यमाना अपि पण्डितस्तु तस्माद्दोषदर्शी न भविता (7) । गङ्गाजले जलस्वभावेन फेनादिदोषा दृश्यमाना अपि तज्जलं महापातकक्षयमघसमूहविध्वंसि अपि । अत्र 'दोषदर्शि'शब्दो नानार्थवाचकत्वाच्छ्लिष्टः । अत्र प्रस्तुते साधुशरीरे दोषदर्शनाभावेऽप्रस्तुतस्य गङ्गाजलस्य पापसमूहनाशकत्वस्य कथनम् ।

माधवविरहेण व्याकुला श्रीराधा स्वप्रेमाणं सम्बोध्याह—हंहो खेदे हे प्रेम ! यतः श्रीकृष्णे विच्छेदसमयेऽविनिर्गच्छता येन जीवितेन तवायशो विरचितं तज्जीवितं येनाद्यप्रियागमेन धार्यते तस्यैव सुमहान् दोषः—यतः शरीरान्तरे तस्य कृष्णस्य प्राप्तावप्रा-

प्रकाशकर्ता 'तदन्यस्यवचः' पदेन, यदाहुः सङ्केतकृतः 'अत्र वर्णना न स्तुति'रिति । 'अप्रस्तुतस्य प्रस्तुतपरा प्रशंसा वचः, तदभिधानम्' । अलङ्कारान्तरेष्वियमपि श्लेषाद्यक्तत्वाद्वदः

(7) भावानुरूपं त्रिविधमप्रस्तुतम्—एवं सर्वत्र पुस्तकेषु ।

तस्यैवावधिवासरस्य सुमहान् दोषः शरीरान्तरे

तत्प्राप्तौ समयोऽधिकः किमवधावित्थं न येनोह्यते ॥ ६२

अत्र समासोक्तिरूपः ।

[यथा (८)—

किं चातकीरपि रसहृदयैकलाला वर्षन्तमम्बुदमपि स्वपक्षे नयन्ती ।

वार्ये ! विधाय हृदयोचरमेतमासां कृतेन राजसि रजोभिरनेन कामम् ॥ ६४

अत्र राधामक्तानां गोपसुभ्रुवां कृष्णेन मधुकराय सुखातमाधाः प्रस्तावे चातकीनां नायिकात्वं, मान्यायाश्च प्रतिनायिकात्वं विशेषणमाहात्म्यादेवागम्यते । इति समासोक्तिरूपः ।]

चन्द्रादिनानाविधरम्यवस्तुनः सौन्दर्य्यमादाय मुखादि निर्ममे ।

यस्याः स्मरेण, स्वयमेव तामसौ हिनस्ति तैरद्य हरे ! त्वया विना ॥ ६५

अत्र सादृश्यरूपः ।

[यथा वा—(९)

किं किंशुकं पुनरपि व्यथतां विदग्धभृङ्गी ययास्वभिपतन्नभिनम्र एव ।

विद्धः सकण्टकभरैरुदरागयेन सह यदैव नलिनीषु यशो निरर्गम ॥ ६६

अत्र कलहान्तरितायाः कृष्णस्य च प्रस्तावे कितकीभृङ्गयोरभिधाने सादृश्यरूपः ।]

## प्रतीयमानस्यारोपानारोपाभ्यां पुनर्द्विधा । २६६ का—

पुनरिदमप्रस्तुतप्रशंसनं द्विधा प्रतीयमानस्यार्थस्यारोपानारोपाभ्याम् ।

यथा—का त्वं ? "पृच्छसि दुःखिनीं किमिति मां" कस्मादयं ते श्रमे !

निर्वेदो ? 'ननु मुक्तिरस्मि' तदहो सर्वोत्तमा त्वं "न हि ।

दूरस्थामपि सादरोऽनुभजते भक्तिं मुकुन्दप्रियो

नोपेत्यर्थनकारिणीमपि हशः कोणेन मां वीक्षते" ॥ ६७

[यथा वा (१०)—

[illegible] कोऽसुरदेशस्य सुधियो ! जानीत, किं मां भवा

निर्वेदं तनुते, प्रणामभिती वाञ्छन्ति मा भूमवः ।

अवधिवासरे किमधिकः समयो भावीति तेनावधिवासरेण न ऊह्यते न विलम्ब्यते—तदा च देहानां सद्यः सुव्यक्तत्वाद्देहान्तरस्यापि शीघ्रभावित्वाच्छरीरान्तरे तत्र स्वल्पः समयो विचारलब्ध इति भावः । अत्रेति—श्रीकृष्णविरहे दसमये प्राणगमनप्रतिबन्धकरूपविशेषणेन विशेष्यस्यावधिवासरस्य चेतनत्वारोप इति समासोक्तिरूप इत्यर्थः ।

कश्चिद्देवो मुक्तिं पृच्छति त्वं केत्यादि । यथाक्रमं प्रश्नोत्तराणि । मुक्तेः सकाशाद्भक्तिः सुरसेति प्रतीयमानस्यारोपः प्राधान्येन कथनम् । उपेत्य निकटे गत्वा ।

—परं नात्र सर्वत्र श्लेषगर्भत्वमनुमापकं लिङ्गम् । 'व्याज' इत्यतोऽप्रस्तुतात् प्रस्तुतश्चेत् गम्यत' इति दर्पणकर्ता सच्चयाच नेदमूहनीयं यत् प्रतीयमानरूपेणैवास्याविर्भावः—वाच्यरूपेणाप्यस्य

या अर्थान्तरस्थमायायया मस्थेव पूर्णा किम-
प्युक्त सद्भिरिह प्ररोहति कदाऽप्यङ्क न बीजं पुनः ॥ ६८

भक्तोयोर्द्वयोरन्योन्यकथनम्—अवाचेतनस्योपदेशस्य प्रस्तुते निर्विशेषहरिभक्तपूजनारोपेणैव प्रति
वचनोपपत्ति । ]

बहिश्चेदस्यान्तर्भवति यदि चान्तर्बहिरहो
जनः स्वस्मिन् देहे भवति घृणया थूत्कृतिपरः ।
अभद्रं भद्रं वा विरचितिविशेषोपधि नहि
स्वतो, भद्रं किञ्चिद्भवति भगवद्भागवततः (६८) ॥

अत्र प्रतीयमानार्थस्यानारोपः, वाच्यस्यैव प्राधान्यात् ।

## निगीर्य्योपमानेनोपमेयस्य निरूपणम् ।

## यत् स्यादतिशयोक्तिः (१५) सा (अ)—२५७ का

तथा— स्थितौ शोणेऽम्भोजे तदुपरि नवौ हैमकदली-
तरू पीनावस्मादुपरि कनकसिंहासनमिदम् ।
ततः शून्यं तस्योपरि सुमिलितं कोकमिथुनं
ततश्चन्द्रस्तस्मात्तम इति विधेः का नु घटना ॥ ७०

बहिरिति—रचनाविशेष एवोपधिर्यस्तेनेत्यर्थः। अभद्रं भद्रं वा नहि, किन्तूपाधिकृतं भद्राभद्रात्मकमुभयरूपं भवति, उपाधेरुभयात्मकत्वात् । सर्वथा किञ्चिद्भद्रन्तु भगवद्भजनादेव भवति, भगवद्भजनादेः सर्वथा भद्ररूपत्वात् । अत्र प्रतीयमानस्यार्थस्य देहे हेयत्वस्यानारोपोऽप्राधान्येन कथनं, वाच्यार्थस्यैव चमत्कारित्वेन प्राधान्यात् ।

निगीर्य ग्रस्तं, तथाचोपमानस्यैव प्रयोगो न तूपमानेन ग्रस्तस्योपमेयस्य, यथोपमानस्य रक्तकमलस्यैव प्रयोगो न तूपमेयस्य चरणस्येत्यर्थः । स्थितौ चरणद्वयस्थानीये रक्तकमले । तदुपरि जरुद्वयस्थानीयौ नवीनस्वर्णकदलीतरू । कथम्भूतौ ? पीनौ पीनावस्मादूरुदेशस्योपरि स्थूलत्वमधः कार्श्यमित्यभिप्रायात् । इदं तदुपरि नितम्बस्थानीयं कनकसिंहासनम् । तस्मात्तस्योपरि मध्यदेशस्थानीयं शून्यमिति मध्यदेशस्य कृशत्वाभिप्रायेणोक्तम् । तदुपरि स्तनद्वयस्थानीयं चक्रवाकमिथुनं, मुखस्थानीयश्चन्द्रः, तस्मात् केशस्थानीयं तम इति विधेः काप्यनिर्वचनीया घटना ।

---

स्थितः अम्भसि । क्वचित् प्रतीयमानस्याप्यभूतार्थाभिव्यक्तिर्यथा, 'कृतः समागमस्मौ' इत्याद्युपरिप्रदर्शिते सन्दर्भे ।

---

(6) (8) (9) (10) (x) पुस्तके (ख) पुस्तकस्थे कं'इत्यत्र च 'इदं' इत्यादि [illegible]
[illegible]

——तदेवान्यतया यदि ।

निरूप्यते सा द्वितीया—२५८ का—

तदेव प्रकृतं वस्तूपमानं यावन्यदेवेदमिति यदि निरूप्यते तदा साऽतिशयोक्ति- द्वितीया भवति । यथा—

अन्ये श्रुती ते रसना च साऽन्या चेतः सतां तत् पुनरन्यदेव ।
श्रीकृष्णगीतश्रुतिनामलीलारूपामृतं यानि सदा पयन्ति ॥ ३१

अन्यैवेयं कनकलतिका चन्द्रबीचायमन्य-
स्तस्मिन्नेतन्मदनमदिरयोर्युग्मकञ्चान्यदेव ।
अन्यैवेयन्तदुपरि मनोजन्मनचापवल्ली
राधानाम स्फुरति मनसः कैयमुन्मादवीथी (11) ॥३२

———यदर्थेन तु कल्पना ।

यद्यसम्भाविनोऽर्थस्य सा तृतीया—२५९ का—

यथा— पूर्णो यदि स्यादनिशं सुधांशुः स चेत् कलङ्केन भवेद्विहीनः ।
चकोरपेयोऽपि न चेदयं स्यात्तदास्यदास्याय तदैव राधे । ॥ ३३

—विपर्य्यये ।

कार्य्यकारणयोरन्या—२६० का—

अन्या चतुर्थी । यथा—

अविद्ध एव प्रविवेश यत्कला सरोरुहाक्षा हृदि क्षण । वेदना ।
परस्ततोऽस्येन विलोचनाञ्चलीशरेण विद्धं हृदयं त्वयाऽस्याः ॥ ३४

राधानाम विरोध्यं काऽप्यनिर्वचनीया मनस उन्मादवीथी—तथाच राधानामश्रवण- मात्रेण श्रीकृष्णस्य मनस उन्मादपरम्परा जायत इत्यर्थः। आदौ कार्य्योत्पत्तिः पश्चात् कारणोत्पत्तिः अयमेव कार्य्यकारणयोर्विपर्य्ययः, तत्र चतुर्थ्यतिशयोक्तिर्ज्ञेया। यथा- 'ऽविद्ध एवे'त्यादौ। अत्र कटाक्षशरजन्यहृदयवेधरूपकारणोत्पत्तेः पूर्वमेव तादृशवेधजन्य-

(ञ) अतिशयोक्तिरिति—अतिशयेन लौकिकसीमातिक्रमेणोक्तिरित्यन्वर्थतः संज्ञाया ग्राह्या। अस्याः काव्यशोभाऽधायकत्वं सर्वार्थालङ्कारान्तर्भावित्वञ्च प्राचीनैः 'सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते। यत्नोऽस्यां कविना कार्य्यः कोऽलङ्कारोऽनया विना॥'"अलङ्कारा-

(11) 'कैयमुन्मादवीथी'ति पाठः (ख) (ग) पुस्तकयोः। स च टीकाकृदनुमोदितः।

—प्रतिवस्तूपमा (१६) तदा ।

सामान्यस्य स्थितिर्वाक्य उपमानोपमेययोः (ट) ॥ २६२ का—

उपमानवाक्य उपमेयवाक्ये च सामान्यस्य साधारणधर्मस्य यदा स्थिति-रित्यर्थः । यथा—अहमिव कथमिव सहते राधा निविडानुरागभरबाधाम् ।

न हि नवकुसुमवाटी दहनज्वालेन भवति नो दग्धा ॥ ७५

बिभर्त्ति सर्वानमरान् सुमेरुस्तस्यापरस्यास्ति (ट) धरा महन्ती ।

धराञ्च धत्ते भुजगाधिनाथो धुरन्धरैरेव धुरो ध्रियन्ते ॥ ७६

एषा माला प्रतिवस्तूपमा ।

सर्वेषामेव धर्माणां दृष्टान्तः(१७) प्रतिबिम्बवत्(ट)॥ २६२ का—

सर्वेषामेव साधारणधर्माणां प्रतिबिम्बवद्भानं यत् तद्दृष्टान्तनामाऽलङ्कारः । वेदनात्स्पकार्य्योत्पत्तिरित्यर्थं । मदराम्यः श्रीलगणो ब्रजादागतमुद्धवं प्रत्याह—अहमिति । नवीनकुङ्कुमस्य केशरस्याभिसङ्गभारत्वात् तस्य वाटी दहनज्वालेन दग्धा भवत्येव । अत्रोप-मेयवाक्ये बाधति उपमानवाक्ये दहनज्वालेनाव च साधारणधर्मः शब्दभेदेनोक्तः ।

---

न्तराणामप्यकमाहु. परायणम् । वागीशमहितामुक्तिमिमामतिशयाक्रयाम्" ॥ इत्यादेरतु वादे. स्वीकृतमेव । एवमपि नवीना प्रतीच्याः—Hyperbole is to poetry what the harmless exaggeration, natural to children, is to their story telling—which indeed is a form of poetry । परमस्या मर्यादालङ्घनेन कविप्रतिभोत्थापितस्यापि हानिः स्यात् । गौडीयाना रचनासु प्रागस्या बहुलमुपलम्भो इत्यतया च गौडदेशकृतेनैव पश्चरिता दावस्य प्रचुरलक्ष्यत्वेत्यादिकं टिप्पणीकृताऽन्यत्र दर्शितं मतमुल्लिख्यते । The atmosphere is hyperbolical *Vide The Gaudi Riti in Theory and Practice—Indian Historical Quarterly, V II* 1928) उत्प्रेक्षेऽशातिशयोक्तिरिति केचिदतिप्राचीनाः—परमुभयोर्भेदो । वामनादिभिर्यथायथं निरूपितः । नव्यानां परिभाषानुसारेणाध्यवसाये सति साध्यत्वेन यत्र व्यापारप्राधान्यप्रकटनं तत्रोत्प्रेक्षा, यत्र तु सिद्धत्वेनाध्यवसितप्राधान्यं तत्राति शयोक्तिरिति निष्कर्षः । मम्मटाद्यनुसारेणात्र मूले चत्वारो भेदा लक्षिताः । यद्यर्थेन यत्र कल्पना तत्र सम्बन्धाद्यादिस्फुटीकृतस्यामम्बन्धे सम्बन्धरूपस्य भेदस्योत्थापनम् । पञ्चमो भेदस्तु. मम्मटे,ऽप्यसम्बन्धरूपोऽपि स्वीकृत:, यथा 'अस्याः सर्गविधौ विध्यादि विक्रमोर्वशीये पद्ये । अत्र विषये रुय्यकमाणिक्यचन्द्रप्रभृतिभिः सर्वैरेव प्राचीनटीकाकृद्भिरस्याधिकस्य भेदस्यान्तर्भावोऽनुमोदितः ।

(ट) प्रतिवस्तूपमेति—साधारणधर्मस्य स्थितिरिति—अत्र वाक्यभेदेनोपादानमात्र

**स च साधर्म्यवैधर्म्यभेदेन द्विविधो मतः । २६३ का—**

क्रमेणोदाहरणे—हरिसन्दर्शनसमये द्रवति मनो मे कठोरमपि सुमुखि !
उदये सति चन्द्रमसश्चन्द्रमणिः स्यन्दते स्वरसः ॥ ७७
प्रेयसि नयनविदूरे सति मम समुपैति नयनयोरास्यम् ।
उदयेन हि तुहिनांशोर्मीलति नीलोत्पलश्रेणी ॥ ७८

**कारकैक्ये क्रिया बह्वी व्यत्ययेऽपि च दीपकम्(१८)(ठ)॥२६४का—**

व्यत्यये क्रियैक्ये बहूनि कारकाणीत्यर्थः । यथा 'न पश्यति न भाषते न च शृणोति न स्पन्दत' इत्यादौ (८म किरणे ४२ श्लोके पूर्वार्द्धम्) ।

कारकबाहुल्ये क्रियैक्यं यथा—

सुहृद्वियोगश्च महाज्वरश्च विपश्च पाकोन्मुखहृद्व्रणश्च ।
महद्विनिन्दा च खलोदितश्च पदैव मर्माण्यवसादयन्ति ॥ ७९

**माला स्यात् पूर्वपूर्वश्चेदुत्तरोत्तरमृच्छति ॥ २६५ का—**

माला मालादीपकम् । यथा—

हरिसन्दर्शनेति—अत्र मनसः कठोरत्वं कृष्णसान्निध्ये द्रवत्वञ्चेति धर्मद्वयं दार्ष्टान्ते, दृष्टान्तेऽपि शिलायाः कठोरत्वं चन्द्रसन्निधौ च द्रवत्वञ्चेति धर्मद्वयम्, अतोऽत्र धर्मद्वयस्योभयत्र प्रतिबिम्बवद्भासनमेकजातीयभासनमित्यर्थः । प्रेयसीति—न हि मीलति मुद्रिता भवतीत्यर्थः । तथा च यथा चन्द्रोदये सति नीलोत्पलानामास्याभावस्तथा प्रेयसि श्रीकृष्णे नयनयोर्विदूरे सति मम नयनयोरास्यमिति वैधर्म्यम्, एवं सति श्रीकृष्णस्योदये ममाप्यास्याभावः, अतः साधारणधर्मस्यैकजातीयभासनम् । एवं सति ।

---

प्यकम् । यदाहुरन्ये 'एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगि'ति । कालिदासादिकृतिभ्योऽस्या विच्छित्तिविशेषोऽनुमीयते, अत एतस्या उपमातः पृथगाख्यानं सर्वथा सङ्गतमेव । यद्येषा प्राचीनैर्वाक्यभेदेऽप्युपमास्थितिमङ्गीकुर्वद्भिरुपमाभेदेन गृहीता तथाऽस्माभिरेतत्किरणप्रारम्भ एव दर्शितम् । वस्तुनः प्रतिवस्तुप्रथया प्रथनमित्यन्वर्थनाम्नैषा । 'तत्रापर'मिति पर्वतसामान्यसंग्रहः । दृष्टान्तस्त्वेतस्मात् पृथगेव साधारणधर्मादीनां दृष्टोऽन्तः निश्चयो यत्रेति सम्प्रदायश्रुतिप्रामाण्येन सदृशधर्मस्य प्रतिबिम्बनात् । परं नैतद्भेदकथनमाद्रियते केचित्—रसगङ्गाधरकृतस्तदनुवादिन एव । अत्रोभयत्र द्वावेव वाक्यार्थौ, उपमानोपमेयभावस्य च प्रायः प्राकरणिकाप्राकरणिकत्वाभ्यामेव ज्ञेया । एषु दृष्टान्तालङ्कारमहिम्नैव बिम्बप्रतिबिम्बभावेन प्रतीयमानमुपमानोपमेयभावमनादृत्य दृष्टान्तोदाहरणनिदर्शनादि-

आलोके सति सम्मदामृतनिधौ स्वान्तन्तदेवाविशत्,
स्वान्ते मन्मथ एष, मन्मथ इदं क्रूरत्वमुच्चैस्तराम्।
क्रूरत्वेऽपि च तस्य धैर्यहरता, तस्यां समस्तेन्द्रिय-
ग्लानिः, का सखि! सुखिताऽभिलषति श्रीकृष्णमालोकितुम्॥ ८०

प्रस्तुतानाञ्चैकदोक्तिरुच्यते तुल्ययोगिता (१९) (ठ)। २६६ का-

चकारादप्रस्तुतानाञ्च, प्राकरणिकानामप्राकरणिकानाञ्चेत्यर्थः।

यथा—दृष्टिः शून्या, गमनमलसं, मानसं निर्वसं,
देहः क्षामस्तव, सखि! मुखं केतकीगर्भपाण्डु।
श्वासो दीर्घः परिजनगणे मानमायाति राधे!
सर्वो धर्मः कथमयमभूदेकदैवान्यथैव॥ ८१

कुवलयहरिणाङ्गनाहगन्तस्मरशरमीनचकोरखञ्जरीटाः।
नयनविलसितेन राधिकाया युगपदयास्तसमस्तसौभगाः स्युः॥ ८२

चकारेणापि साऽभिमता (ठ)—२६७ का—

सा तुल्ययोगिता। यथा—
दृष्टे श्रीकृष्णवदने हारितश्च निजं मनः।
लब्धः कोऽपि परानन्दो निपीतश्च महाविषम्॥ ८३

—व्यतिरेका (२०) विलक्षणाः।

उपमानात् (ड)—२६८ का—

विलक्षण इति गुणेन दोषेण च। क्रमेणोदाहरणानि-"मानामाने
विमलहृदय" इत्यादि (इय किरणे चतुर्थश्लोकः)।

दृष्टिरिति—मानसं मनःसमभिप्रेतादिकं निर्वसनं कौतिवत्सम्भारविरतम्।—दीर्घ
मायाति दीर्घम्, अत्र सर्वं यथायं प्रकृताः। कुवलयेति—इन्दीवरः राजन:। अत्र सर्वे
इत्यादौ अप्रकृताः।

यथा वा—राधे ! सुधांशुरेवायं सत्यमेव तवाननम्।

किन्त्वसौ मलिनोऽङ्केन सुनिर्मलमिदं सदा ॥ ८४

दुरापलोके च नवानुरागो हालाहलस्यापि समं विशाखे !

अन्यन्तु मन्त्रौषधिरत्नसाध्यं हा हन्त केनापि कदापि नायः ॥ ८५

**—द्वयोरुत्कर्षापकर्षार्थशंसिनोः। (ङ)**

**हेत्वोरुक्तौ तयाणां वाऽनुक्तौ शब्दार्थशक्तितः।**

**आक्षिप्ते सति च श्लेषे स स्याद्बहुविधः पुनः ॥ २६९ का—**

द्वयोरुपमेयोपमानयोरुपमेयस्योत्कर्षं उपमानस्यापकर्षः, तयोरुक्ती—द्वयोरुपमेयोपमानयोरुत्कर्षापकर्षयोरनुक्तिः, उपमेयस्योत्कर्षस्य वाऽनुक्तिः, उपमानस्यापकर्षस्य वाऽनुक्तिः, इति त्रितयं मिलित्वा चत्वारो भेदाः। एते च शब्दप्रतिपादिता अर्थप्रतिपादिताश्चेत्यष्टौ। आक्षिप्तेऽप्यौपम्ये चत्वारः—एवं द्वादश। पुनः श्लेषे द्वादशेति चतुर्विंशतिभेदाः। क्रमेणोदाहरणानि—

आह्लादकस्य सुरभेर्मुखस्य तव राधिके !

चन्द्रस्य कमलस्येव नाड्ढी न असजस्रता ॥ ८६

अत्रोपमेयस्योत्कर्षं उपमानस्यापकर्षः, द्वयोरेवोक्तिः।

तवाननस्योपमानं न चन्द्रो न च पङ्कजम्।

अक्ष्णोरप्युपमानन्ते न राधे ! खञ्जनादयः ॥ ८७

अत्र द्वयोर्द्वरनुक्तिः।

मुखस्य तव पद्माचि ! कलङ्की न समः शशी।

वचसो न च तुल्यं ते माक्षिकत्वेन माक्षिकम् ॥ ८८

व्यतिरेक इति—वैलक्षण्यमाधिक्यम्। औपम्य उपमानधर्मे आक्षिप्ते उपमानबोधकेवादिशब्दमन्तरेणाक्षेपालभ्ये सतीत्यर्थः—तस्य पुनश्चत्वारो भेदाः। मुखस्येति—माक्षिकं मधु माक्षिकत्वेन मक्षिकाहृतत्वेन।

त्रयाणामिति—कुत्रचिद्व्यतिरेकस्थले उत्कर्षापकर्षयोर्द्वयोरनुक्तिः, एवं कुत्रचिदुपमानस्यापकर्षस्यानुक्तिः, तथा कुत्रचिदुपमेयस्योत्कर्षस्यानुक्तिरिति त्रयाणामित्यर्थः। पूर्वोक्त 'आह्लादक'मिति पद्ये द्वयोरेवोक्तिः— इत्यनेन चत्वारो भेदा ज्ञेयाः।

---

माङ्दीपकमिति दण्डिलक्षणमस्य प्राचीनालङ्कारिकनये बहुलप्रसारत्वं दीपादिव पदार्थजातस्य प्रकाशकत्वञ्च सारयति। परमुद्भटाद्या नैतत् मर्ममतिविद्ध सततं विच्छिन्याधायकं

अत्रोपमेयस्य नोत्कर्षोक्तिः ।

आह्लादकस्य सुरभेर्मुखस्य तव राधिके ! ।
नोपमानं भवेदिन्दुर्न च पङ्केरुहं प्रिये ! ॥ ८९

अत्रोपमानस्यापकर्षानुक्तिः । एते चत्वारो भेदाः ।

आह्लादकं सौरभवद्वदनं तव राधिके ! ।
सकलङ्केन्दुवन्नैव नैव स्थलजलाब्जवत् ॥ ९०

अत्र तुल्यार्थेन वतिनाऽर्थप्रतिपाद्यमौपम्यम् । एतच्च पुनस्त्रयाणामनुक्तौ पूर्ववदनेन सह चत्वारः—इत्यष्टौ ।

शनैश्चलन्ती चरणद्वयेन सा दासीकृताम्भोरुहकाननश्रिया ।
मुखेन राधा सहजामलत्विषा जिगाय चन्द्रं समलं कलङ्कतः ॥ ९१

अत्रेवादिशब्दमन्तरेणाक्षिप्तोपमा । इयमपि पूर्ववदुत्कर्षाद्युक्त्यनुक्त्योश्चतुर्धा । तेन द्वादश भेदाः । एते च पुनः श्लेषगतत्वेन द्वेधा—इति चतुर्विंशतिः । कियन्त उदाह्रियन्ते—कामकार्मुकमेवेदं राधे ! तव युगं भ्रुवोः ।

गुणस्यायोगसंयोगौ यत्र नैवान्यचापवत् ॥ ९२

अत्रेवार्थे वतिः । 'गुण'शब्दः श्लिष्टः ।

सदादानः स्निग्धकरः श्रीकृष्णः परवारणः ।
नान्यद्वारणवद्बाले ! पद्मिनीगणभञ्जनः ॥ ९३

कामकार्मुकेति—नान्यचापवत् अन्यचापे गुणस्य प्रतिज्यायाः (१२) कदाचिद्योगः । भ्रूधनुषि तौ नस्तः किन्तु सदा गुणस्य संयोग एव । श्लेषेण माधुर्यादेः ।

हे बाले ! हे राधे ! अयं श्रीकृष्णः परवारणः परान् शत्रून् वारयतीति पक्षे मत्तहस्ती । कथम्भूतः ? सदा दानं यस्य तथाभूतः, हस्तिपक्षे दानं मदजलं, करः शुण्डः । किन्तु श्रीकृष्णोऽन्यवारणवन्न भवति, यतः स पद्मिनीगणभञ्जनः, श्रीकृष्णरूपवारणस्तु पद्मिनीगणरञ्जनः—श्लेषेण पद्मिनी सल्लक्षणाक्रान्ता स्त्री ।

---

मन्यन्ते प्राचीनमुख्याचार्चीनानां मम्मटादीनां निबन्धेष्वस्यालङ्कारस्य मद्दिमाऽकर्षः संघटितः । दण्डिना तु यः कारकदीपकाख्यो भेदस्तं दीपक एवान्तर्भाव्याधुनिकनिरुक्ततुल्ययोगिताऽपि सहोक्त्येव प्रतिपादिता तत्प्रथामनुसरद्भिरर्वाचीनैरपि कारकदीपकं नालङ्कारान्तरं मन्यन्ते, परं मम मतः सम्यङ् मालादीपकवदस्य पृथगलङ्कारतैव योग्या, न दीपकेऽन्तर्भक्तिरुपमागर्भतायाः नवीनैर्दीपकस्य जीवातुतया भणिताया इहाभावात् । तुल्ययोगितेति

(१२) 'मदहाना' इति विकल्पाकारपाठो मुद्रितपुस्तके ।

अत्र तुल्यार्थे वतिः—'दान'कर'वारणा'दिशब्दाः श्लिष्टाः ।

हरवन्न तनुशिवोऽयं रविवन्न कुमुद्वतीग्लपनः ।
अशिवन्नाप्यनवस्थितकलाकलापः स एव सखि कृष्णः ॥ ९४

अत्रापि तुल्यार्थे वतिः—'तनुशिवा'दयः शब्दाः श्लिष्टाः ।

राधाऽऽश्लेषादिषु सदा निरतः सततोदयः ।
पूर्णं कलाभिरनिशं जिग्ये कृष्ण ! सुधाकरम् ॥ ९५

अत्राक्षिप्तोपमा । 'राधा'दिशब्दाः श्लिष्टाः-इत्यादयोऽनुसन्धेयाः ।

**आक्षेपो(२१) वक्तुमिष्टस्य यो विशेषविवक्षया ।**
**निषेधो वक्ष्यमाणत्वेनोक्तत्वेन च स द्विधा (ढ)॥२७०का—**

आक्षेपनामाऽलङ्कारः । क्रमेणोदाहरणे—

दुर्लील ! लीलया त्वं हरसि कटाक्षेण जीवितं सुदृशाम् ।
अविमृश्यकारिणीनामुचितमिदं किं भणिष्यामः ॥ ९६

हिमकरकिरणासारो घनसारो गन्धसारोऽपि ।
तव विरहे निर्दयता दहति किमेभिस्त्वयि प्रोक्तैः ॥ ९७

अयं श्रीकृष्णो महादेववन्न तनुशिवः तनौ देहे शिवा दुर्गा यस्य तथाभूतः, अर्द्धनारीश्वरो यथा महादेवस्तथाभूतो नेत्यर्थः । श्लेषेण तनु स्वल्पं शिवं कल्याणं यस्य तथाभूतो न, अपि तु बृहत्कल्याणविशिष्ट इत्यर्थः । तथा सूर्यवन्न कुमुद्वतीग्लपनः, अपि तु कुमुद्वतीनां हर्षकरः, श्लेषेण कौ पृथिव्यां मुत् प्रीतिर्विद्यते यासां कुमुद्वत्यो हर्षवतीनां स्त्रीणामानन्दकरः । शशी यथा न अवस्थित एकरूपः कलाकलापो यस्य तथाभूतः, तस्य तु कला कदाचिद्भवति कदाचिद्ध्रसति, अत एव न सदैकरूपः, कृष्णस्तु तथाभूतो न, अपि तु सदैकरूप एव । श्लेषेण कला, वैदग्ध्यादयः ।

अयं श्रीकृष्णश्चन्द्रं जिग्ये । जये कारणमाह—राधिकाया आश्लेषाधरपानादिकर्मसु सदा नितरां रतः, चन्द्रस्तु कदाचिद्राधानक्षत्रे कदाचिदश्लेषानक्षत्रे रतः, न तु सदा । अयं सततोदयः, चन्द्रस्य तु कदाचिदुदयः कदाचिदनुदयश्च । अयं कलाभिर्वैदग्ध्यादिभिरनिशं सर्वदा पूर्णः, चन्द्रस्तु पूर्णिमायामेव ।

---

तुल्ययोगिताऽन्वयो यत्रेति निर्वचनम् । तुल्ययोगितायां दीपके चोभयत्रोपमा गुणीभूततया चकास्तीति न सा चमत्कृतिमतीत्यालङ्कारिकचक्रसिद्धान्तः । प्राचीनानां स्तुतिनिन्दार्थं यत् समीकृत्य वर्णनं तस्य तुल्ययोगिता, इतरस्य तु तुल्ययोगोपमेत्युपमाप्रपञ्चतया स्वीकृतिः । कस्यचित् प्रकृतत्वे दीपकं अन्यथा तुल्ययोगितेति राद्धान्तः । इष्टमिति परमतेऽत्र सहोक्तिर्यङ्गरा ।

**हेतुरूपक्रियाऽभावे फलं यत् स्याद्विभावना (२२)॥२७१का—**

विभावनानामाऽलङ्कारः । फलं फलप्राकट्यम् । अभावे निषेधे (ढ) ।

यथा—प्रियालोके राधा कुसुमचयने कौतुकवती

धुनीते सत्रासं करतलमदष्टाऽपि मधुपैः ।

अखिन्नाऽपि श्वान्त्याऽश्वयति भुजयाऽलीभुजगिरः

पराहत्ता पश्यत्यधृतवसनाऽपि प्रनतिभिः (ढ) ॥ ८८

**विशेषोक्तिः(२३) कारणेषु सत्सु कार्य्यस्य नोदयः ॥२७२का—**

विशेषोक्तिनामालङ्कारः ।—यथा—

उदेतीन्दुः पूर्वो वहति पवनश्चन्दनवनात्

कुहूकण्ठः कण्ठात् कलमविकलं निर्गमयति ।

वक्तुमिष्टस्य यथाऽलीशाहरणे सख्याः कृष्णे प्रीत्यतिशयस्य 'हे सखि ! निर्दये श्रीकृष्णे त्वया प्रीतिः कथं कृते'ति यो निषेधः स एवाक्षेपः। किं भविष्यामि इति वक्ष्यमाणत्वेनाक्षेप उक्तः। हिमकरश्चन्द्रस्तस्य किरणानामासारो धारासम्पातः, घनसारश्चन्दनः, गन्धसारः सुगन्धिपदार्थमात्रम्'। तां मम सखीम्। त्वयि निर्दयत्वेन प्रसिद्धे एभिस्तस्या दाहकैः पूर्वं प्रोक्तैः किं प्रयोजनमित्यर्थः, अनोक्तत्वेनाक्षेप उक्तः।

हेत्विति—तथा च कारणाभावे कार्योत्पत्तिविभावनेत्यर्थः। वृन्दावनमध्ये स्थिता श्रीराधाऽकस्मात्तत्र श्रीकृष्णदर्शने सति पुष्पाद्युच्चयने कौतुकवती प्रवृत्तेत्यर्थः। भ्रमरैरदष्टाऽपि सत्रासं यथा स्यात्तथा भ्रमरविद्रावणार्थं करतलं कम्पयति। अत्र भ्रमरदंशनरूपकारणं विनैव कार्यस्य करतलकम्पनस्योत्पत्तिः। श्रमजन्यखेदरूपकारणं विनैव भ्रमरदूरीकरणार्थं भुजया मस्तोल्कम्पं श्वयति। प्रनतिभिर्लताकण्टकैः। पराहत्ता सती पृष्ठदेशं पश्यति। प्रथमतोऽकस्मात् कान्तमिलने सति नायिकायाः स्वभाव एवायमिति भावः।

---

(ञ) विलक्षण इति गुणेन दोषेण चेति शेषः। साम्योद्देशपुरःसरं यत्र वैधर्म्योद्बोधन एव तात्पर्यं तत्रैवायमलङ्कारः। एतेन 'उपमेयस्याधिक्य एव व्यतिरेक' इति मम्मटादिमतं प्रत्युक्तम्। मम्मटमतमनुसरन्तो रसगङ्गाधरकृतचन्द्रिकायाम्'अत्यन्तासारतया तु नानुवाद-मर्हतीत्युपरम्यत' इति सोत्प्रासकटूक्तिपूर्वं विध्वस्ताः। एवमप्यापाततो गुरुमर्मप्रकाशिन्यां नागोजीभट्टाः। यत्तु 'उपमानादुपमेयस्यापकर्षं उपमेवे'ति केचिदवोचंस्तदेतं वक्तव्यं नात्र प्रकृत उपमायामिव साम्यवाचने तात्पर्यम्, अपि तु वैधर्म्यप्रकटन एव। इयोस्तु कर्षापकर्षेति—अत्र कारिकायां यतिभङ्गः स्फुटः।

(ढ) आक्षेप इति सामान्यतो योगरूढं नाम, अप्रस्तुतप्रशंसादावर्थालङ्कारान्तरेऽप्याक्षिप्तमर्थमेव प्रमाणीकृत्य विच्छित्तिव्यवस्थितेर्घटकत्वात्। निषेध इति निषेधाभास इति

प्रियालीनां मूर्द्धः प्रथयरचना दन्तलग्नता
पादोपान्ते कृष्णस्तदपि तव मानो न विरतः ॥९९

एषाऽनुक्तोक्ताचिन्त्यनिमित्तत्वात्त्रिधा । अनुक्तनिमित्तेषा तूक्ता । अन्ये दर्श्येते ।

भक्तानुकम्पार्थमजोऽपि जातो लीलाकृते गर्भजगच्च गर्भे ।
जगद्धितायैव जगत्त्रयस्य पिता यशोदातनयो बभूव ॥१००

अत्राजत्वादेः कारणत्वेऽप्युक्तनिमित्तत्वादजत्वादिकार्याभावः ।

कृष्णस्य चञ्चलकटाक्षशरेण भिन्नं शूलाकरोषि हृदयं त्वमनङ्ग ! किन्न ।
भस्मीकृतस्य भवतो वृषभध्वजेन किं भक्तसाम्यमिह कृतो बत बाहुदर्पः ॥१०१

## यथासंख्यं(२४) यथासंख्यं क्रमिकाणां यदन्वयः(ढ) ॥२७३का—

क्रमिकाणां वाचकानां यथासंख्यं यदन्वयस्तदा यथासंख्यमित्यलङ्कारः ।

यथा—गोपीश्च गोपतनयांश्च सुरद्विषश्च रूपेण च प्रियतया च भुजौजसा च ।
सङ्क्षोभयंश्च रमयंश्च निषूदयंश्च श्रीगोकुलेन्द्रतनयो व्रजमध्यवात्सीत् ॥१०२

एषा विशेषोक्तिः । अनुक्तेति—पूर्वश्लोके कारणसत्त्वेऽपि मानविरामरूपकार्यस्यानुक्तौ किञ्चिन्निमित्तं नोक्तमित्यतोऽनुक्तनिमित्तोक्ता । लीलाकृते लीलाकरणाय । अजोऽपि जात इत्यजत्वकारणसत्त्वेऽपि जन्माभावरूपकार्यस्याभावः, तथा गर्भे जगदस्य तथाभूतोऽपि गर्भे जातः, एवं जगत्त्रयस्य पिता सन्नपि यशोदासुतो बभूव यत्र निमित्तं जगद्धितमिति । शूलाकरोषीति—शूलात् पाके डाच्, शूलायेव विद्धा पचसीति । अत्र देह-

---

यावत् । प्राकरणिकत्वाप्राकरणिकत्वाभ्यामेतस्य प्राधान्ये: कैश्चित् प्रतीयमानार्थजीवातुतया श्लोकस्य 'भ्रम धार्मिक' इत्यादिपद्ये संलक्षितात् ध्वनेर्विशेषो ध्वन्यालोकादौ विचारितः । इत्येवमङ्गिविध्याभासतया लक्षितस्यास्यैव भेदान्तरस्य चमत्कारो नापलपनीय इति बोऽपि यत्न इत्यलम् । विभावनेति—विभाव्यते परिकल्प्यते कारणान्तरं यत्रेति कृत्वा संज्ञासंज्ञिनोरभेदः । विना कारणमुपनिबध्यमानोऽपि कार्योदयः किञ्चिदन्यत् कारणमपेक्ष्यैव भवितुं युक्त इति कारणान्तरोद्भावनचेष्टा । वस्तुतस्तु काव्यगतालौकिकत्वविच्छित्तिरेवैतेषामलङ्काराणां प्राणाः । तस्य विविधा भेदास्तद्विचाराश्च कुवलयानन्दे तन्मतध्वंसनपरे रसगङ्गाधरे च द्रष्टव्याः । विभावनाविशेषोक्त्योः सङ्करत्वेनावस्थितिरित्यनेके नवीनालङ्कारिकाः । प्राचां विशेषोक्तिस्त्वितो द्राक् भिन्नैव । परात्त्वेत्यादि—अत्र शाकुन्तले प्रथमाङ्कशेषे व्याधनराजविरहखेदमनुभवन्त्या नायिकायाश्चेष्टादयो मूलत्वेनोच्चोच्चतया कृता इति काव्यरसरसिकानामगूढमेव । यथासङ्ख्यमिति—अन्वयन्यायमूलकस्यास्य विच्छित्तिमत्त्व एवालङ्कारत्वस्वीकारः । विच्छित्तिस्तु बहुशस्तत्रत्यैव यथा लक्ष्येषु प्राचामश्वघोषादीनां प्रबन्धेषु (बुद्धचरिते ५।२४।।१४१) । एवमपि परिवृत्तिपरिसंख्याऽदिष्वपेयमूह्यम् ।

यस्मिन् विशेषः सामान्यं समर्थ्येत (13) परेण यत् ।

साधर्म्यादथ वैधर्म्यात् स न्यासोऽर्थान्तरस्य(२५)हि(ग)॥२७४का-

स अर्थान्तरन्यासनामाऽलङ्कार इत्यर्थः । परेणेति विशेषः सामान्येन सामान्यं विशेषेणेत्यर्थः । साधर्म्याद्विशेषः सामान्येन यथा—

त्वमेवाद्या सृष्टिस्त्वयि भगवतः केलिशयनं
त्वया सर्वो लोकः परिहरति तृष्णापरिभवम् ।
त्वयाऽपूतः पूतो भवति तदपि त्वं घनरस !
क्रमान्नीचोभावं व्रजसि, महतामेष महिमा ॥१०३

"महतां नैष महिमे"ति वैधर्म्यादपि ।

साधर्म्यात् सामान्यं विशेषेण यथा—

सङ्केतस्ता नमिते । भगामो दु खं हि नान्यत् प्रियविप्रयोगात् ।
ते पामरा हन्त सुहृद्वियोगात् प्रागेव येषां न समागमायुः ॥१०४

"ते सुखमा एव सुहृद्वियोगात् प्रागेव येषामपयातमायु"रिति वैधर्म्येऽपि ।

## विरोधः(२६) स विरोधाभः (घ)—२७५ का—

विरोधाभ इति वस्तुतो न विरोधः, विरोध इव भासत इत्यर्थः ।

अम्भोधरवक्रस्कारणत्वेऽपि हे हेकदेशत्वाद्दूरपर्यम्भोभावस्वरूपकार्यस्याभावः—अत्र निमित्तमशेषम् । हे घनरस । जल । आद्या सृष्टिरिति प्रथमतो गर्भेदजलस्य सृष्टत्वात् । केलिशयनमिति भगवतो जलशायित्वप्रसिद्धेः । नीचैर्भावं नीचत्वभावं प्राप्नोषि, जलस्य नीचगामित्वप्रसिद्धेः । सामान्यधर्मेण विशेषधर्मरूपार्थान्तरस्याथमाह —महतामिति । सर्वोत्कृष्टत्वेऽपि नीचस्वभावोऽयं निकृष्ट इति स्वभावो महिमा उत्कर्ष एवेत्यर्थः । वैधर्म्यादिति—यस्मिन् पक्षे सर्वगुणविशिष्टस्य नीचस्थलगामित्वरूप एष धर्मो महतां महिमा उत्कर्षो नेत्यर्थः । ते पामरा दुःखिनः, अत्र दुःखयोः साधर्म्ये, 'ते सुखमा' इत्यत्र सुखदुःखयोर्वैधर्म्यम् ।

(घ)। अर्थान्तरन्यास इति मम्मटीयं संज्ञा । यदत्र 'सामान्यं सामान्येन यत् समर्थने स उभयन्यास' इति काव्यानुशासनकृद्वाग्भटाद्याः 'यस्मिन्विशेषसामान्यविशेषाः स विकस्वर' इति च चन्द्रालोककृत इत्यलङ्कारान्तरं मन्यन्ते तत्त्वतिरिक्ततरं किमपि, समर्थनस्य विरचितत्वेऽर्थान्तरन्यासेनैव गतार्थत्वात् । सर्वस्वकृदनुसारिभिर्विश्वनाथविद्यानाथदाभिस्तु कार्य्येन कारणस्य कारणात् कार्य्यस्य च समर्थनेऽप्यर्थान्तर

(13) "समर्थ्यते" इति (क) (ज) पुस्तकयोर्विद्यमानः पाठः ।

—जातिर्जात्यादिभिर्गुणैः।
विभिद्राभ्यां क्रिया, द्रव्यं द्रव्येणैवेति ते दश ॥२७५का—

जात्यादिभिश्चतुर्भिर्जातिर्विरुध्यते, गुणो गुणक्रियाद्रव्यैः, क्रिया क्रियाद्रव्याभ्यां, द्रव्यं द्रव्येणेति दश। क्रमेणोदाहरणानि—

हिमकरकिरणासारो घनसारो गन्धसारोऽपि।
त्वयि मनसोऽन्यवर्तिनि सम्प्रति दावानलस्तावान् ॥१०५—इति जातिर्जात्या।

गुणरत्नरोहणभुवः कृष्ण! तवाग्रे स्मरोऽपि बीभत्सः।
रत्नाकरोऽपि गाधो न रत्नसानुस्त्वयोन्नतिमान् ॥१०६—अत्र जातिर्गुणेन।

यदङ्गमासाद्य विधूसराय गोधूलयो भूषणतामुपेयुः।
विभूषणानां मणयश्च जग्मुर्विधूसरत्वं स उपैति कृष्णः ॥१०७

अथ जातिः क्रियया।

हे कृष्ण! त्वयि मनसोऽन्यवर्तिनि स्मरणावस्थतां प्राप्ते सति चन्द्रकिरणादिस्तावान् सर्वोऽपि शीतलः पदार्थः सम्प्रति दावानलो भवति—हिमकरकिरणजातिदावानलजात्योर्विरोधः। स आभासरूप एव, न तु वस्तुतो विरोधः। श्रीकृष्णविरहे तेषामुद्दीपकत्वेन दावानलवत्तासां प्रतीतिर्भवति, न तु वस्तुतो दावानलो भवतीति। रोहणभुव उत्पत्तिस्थानस्य। कन्दर्पत्वजातिर्बीभत्सत्वगुणेन विरुध्यते, नहि कन्दर्पः कदापि बीभत्सो भवतीति विरोधः। गाम्भीर्यगुणेन समुद्रोऽपि त्वदग्रे गाधः अल्प एव, न त्वगाधः, समुद्रजातिरल्पत्वगुणेन विरुध्यते, नहि समुद्रः कदाचिद्गाधो भवतीति विरोधः। एवमग्रेऽपि। रत्नसानुः सुमेरुपर्वतो नोन्नतिमान् नोच्चतरः, अपि तु क्षुद्र एव। यदङ्गेति—भूषणतां भूषणधर्मं चाकचिक्यम्। अत्र धूलित्वजातिर्भूषणस्य रत्ननिष्ठस्य उत्पद्यमानचाकचिक्यक्रियया विरुध्यते, न हि धूलयः कदापि रत्ननिष्ठनेत्रचमत्कारिचाकचिक्यक्रियाऽऽश्रया भवन्ति। यथा दीपानां प्रतिघातं ज्वलनक्रिया उत्पद्यन्ते

---

न्यासत्वमुररीकृतम्। रसगङ्गाधरकारास्त्विमं भेदं काव्यलिङ्गेऽन्तर्भावयन्ति—तदाक्षेपिका युक्तयस्तत्समाधानपद्धतिश्च दर्पणादेवावलोकनीयाः। विरोध इति—अस्य साधारणप्रत्यत्वेऽप्यसाधारण्यं प्रतीच्यसाहित्यशास्त्रप्रतिरोधितं, तदाधारकेषु ग्रन्थेष्वपि केषु समीक्ष्य विनिवेशनम्। यदाहुः—

*Antithesis, perhaps the most direct form of contrast, has an appeal more purely intellectual than most figures of speech ··· Antithesis depends for its effect not only upon contrast, but upon balance—the scales must be evenly weighted.*

स्वभावोक्तिः(२७) स्वभावस्य वर्णनं यत् (त)—२७६ का—

यथा—'धाराज्ञानुकरोपसर्पणपर' इत्यादि (५म किरणे १०म श्लोकः)।

यथा वा—जृम्भस्व तात ! मुखमाकलयामि दन्ताः
कत्युद्गता भवत इत्युदिते जनन्या ।
स्मित्वा विकाशितमुखस्य हरेर्जयन्ति
द्रोणप्रसूनकलिका इव केऽपि दन्ताः (त) ॥११४

यथा वा—स्वभावसुन्दरः कृष्णो राधा सहजसुन्दरी ।
अन्योन्यमनयोः प्रीतिरखिलोत्सवकारिणी (त) ॥११५

—मुखे स्तुतिः ।

निन्दा वा हृदये व्याजस्तुतिः(२८) स्यात्तदन्यथा(त) ॥२७७का

स्तुतेर्निन्दा निन्दायाः स्तुतिरित्यर्थः । क्रमेणोदाहरणे—

न निःस्पृहस्तत्पदयो विरक्तः स्वकीयकीर्त्तावपि नानुरक्तः ।
दिङ्मात्रनिष्पाद्यपरोपकारे न कृष्ण ! कीर्त्तिं स्फुटीकरोषि ॥११६

अत्र मुखे स्तुतिरन्तर्निन्दा ।

विरोधः । विभाव्यत इति—अनङ्गमङ्गरहितं वस्तु साङ्गमङ्गवत्क्रियायुक्तं करोतीति विरोधः । वस्तुतस्तु अनङ्गं कन्दर्पं साङ्गं सम्भोगस्य यावन्त्यङ्गानि तद्विशिष्टं करोतीत्यर्थः । अपरासुखे सन्ध्यायां वीक्षितो नेत्राणां चञ्चद् उत्सवदो भवति । स्वयीति—सन्ध्याकाले वनागमनसमये यः कन्दर्पो व्रजसुन्दरीणां रतिं रमणं च सुरतसम्भोगमिति यावत् । स एव सारस्त्वयि नेत्रद्वारा व्रजसुन्दरीणां मनोऽन्तर्वर्त्तिनि सति तत्सम्भोगतृष्णयाऽग्निरभूत् । नहि रसास्वादहेतुः कन्दर्पः कदापि वन्ध्यो भवतीति विरोधः ।

स्वदङ्घ्रीति—चिरन्तनस्यानादिकाल एव प्राप्तस्य स्थूलसूक्ष्मदेहद्वयस्य देहद्वयनाश एव मोक्षः । तथापि तदङ्घ्रिजनस्य कोऽप्यचिन्त्यः प्रभावो यदयं भजनारम्भकाल एव भक्तस्य संसारं

(त) स्वभावोक्तिरिति—आचार्यदण्डिनैवास्य साम्राज्यमाविष्कृतचरमिति प्रागेवास्माभिरुद्दिष्टम् । अत 'इह वस्तुस्वभाववर्णनमात्रं नालङ्कार' इत्यादि युक्तिसरणिः सदैवान्यतो ग्राह्या । एवं सति 'स्वभावसुन्दर' इत्यादिग्रन्थस्थपद्ये एतदलङ्कारस्थापने विचिकित्सा नासङ्गता । 'दन्ताः' इति प्राचीनपद्ये पुनर्वचनं न सुष्ठु । व्याजस्तुतिरिति—स्तुतेःस्तुत्यन्तरे निन्दाया निन्दान्तरे च गम्ये द्वयमेवालङ्कृतिरिति कुवलयानन्दकारादीनामाकूतम् । तत्राद्ये 'हंस' 'जीवन्ति हरिणाः' इत्यादि दक्षिणपद्येऽप्रस्तुतप्रशंसैवेति बहवो नवीनाः, द्वितीयस्थले व्याजनिन्दाख्योऽतिरिक्तोऽलङ्कारः कैश्चिदर्वाचीनैः स्वीकृतः । परमतिसूक्ष्मभेदमेतन्नावलङ्कार-

त्वदङ्घ्रिमूलं भजतां मुकुन्द । लाभोऽस्तु दूरे वपुषो निजस्य ।
चिरन्तनस्यापि भवेद्विनाशः स्वभाव एवैष तव प्रसिद्धः ॥ ११७

अत्र मुखे निन्दाऽन्ते स्तुतिः । उभयथैव व्याजस्तुतिः ।

यथा— वक्त्रं वा द्विजराजहिंसि मदिरालोलं दृशोर्युग्मकं
कान्तिः काञ्चनहारिणी विहरणं गुर्वङ्गनासङ्गतम् ।
सङ्गी पञ्चम एव पञ्चविशिखः शुद्धिस्तथाऽपीह वो
दैत्यं यन्न्यवधीद्वृषाकृतिमयं तेनैव दुष्टो हरिः ॥ ११८

इति यद्यपि व्याजस्तुतिः, तथाऽपि शब्दालङ्कार एवासौ, तेनायमुभयथैव ।
इयं विदूषकस्यैवोक्तिः ।

## सहोक्तिः (२९)सा सहार्थेन शब्देनैका क्रिया यदि(त)॥२७८का-

यथा—श्वासैः सार्द्धं विरहिहृदयां दैर्घ्यमापू रजन्यः
साकं देहैरहह । क्षयतां वासराः सम्प्रतीयुः ।

नाश्रयति। कदाचिदरिष्टासुरवधानन्तरं श्रीराधिकाया आगतं श्रीकृष्णमालोक्य श्रीराधिकाललिताप्रभृतिसखीः सकोध्याह, भोः सख्य, मम त्वदा श्रीकृष्णोऽरिष्टवधः कृतः, इत्यस्य स्पर्शो भवतीभिर्न कर्त्तव्य इति श्रुत्वा राधां प्रति विदूषकः कृष्णस्य सखा मधुमङ्गल आह—यत्विति—भोः राधिके ! यूयं महापातकिन्यः श्रीकृष्णेन तु जन्ममध्ये एकं पापं कृतम्, तदपि पापाभासमेव, यतोऽयमसुरो मायया वृषाकृतिर्भवतीति। अत्र तासां पञ्च महापातकानीति हृदये प्रशंसात्वेऽपि निन्दामुखेनाह,—वक्त्रं द्विजराजो ब्राह्मणश्चन्द्रस्तस्य हिंसकमिति ब्रह्महत्या, प्रशंसापक्षे द्विजराजश्चन्द्रस्तस्य निन्दाप्रयोजकत्वेन हिंसकम्। दृशोर्युग्मकं मदिरया लोलमिति सुरापानं, पक्षे मदिरा खञ्जनस्तद्वच्चञ्चलम्। काञ्चनहारिणीति स्वर्णस्तेय, पक्षे सुवर्णमिव मनोहारिणी। गुर्वङ्गनासङ्गतमिति गुरुदाराभिगमः, पक्षे गुर्व्यामङ्गन एव आसङ्गतं कुलवतीत्वाद्बहिर्गमनाभावात्। अतो दुष्टो वा देवो वेति तत्त्वं न जानीथेति ध्वनिः। पञ्चविशिखः कन्दर्पस्तद्रूपश्च सङ्गी एव पञ्चममहापातकरूपः, पक्षे कन्दर्पः। उभयथेति—व्याजस्तुतौ शब्दालङ्कारे चेति प्रयोगो ज्ञेय इत्यर्थः।

---

भेदघटकत्वे बोध्यत्वेन ग्राह्यम्। पञ्च महापातकानीति—तथाच मनुः 'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुस्तत्संसर्गश्चापि पञ्चमम्। शब्दालङ्कार एवासौ, अनुप्रासबहुलत्वेनैव विच्छित्तिविशेषप्रकटनादित्याशयः। सहोक्तिः—अत्र सर्वसहृतां मतेऽर्थोपस्कारकत्वं विनिगमकं, न तदिति तु साम्प्रदायिकाः। विरहेण विनैवेति—" न विना

वाष्पाम्भोभिः सह हिमपयःप्रस्रवाः (14) पेतुरस्रै-
र्हा धिक् प्राणैः सह कमलिनीकाननं म्लानमासीत् ॥ ११९

**विनोक्तिः(३०)सा विनैकेनान्यस्य चेत् सदसत्कृतिः(त)॥२७९का-**

विनोक्तिनामाऽलङ्कारः। सत्कृतिः शोभनता, असत्कृतिस्तदन्येति द्विधा। क्रमेणोदाहरणे—

विरहेण विनैव शोभते ललिते! प्रेम निसर्गशोभनम्।
असुभिर्व विनैव शोभते विरहर्षेहत सम्भवद्दशः॥ १२०

विना राधां कृष्णो न खलु सुखदः, सा न सुखदा
विना कृष्णं, द्वाभ्यामपि बत विनाऽन्या न सरसाः।
विना रात्रिं नेन्दुस्तमपि न विना साऽपि रुचिभा-
ग्विना ताभ्यां जृम्भां दधति कुमुदिन्योऽपि नतराम्॥ १२१

**समासमाभ्यां निमयः(३१) परिवृत्तिरुदीर्य्यते(त) ॥२८०का—**

अर्थयोरर्थानां वा समेनासमेन वा विनिमयः परिवृत्तिः। समेन यथा—

हारादिभिः संलुठितैर्निजाङ्गाद्विभूषयामास पतङ्गपुत्रीम्।
तस्याः सरोजादिभिरात्मनोऽङ्गं राधाऽलिवर्गो जलकेलिकाले॥ ११२

यथा वा—एका ददुर्नूपुरनादशोभामन्याः प्रयापङ्कममन्दरत्वम्।
आभोरवालाकलहंसवालामभूद्द्वयोः किञ्चन सख्यमासीत्॥ १२१

श्वासैरिति—विरहविप्रिष्टवकसुन्दरीणां रजन्यः श्वासैः साह्र्दैर्घ्यमापुः, विरहेण ताभी रात्रयः श्वासा अपि दीर्घा बभूवुः, सहार्थकसाहैशब्देनैका क्रियेति सहोक्त्यलङ्कारः। वासरा इति—कान्तविच्छेदजन्या यादृशी पीड़ा रात्रौ तादृशी दिवसे न भवति, अतस्तासां दिवसाः शीघ्रं यान्ति, तस्मादेव दिवसानामल्पत्वम्। हिमपयःप्रस्रवा रात्रिसम्बन्धिनीहार-प्रवाहाः। कमलिनीनां म्लानत्वं हिमघटाभिरेव ज्ञेयम्।

निसर्गशोभनम्, अतो विरहाद्यपेक्षा नास्ति। कान्तेन सह विरहश्चेत्तदा प्राणैर्विनैव प्रेम शोभते। विरहेऽपि प्राणास्तिष्ठन्ति चेत्तदा प्रेमैव नास्ति, कुतस्तस्य शोभनताविरहः? कथम्भूतः? सम्भवन्ती मरणपर्य्यन्ता दशा यत्र तथाभूतः। जृम्भां प्रफुल्लत्वं न दधति। इयं दृष्टान्तमिश्रिता सहोक्तिः।

---

विप्रलम्भेन सम्भोगः पुष्टिमश्नुते इति यदसविदां सूचनं न तदत्रापरूध्यते। विरहतापस्य तीव्रतापरमेतत्। अत्र प्रसङ्गेऽन्योक्तिरिति काव्यभेदप्रमाश्रिकाऽधिका काचिदलङ्कृतिर्न्यै:

---

(14) "प्रसवा" इति (ख) पुस्तके पाठः।

असमेन यथा—मनोरागं दत्त्वा चरणदलरागो मृगदृश-

स्त्वयाऽदत्तो वचःस्खलमलति यः कौसुम इव ।

रसं दत्त्वा नीता त्वदधरपुटेनेक्षणमसौ

समन्वेद्वेदग्ध्यन्तद्वयववैदग्ध्यामपि च ॥ १२४

**अतीतानागतार्थानां साक्षात्त्वमिव(३२)भाविकम्(घ)॥२८१का—**

भाविकनामाऽलङ्कारः । क्रमेणोदाहरणे—

प्रातः सखीनां पुरतः शुकीभिः कथा तथा वल्लभयोरुदारा ।

व्यधायि, तौ सा च निशा तयोः सा केलिश्च साक्षादभवन् यथाऽसाम् ॥ १२५

इदानीमेव राधाया भ्रूर्यया शुभवल्लभूत् ।

तया मन्ये स्मरस्तेयं स्वं चापं त्याजयिष्यति ॥ १२६

**पदवाक्यार्थता हेतोः(३३) काव्यलिङ्गं प्रकीर्त्तितं(ङ)॥ २८२का—**

पदार्थता वाक्यार्थता च । पदार्थता च द्विधा—एकपदार्थताऽनेकपदार्थता चेति । क्रमेणोदाहरणानि—

संसारालर्कदंष्ट्रातः पापाशीविषदंशतः ।

कृष्णनाम्नि महामन्त्रे सति मा भैष्ट माधवः ॥ १२७

अपारकरुणाम्बुधौ अरणमात्रसानुग्रहे

विधिप्रभृतिपामरावधिसमानसम्भावने ।

तवाहमिति जल्पतामखिलकामकल्पद्रुमे

हरौ निहितमानसास्त्यजत देहबन्धं जनाः ॥ १२८

हे कृष्ण ! त्वया स्वीयमनोऽनुरागं राधायै दत्त्वा तस्याश्चरणस्थमलक्तकं लिहतानि यावकराग आदत्तो गृह्यते । स्खलति भूषयति । एवं त्वदधरपुटेन स्वीयताम्बूलरसं तस्यै वैदग्ध्याय दत्त्वा वैदग्ध्यस्य कज्जलरूपमसौ स्वयं गृह्यते, अतस्तद्वैदग्ध्यं तवाधररूपपात्रयोः वैदग्ध्याधानयोः साम्यमेव ज्ञेयम् ।

अनागतार्थानां साक्षात्त्वमाह—इदानीं यौवनारम्भ एव । संसारेति—भवाभावे कृष्णनाम्नो मन्त्रस्य पदस्य हेतुता । अपारेति—समानसम्भावने तुल्यदृष्टावित्यर्थः । देहबन्धत्यागे

सौकिम्पर्ते तद्विशेषा आकर एव लभ्याः । एका इत्युक्त्यादि—अत्र 'अनीयत प्रथमपदे इत्यमि'त्यादि कुमारसम्भवपद्यस्य उपजीव्यत्वेन सद्दोषमिति प्रतिभाति ।

(घ) भाविकमिति—अत्र प्राचीनैरुद्भावितस्य भाविकाख्यप्रबन्धगुणस्य नाड़ प्रवेशः शङ्कनीयः—उभयोर्भिन्नत्वात् । भामह भट्टि भट्टोद्भटप्रभृतयस्तत्र प्रमाणम् ।

वाक्यार्थता यथा—वपुःस्थित्या ज्ञातं कपटरहितं प्रेम नहि मे
सति प्रेम्णि प्रायो न भवति वियोगः प्रणयिनोः ।
अतः प्रेम्णोऽकीर्त्तिप्रकटननिमित्ता मम जनिः
कथं नु श्रोतव्य दयित इति भूयो हरिवचः ॥ १२९

विना वाचकवाच्यत्वं यत्र वस्तु प्रतीयते ।
पर्य्यायोक्तं (२४) तत् (थ)—२८३ का—

जह्रौ श्रीकृष्णमालोक्य स्थितिं स्वाभाविकीमपि ।
दर्पः कन्दर्पहृदये मानो मानवतीहृदि ॥ १३०

अत्र कन्दर्पो निर्दर्पो, मानवत्योऽपि मानरहिता इति यद्यपि वस्तु शब्देनैव प्रतीयते, तथापि न वाचकमुखेन, न च वाच्यमुखेन । वाचकमुखेन 'अपारे'त्यादीनां चतुर्णां पदानां हेतुता । माथुरविरहपीड़या व्याकुला श्रीराधिकाऽऽह—वपुरिति । हे दयिते ! इति पदघटितं सन्देशश्रवणं मया कथं श्रोतव्यं यतो मयि तस्य दयितात्वमेव नास्ति, तद्विच्छेदेऽपि प्राणानां विद्यमानत्वादिति भावः । अत्र जनेः प्रेमाकीर्त्तिप्रकटननिमित्तत्वे 'वपुःस्थित्ये'त्यादि प्रथमार्द्धस्य हेतुत्व ।

शब्दस्य शक्तिरूपवाचकत्वं विना तथा शब्दजन्यार्थस्य वाच्यत्वरूपसामर्थ्यं विना यत्र किमपि वस्तु प्रतीयते तत्र पर्य्यायोक्तनामाऽलङ्कारो ज्ञेयः । रासोत्सवसम्बन्धिनीं श्रीकृष्णशोभां पौर्णमासीं प्रति वृन्दा वर्णयति । सर्वापेक्षया कन्दर्पोऽतिसुन्दर इति सर्वजनप्रसिद्धा स्वाभाविकी स्थितिः, तथा सुन्दरीश्रेष्ठा मानवती भवतीति च या स्थितिस्तामपि जहौ । अत्र कन्दर्पो निर्दर्पः मानवती च मानरहितेति बोधस्तु शक्तिं विनैव जायते, न हि एतादृशार्थे पदस्यास्य कस्यापि शब्दस्य शक्तिरस्ति, शक्तेरभावे वाच्यस्य सामर्थ्यं सुतरामेव नास्तीति । यदि शक्तिं विना वाचकशब्दमुखेन तादृशार्थबोधः स्वीक्रियते तदैतद्भिन्नानन्तवस्तुप्रतीतिरपि स्वीक्रियताम् (च) । ननु शक्तिलक्षणयोरभावेऽपि मुख्यार्थस्य बाधादेव लक्षणयैतादृशार्थबोधो भविष्यति—तथाहि दर्पस्याचेतनत्वेन स्वाभाविकस्थितित्यागे कर्तृत्वासम्भवान्मुख्यार्थस्य बाधः, तत एव लक्षणायाः प्रवृत्तिः सम्भवतीति चेदाह—

---

रीत्या तु भाविकस्य शब्दगुणताऽर्थगुणताऽलङ्काररूपता च पृथक् पृथगेव व्यवस्थापिता । तस्य भावो भावना पुनः पुनश्चेतसि विनिवेशः—सोऽस्यास्तीति भाविकमिति व्याकृतिः वसुदत्तेन सर्वेश्वरटीकायां या दर्शिता सैव चमत्कृतिहेतुं साधु सूचयति । प्रातः सखीनामिति—व्रजानन्दवृन्दावनस्थं पद्यं (३।३७) स्मरणीयम् । काव्यलिङ्गमिति—नैयायिकबाधितलिङ्गात् पार्थक्यं, सिद्धान्ते तत्र नूनं वैचित्र्यमेव जीवातु । उद्भटोपज्ञमेतदिति सम्भाव्यते ।

चेदमविद्यमुदा तस्यान्यार्थोऽभविष्यत्। अत्र वाचका एव शब्दा न तूक्तार्थ-व्यञ्जकाः। एवं वाच्यमुखेन चेदभविष्यमदाऽस्योऽप्यर्थोऽभविष्यत्। अथन्तु वाच्य एवार्थः, न तु व्यङ्ग्य', तर्हि सबाधमित्यपि न वक्तव्यम्। तथाहि गवि शुक्ले चलति दृष्टे, गौः शुक्लश्चल इति त्रितयविकल्पो यदेव दृष्टं तदेव विकल्प-यति, तच्चाभिन्नसंसृष्टत्वेन दर्शने भेदसंसर्गाभ्यां विकल्पयति।

—समृद्धिरुदात्तं(२५) वस्तुनः परा (घ) ॥ २८४ का-

यथा— स्नानः कामगवीषु नैव नतरां (15) कल्पद्रुमेष्वादरो
लोष्ट्राणीव लुठन्ति हन्त परितश्चिन्तामणीनां गणाः।

गवीति। शुक्लगुणविशिष्टे चलनक्रियायुक्ते गवि दृष्टे 'गौः शुक्लश्चल' इति प्रयोगात् गोत्वजातिशुक्लगुणचलनक्रियाणां विकल्पो बोध्यो भवति, अत्र यदेव पिण्डमात्रपूर्वं दृष्टं तदेव विकल्पयति शाब्दबोधे विषयीकरोतीत्यर्थः। अत्र 'गो'पदस्य गोत्वजातिरूपेण शक्तिः, नतु सास्नालाङ्गूलककुदादिरूपेण पिण्डे शक्तिः, अत एव लक्षणाऽऽदीनां सुतरां नावकाशः। एवं सति शक्तिलक्षणाव्यञ्जना विना शब्दसामर्थ्या-च्छाब्दगोरूपवस्तु प्रतीयते। तथाऽत्रापि 'कन्दर्पो निर्दर्प' इति वस्तु शब्दसामर्थ्यादेव प्रतीयते। यन्मते 'गो' शब्दात् सास्नाऽऽदिरूपेण पिण्डबोधो भवति तन्मतमाल-म्ब्योक्तम्। यथा जातिशक्तिवादिमते व्यक्तौ शक्तिं विनाऽप्याक्षेपबलात् शब्दबोधे व्यक्तिभानं भवति, तथैवात्रापि शक्त्यादिकं विनाऽपि शब्दसामर्थ्यादेव तादृशार्थभानं भवतीति ध्येयम्। अयं भावः—सामान्यतः पिण्डमात्रत्वेन प्रथमं दर्शने पश्चात्तरे च 'गौ'रिति जात्यन्तरात् 'शुक्ल' इति गुणान्तरात् 'चल' इति क्रियान्तराद्भेदेन तत्त्रितय संसर्गेण च तस्य विकल्पः स्यात्, ततश्च किमपि वस्तुमात्रमिदमित्यनेन यदेवाध्यवसितं तदेव गौः शुक्लश्चलोऽयमित्यनेनाप्यभिधीयते, नतु जाति-गुणक्रियाः। तत्र जात्यादीनां भेद संसर्गयोरेव प्रतीतिमात्रमित्येतन्मात्रमधिकम्। एवमपि कन्दर्पमात्रवर्ती दर्पमात्रहानि अभूतमिति योऽयमर्थः स एव 'दर्पः कन्दर्पस्येदय' इत्यादिनाऽप्यभिधीयते, किन्तु प्रत्र वैचित्र्यमात्रमधिकं, तदेवाश्रित्यालङ्कार' प्रवर्तत इति। यथा चतुर्यानिगयोत्पलङ्कारान्तरे कविनिर्माणस्य विधिकृतनियमराहित्येन कारणोनुपपत्तेः प्रागेव कार्योत्पत्तिरुक्ता तथाऽत्रापि धर्मयोगोऽलङ्कारान्तरे शक्त्यादिकं विनैव वस्तुप्रतीतिर्भवतीति सर्वमनवद्यम्।

---

काव्यचतुरिति केषाञ्चित् प्राचां मतम्। 'एकानेकपदार्थेन'ति भेदबीजं प्रकाशकृदादृ-तमेव। हेतुस्तत्र 'हि'पद प्रयोगाविभक्त्यादिना वाच्यत्वेऽस्फुटत्वेन चमत्काराभावान्नाय-मलङ्कारः। किन्तु यासाः काव्यहेतोरनुपातोऽपि हेतुना वाक्यवैशिष्ट्यादिना वाच्यत्

(15) 'नतरामिति (क) (ख) पुस्तकपाठः' पत्र।

शम्बूका इव वापिकापरिसरे मुक्ताकिरः शुक्तयो
वीक्ष्यन्ते न जनैस्त्वमेव नगरि ! श्रीदारके ! निःस्पृहा ॥१२१

## प्रधानमपि यत्राङ्गम्—२८५का—

यत्र प्रधानमप्युपलक्षणं तच्चोदात्तम् ।

यथा— सेयं मथुरानगरी सुरगुरुभिर्याचितो भगवान् ।
*यत्रावतीर्य्य गतघ्नः सुरद्विषो हेलया न्यवधीत्* ॥ १२२

अत्र समस्तदैत्यहननरूपो वीररसो गुणीभूतः (थ) ।

## —एकस्मिन् यत्र साधके ।
## साधकान्तरनिर्देशः स समुच्चय(३६) इष्यते (द) ॥ २८६का—

प्रकृतकार्य्यस्यैकस्मिन्नेव साधके सिद्धे सिद्धस्योपयोगार्थं साधकान्तरनिर्देशः समुच्चयः । यथा—दुरापोऽयं कृष्णः सहजतरलं मानसमिदं
सुदुर्वारः कामो, गुरुतरकरालो गुरुजनः ।

मान इति—तन्नगरस्थजनानां निःस्पृहत्वेन तव निःस्पृहत्वम् । तव परिसरे ढिमा (ढिल्) इति प्रसिद्धानि लोष्ट्रानीव चिन्तामणीनां गणा लुटन्ति, अतएव कामधेनुषु जनानां नैवादरः । वापिकातडागादिपरिसरे 'सामुक' इति प्रसिद्धाः शम्बूका इव शुक्तयो जनैर्न वीक्ष्यन्ते । कथम्भूताः ? मुक्ताकिरः याभ्यो मुक्ता उत्पद्यन्ते । सुरगुरुभिर्ब्रह्मादिभिर्याचितः सन् यत्र मधुपुर्य्याम् । मथुराया उत्कर्षार्थं प्रधानीभूतस्यापि श्रीकृष्णनिष्ठवीररसस्य गुणीभूतत्वं ज्ञेयम् ।

---

यत्र प्रतीयते तत्रैवायमिति सम्प्रदायविदः । पर्य्यायोक्तमिति—पर्य्यायोक्तिरिति वा क्वापि संज्ञा । निर्वचनमुखेनास्य निष्कर्षोऽभिनवगुप्तपादैर्लोचने प्रकटितः । पर्य्यायोक्तस्य वाच्यार्थाङ्गतया विषय इति प्राचीनमतमाभासमुपपादयन्तो वक्रोक्तिजीवितकृतः स्वतन्त्राः । प्राचां व्यञ्जनाधिकारे उपकरणीकृतोऽयमिति. केचिदग्निपुराणाद्यनुसारिणः—'दशत्यसौ परभृत' इत्यादि दण्डिपद्यन्तत्र साधकप्रख्यम् । एवमेव 'ध्वनिताभिधाने पर्य्यायोक्ति'रिति लक्षणेन 'भम धम्मिअ' इत्यादि 'निःशेषच्युतचन्दने'त्याद्युदाहरणमुखेन च सूचनं काव्यानुशासनकृतां वाग्भटसूरीणाम् । अत्र भङ्ग्यन्तरेणाऽऽतात्पर्य्येण वा गम्यस्याभिधानमिति सर्वस्वग्रन्थानुसारिणो विद्याधरविश्वनाथादयः । यदीति—इह मूले टीकायाञ्च व्यञ्जनाप्रक्रमद्वावे हेतुत्वं स्फुटं कयाचित् प्रौढ़्याऽविष्कृतमित्यन्यथा प्रतिभाति । उदात्तमिति—अत्राभिमानस्यायिभावाङ्गीकृतनिर्दिष्टादुदात्तरसात् परार्द्ध्यत्वादेकत्वोद्दीपनविभावत्वेन वस्तुनोऽन्यत्वेति कूर्च्चिकयां भेदापातः । दण्ड्यादिस्वीकृतस्योदाराख्यगुणस्योज्झितता चात्र वरीवर्त्ति । गुणीभूत इति—अतस्तस्यालङ्कारत्वेन निर्देशो नालङ्कार्य्यत्वेन ।

नवीनैषोत्कण्ठा, नवमपि वयो, नातिचतुरः
सखीलोको, हा धिग् भवतु कथमाधेरुपशमः ॥ १२३

अत्राधेरुपशमाभावस्य कृष्णदूरापत्वमेव मुख्यं साधकं, तत्रान्येषां साधकानामुपादानेनायं समुच्चयः। एष च सदसदुभययोगात्त्रिधा, सत् शोभनम्, असदशोभनम्, उभयं शोभनाशोभनम्। सद्योगे यथा—

रूपं कुलं वल्लभदुर्लभत्वं शीलं कला कान्तिरुदारता च।
एकेन चैषामपरा: सगर्वा राधे! समस्तैरपि ते न गर्वः ॥१२४

असद्योगे यथा—

संसारमार्गो ह्यधमः स्वभावात् कर्माणि तस्मिन् कटुकण्टकानि।
गतागताभ्यामिह खेद एव तथापि नास्मिन् कुजनो विरज्येत् ॥१२५

सदसद्योगे—प्रियः प्रणयकोविदः, प्रणयिनी सदैवोत्सुका,
खलः च्युतपराक्रमो, गुरुजनः खलोक्तासहः।
गृहं गृहपतिच्युतं, मनसिजस्य पक्षेपवः
कलावति! बधिरा इव सुसमस्तरमी पश्च मः ॥ १२६

अत्र प्रियादयः सन्तः खलोऽसन्।

गुणो गुणक्रियाभ्याञ्च क्रियया च क्रियाऽपरः ॥२८७का—

अपरः समुच्चय इत्यर्थः। गुणेन गुणो यथा—

व्रजपतिनन्दनहृदयं राधायामेधिताभिलाषञ्च ।

साऽपि च कृष्णमनुरक्ता तस्मिन्निति सहजभावसार्वज्ञ्यम् ॥१३७

अत्र साभिलाषत्वानुरक्तत्वे गुणौ । चञ्चलेनाप्यालङ्कारः (द), शुद्धोऽयं तथा न चमत्करोति, अतः संकरतयोदाहृतम् । गुणः क्रियया यथा—

अरुणञ्च नीलनलिनप्रभमपि नयनं प्रिये ! मयि ते ।

आसञ्च ममायं हृदि कम्पयम्पकयोते ! ॥ १३८

क्रियया क्रिया यथा—

हरिरभियास्यति मथुरामिति वार्त्ता नः श्रुतौ च विनिहन्ति ।

मम तु सखी भवति न वेत्यपि शङ्का मे मनश्च मूर्च्छयति ॥१३९

## अनेकस्मिन् क्रमेणैकः (३०) पर्य्यायः (द)—२८८ का—

एकं वस्तु क्रमेणानेकस्मिन् यदि भवति आरोप्यते वा तदा पर्य्यायः । तत् भवतीति पक्षे यथा—

एकस्त्वं निखिलवधूहृदि प्रविष्टः संक्षोभं जनयसि गोकुलेन्द्रसूनो !

त्वामेकं महि सकलाः प्रवेष्टुमर्हाः किं क्षोभं बत जनयन्तु चेतसस्ते ॥ २४०

अन्येषां गोपकारत्वं ज्ञेयम् । व्रजपतीति—चकाराभ्यामभिलाषानुरागयोः साहित्यस्यापि बोधो भवति । ननु राधिका कथं स्वविषयकं श्रीकृष्णस्याभिलाषं जानाति श्रीकृष्णो वा कथं स्वविषयकं राधाया अनुरागं जानाति, तत्राह—सहजेति । राधामाधवयोर्यः स्वभावसिद्धो भावः प्रेमा तेन सार्वज्ञ्यम् । यथा योगिजनो योगनैपुण्यातीतानागतान् पश्यति तथैतावपि प्रेमनैपुण्येन परस्परानुरागं पश्यत इति भावः । एतत्पद्यस्याचलनैकदेशेनान्यः समनामाऽलङ्कारोऽपि ज्ञेयः । अरुणमिति—अत्र हृदयनिष्ठकम्पनक्रियया सह नयननिष्ठकोपारुण्यगुणो निर्दिष्टः । अक्रूरे मेशमागते सखिता स्वसखीमाह—हरिरिति । सखी राधिका जीवति न वेति शङ्का । अत्र श्रवणक्रियया (16) सह मूर्च्छनक्रिया निर्दिष्टा ।

कलहान्तरिता श्रीराधा कृष्णं प्रति भङ्ग्या तस्याशक्तत्वमाह—एक इति । तथैव सामर्थ्यमधिकम् । एवञ्च प्रेमशून्येन त्वया सहास्माकं प्रीतिरनुचितेति ध्वनिः । मानिनी

---

यावत् । समाद्यलङ्कारादस्य भेदः सर्वस्वकारादिभिः सूचितः । पर्य्याय इति—अत्र क्रमाद्भिन्नेष्वेव प्रागभवति सासङ्गता संज्ञा । एकस्मिंस्तवेति—अत्र 'मह्विलासहसमरिह' इति गाथासप्तशतीपद्यस्यच्छायम् । 'शशिसखी'ति श्लोके तृतीयचतुर्थचरणविभागे छाला इवेति

---

(16) 'श्रवणक्रियये'ति पाठः (ख) (ग) पुस्तकयोः ।

आरोप्यत इति पक्षे यथा—

मदनेनोज्झितं वाम्यं राधे ! गृह्णाति ते मनः ।
मनस्त्यजति से रागं लोचने परिगृह्णतः ॥ १४१

यथा वा—त्वया त्यक्तां राधे ! रुपमहह गृह्णाति मदन-
स्त्वदक्षिभ्यां त्यक्तं परिवहति रागं तव मनः ।
श्रिया कौटिल्यं ते परिहृतमपाङ्गोऽधिकुरुते
पुनः सन्धानार्थं किमुचितपदे न्यस्तमखिलम् ॥ १४२

## —अन्यो विपर्य्ययात् ॥ २८६का—

विपर्य्ययादुक्तप्रकारस्य वैपरीत्यादेकस्मिन्ननेकमित्यर्थः । यथा भवतीति पक्षे—

एकस्मिंस्तव हृदये व्रजेन्द्रसूनो ! भूयस्यो ललिमद्दशः कृतप्रवेशाः ।
नास्मिन्नवसर एव गाढ़पूर्णे तादृश्यो गुणबहुलाः कथं विशन्तु (द) ॥१४३

आरोपपक्षे तु यथा—

प्रथिमुखि ! तव राधिके ! कटाक्षः प्रथममभूदयमतद्वातिवर्यी ।
अथ हृदि विनिविष्ट एव हाला-हलपरिदिग्धशरायमाण आस्ते (द) ॥१४४

श्रीराधां प्रति श्रीकृष्ण आह—मदनेनेति । त्वया मयि क्रोधवशात्स्वदनो वाम्यं ग्राहितः, तत एव तद्धृदये कन्दर्पावेशाभावात्मानो वर्त्तते । सम्प्रति मद्:खदर्शनात् कारुण्येन मदनेन त्वामाहत्य वाम्यं त्यक्तम्, अतस्तद्धृदि कन्दर्पावेशो दृश्यते—तथापि त्वं मया सह न मिलसि तत्र मद्:खदर्शनेऽपि कठोरं तव मन एव कारणम्—मनो मदनेन त्यक्तं वाम्यं जग्राह । रागो मद्विषयानुरागः, अन्यत्र नयनपक्षे रक्तिमा मद्विषयकस्य तव क्रोधस्याभावस्य एव । अत्र मदननिष्ठं वाम्यं मनस्यारोप्यते । मानभङ्गानन्तरं कलहान्तरितां श्रीराधां प्रति श्रीकृष्ण आह—त्वयेति । मदनः क्रुद्धः सन् त्वन्मिलनमप्राप्तं मां प्रहृत्य विध्यतीति भावः । परिवहति स्वीकरोति—तथा च क्रोधाभावान्नेत्रयो रागो गतः मनसि चानुरागः प्रादुर्बभूव । श्रियेति—पूर्वं मानसमये श्रीकृष्णस्य दर्शनमपि न कृतम्, अधुना प्रसन्ना सती तमपाङ्गेन पश्यतीति भावः । अतोऽनुप्रेक्षामाह—पुनर्मानसमय एतेषां पुनः स्वस्वस्थाने

---

भेदो न मनागप्यवधेयम् । अनुमानमिति—त्रिविधो हेतुर्नैयायिकसम्मतः पूर्वः सामान्यतो दृष्टः शेषवच्चेति । वाग्भटाद्याः काव्यनिबन्धवर्त्तिनो लिङ्गिनो लिङ्गज्ञानेनात्र वैचित्र्यमुदाहरन्ति । यत्तु नवीनानां मध्ये हेतोर्निष्पादकज्ञापकसमर्थकभेदेन भागत्रयव्यापनं तत्तदुत्थालङ्कारभेदोद्भावनार्थमिति दर्पणादितो ज्ञेयम् । अयमलङ्कारस्य चारुता 'अस्यां मुनीनामपि मोह-मूहे' इत्यादिनैषधपद्ये नितरामुपभोग्या । उद्भट-रुद्रट-जयदेव विश्वनाथादिभिरभ्युपगतो हेतु-

साध्यसाधनसद्भावेऽनुमान-(३८) मनुमानवत् (द)॥ २९० का—

अनुमाने यथा त्रिविधो हेतुस्तथाऽत्रापि। यथा—

इन्दीवराक्षि! भवदक्षि मनोभवस्य बाणः सुधांशुमुखि! मानसभेदकत्वात्।
येनाहतो मनसि गोकुलराजसूनुः सम्मुह्यते न हि बहिः कुरुतेऽवहित्थाम्॥१४५

अत्र 'भवदक्षि' पक्षः, "मनोभवस्य बाण" इति साध्यं,'मानभेदकत्वा'दिति हेतुः।

यथा वा—

नाभीगृहं तव कलावति! मन्मथस्य लीलाऽग्निहोत्रभुजदर्पकृशानुशालि!
एतद्वलग्नगगनाञ्चलचुम्बिचारुगन्धोल्लसत्तनुरुहावलिधूमहेतोः॥१४६

अत्र रूपकगर्भमनुमानम्।

विशेषोक्तिः परिकरः(३९)स्यात् साकूतैर्विशेषणैः (द)॥ २९१ का—

यथा— श्यामामग्रेर्विगलद्धृदयग्रन्थिमुन्मुक्तबन्धे—
ईर्ष्याध्यासप्रशमशमिभिर्ब्रह्मभूयं प्रसक्तैः।

स्थापनार्थं सुचिरमङ्गे योग्यस्थाने किं त्वयाऽऽरब्धं व्यक्तम्? श्रीराधाया मानभङ्गार्थं श्रीकृष्णं प्रति ललिताऽऽह—एकस्मिन्निति। तादृशी गुणबहुला राधिका कथं विघ्नतु? गौरवे बहुवचनम्। 'इन्दीवरेति—सम्मुह्यते मोहति। हे सखे! श्रीकृष्ण! कथम्भवान्मत्त इव दृश्यसे इति सखीभिः पृष्टोऽपि बहिरवहित्थमाकारगोपनं करोति, न तु तत्त्वं कथयति। कलावत्या नाभी एव मन्मथस्य गृहमिति रूपकं तदेव पक्षः। सम्भोगलीलैवाग्निहोत्रं, श्रीकृष्णस्य भुजदर्प एव तादृशाग्निहोत्रस्य कृशानुरग्निः, स एव साध्यम्। यतस्तत्र कलावत्या वलग्नो मध्यदेशः "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो"रित्यवस्याकारलोपः। स एवात्यन्तसौक्ष्म्येण गगनप्रदेशस्तत्सम्बन्धिनी चारुगन्धेनोल्लासशालिनी लोमावलिरेव धूमः स एव हेतुः। तथा च याज्ञिकजना यथा गृहादुत्थितं गगनप्रदेशे उड्डीयमानं सुगन्धधूमविशेषं हेतुकृत्याग्निहोत्रीयवह्नेरनुमानं कुर्वन्ते तथा रसज्ञोऽपि नाभिरूपगृहादुत्थितं मध्यदेशरूपगगनस्पर्शिसुगन्धरोमावलीरूपधूमविशेषं हेतुकृत्य (17) सम्भोगाग्निहोत्रीयस्य भुजदर्पवह्नेरनुमानं कुर्वन्तीति।

---

सङ्कारः (प्राचीनानां हेत्वलङ्कारो वा) इतो भिन्नश्च कृतोऽपि भिन्न एव—परं जगन्नाथविश्वेश्वरप्रभृतिभिराद्यस्यातिशयोक्तिभेदतया कथनं प्राचीनमर्यादानियन्त्रणाम्लानमिति सुक्तिसूक्तयो बहवः। परिकर इति—अत्र विशेषणानां प्रतीयमानार्थगर्भीकारेण तात्पर्ये बन्धसम्बद्धरूपेणैव शोभाऽऽप्त, सार्थकं संभावचनम्। विशेष्यस्य साकूतताभिधाने परिकराङ्कुरश्चोऽ

---

17) 'हेतु' मत्त्वे'ति (ग) (ङ) पुस्तकयोः पाठ।

चित्ते चिन्त्यं कथमपि चिरं धाम यच्छ्यामलन्ते
गोपस्त्रीणां कुचकलशयोर्नीलरत्नं बभूव (द) ॥१४७

अत्र "आत्मारामे"रित्यस्य विशेषणस्य सर्वाण्येव विशेषणानि साकूतानि।

**प्रकृतस्य गोपनं छद्म(४०) व्याजोक्तिरनिषेधभाक्(घ) ॥ २६२ का—**

अपह्नुतिस्तु निषेधपूर्वा, इयन्तु न तथेत्यनिषेधभागित्युक्तम्। इयन्तु छद्मपूर्वैव। यथा—अहो शैत्यस्य महिमा हिमानिल! तवेदृशः।
न शक्यते गोपायितुं क्षतो येनाधरव्रणः ॥ १४८

यथा वा—

अलमलमभिलापेनामुना वारिखेलाकुतुकिनि! कमलानामाहृते कौतुकस्य।
कलय कलितभङ्गं कण्टकैर्नाललग्नैः शिवशिव! परिदष्टं षट्पदेनाधरोष्ठम् ॥१४९

**प्रश्नपूर्वकमाख्यानं तत्सामान्यव्यपोहनम्।**
**तस्य तस्यापि च द्वैधे व्यङ्ग्यत्वे स्यात्तथापरम्।**
**अप्रश्नपूर्वकं वाच्यं परिसंख्या (४१) चतुर्विधा (ध) ॥ २६३ का-**

'तस्य तस्य' चेति प्रश्नपूर्वाख्यानस्य तत्सामान्यव्यपोहनस्य च व्यङ्ग्यत्वम्, अप्रश्नपूर्वकस्य तत् सामान्यव्यपोहनस्य च वाच्यत्वञ्चेति चतुर्धा। क्रमेणोदाहरणानि—

सुरताङ्कं गोपायितुं श्यामलाऽऽह—हे शीतकालीन हिमानिल! तव शैत्यस्येदृशो महिमा कियद्वक्तव्यः? अत्र हिमपवनस्य सर्वेषामधरव्रणजनकत्वेन दुःखदायित्वादिमाहात्म्यरूपप्रकृतार्थस्य संवरणं, तत् मिषमात्रं किन्तु दुःखदायित्वादिमाहात्म्य एव वक्तुस्तात्पर्य्यम्।

श्रीराधिका काचित् सखीं स्तनाधरादौ सम्भोगचिह्नं दृष्ट्वा परिहसन्त्याह—अलमलमिति—तथा च त्वया कुञ्जमध्ये जलक्रीडायामेव गतम्, तत्र जलमध्यस्थितानां कमलानामाहरणार्थं गतायास्तवाङ्गस्य कमलनालस्य कण्टकैः कर्षैः क्षतादिकं जातम्। अत्र प्रकृतार्थस्य श्रीकृष्णेन सह सम्भोगस्य संवरणमात्रम्, किन्तु तात्पर्य्यं तत्रैवेति भावः।

---

लङ्कारभेद इति चन्द्रालोककृदादयः। आत्मारामैरिति—"आत्मारामा विहितरतयः" इत्यादि पद्योर्संस्कारपद्यमेतदभिप्रायमेव।

(घ) व्याजोक्तिरिति—इयं प्राचीनानां ग्रन्थेषु लक्षो लेशो वेति निर्दिष्टः। रसगङ्गाधरकृता लेशस्तु गुणस्यानिष्टसाधनतया दोषत्वेन दोषस्येष्टसाधनतया गुणत्वेन वर्णने चमत्कारीति भिन्न एव। अत्र तत्त्वतो गोपन एव तात्पर्य्यं तदुक्तञ्च वैचित्र्यमितीतरालङ्कारव्यावर्त्तकता। परिसंख्येति—'परि' शब्दोऽत्र वर्जने, 'परेर्वर्जने' इत्यष्टाध्यायीकृता निर्देशात्। संख्या बुद्धिः

किं गेयं ? व्रजकेलिकर्म, किमतिश्रेयः ? सतां सङ्गतिः,
किं स्मर्तव्य-मनन्तनाम, किमनुध्येयं ? मुरारेः पदम् ।
क्व स्थेयं ? व्रज एव, किं श्रवणयोरानन्दि ? वृन्दावन-
क्रीड़ैका, किमुपास्यमत्र ? महसी श्रीकृष्णराधाभिधे ॥ १५०

का विद्या ? हरिभक्तिरेव, न पुनर्वेदादिनिष्णातता,
कीर्त्तिः का ? भगवत्परोऽयमिति या ख्यातिर्, न दानादिजा ।
का श्रीः ? कृष्णरति, र्न वै धनजनग्रामादिभूयिष्ठता,
किं दुःखं ? भगवत्प्रियस्य विरहो, नो हृद्व्रणादिव्यथा ॥ १५१

वक्रता मृगदृशां कचपाशे पाणिपादनयनादिषु रागः ।
नीविकेशवसनादिषु बन्धः मान्द्यचन्द्रनरसादिषु पङ्कः ॥१५२

अत्र 'क्व वक्रता' इत्यादिप्रश्नपूर्वकस्याख्यानस्य तत्सामान्यव्यपोहनस्य च व्यङ्ग्यता—तथाहि क्व वक्रता मृगदृशां गोपिनां ? कचपाश एव, नान्तःकरणादौ कस्या अपीत्यादि ।

प्रत्यासक्तिर्हरिचरणयोः सानुरागी, न रागी,
प्रीतिः प्रेमातिशयिनि हरेर्भक्तियोगे, न योगी ।
आस्था तस्य प्रणयरभसस्योपदेहे, न देहे,
येषां ते हि प्रकृतिकृतिनो, मुक्त मुक्ता न मुक्ताः ॥ १५३

अत्र प्रश्नपूर्वकं व्यङ्ग्यं तदन्यव्यपोहनं वाच्यमिति भेदः ।

वक्रतेति—व्रजे कुटिलान्तःकरणा विषयेषु रागयुक्ताश्च जनाः न सन्ति, तत्र कस्यापि निगड़ाद्भिबन्धनं कलङ्कसम्पर्को वा नास्तीति ध्वनिः । हरिचरणयो सानुरागे येषां ये आसक्तिः, न विषयरागे । न योगे ध्यानकर्मादौ । प्रणयरभसस्य प्रेमातिशयस्योपयोगिनिष्ठदेह आस्था नित्यत्वबुद्धिः, नतु पाञ्चभौतिके देहे । तथा च के मुक्ता इति प्रश्नो व्यङ्ग्यः, तत्तोत्तरं येषामिति । मुक्ताभिमानिनो मुक्ता न, तेषां भक्त्यभावात् । तथा श्रीदशमे 'येऽन्येऽरविन्दाक्ष विमुक्तमानिन' इत्यादौ तेषामधःपतनमेवोक्तम् ।

तेन वर्जनमुद्राविषयमित्यन्वर्थमभिधानम् । न केवलं 'तत्र चान्यत्र च प्राप्तौ परिसंख्ये'ति वाक्यविदां मीमांसकानां विभाषाऽनुमोदितोऽत्राङ्गीकारः, परं काव्यगतानादिविच्छित्ति-बोधितजीवातोरेवात्र परिग्रहः । नियमवच्छेयस्यैवावान्तरभेदोऽयमिति प्राचीनानां दण्डि प्रभृतीनां दर्शनम् । किं गेयमिति—श्रीरामानन्दरायमहाशयश्रीचैतन्यमहाप्रभ्वोः प्रश्नोत्तरां-

यथोत्तरं पूर्वपूर्वहेतुकस्य तु हेतुता ।

तदा कारणमाला (४२) स्यात् (ध)—२६४ का—

पूर्वपूर्वहेतुकार्थस्योत्तरोत्तरपदार्थस्य यदि हेतुता, तदा तदैवेत्यर्थः ।

यथा—सत्सङ्गमेनैव भवेद्विरागो विरागतः स्यान्मनसो विशुद्धिः ।

मनोविशुद्धेरेव हरेः प्रकाशो हरेः प्रकाशेन कृतार्थता स्यात् ॥ १५४

—क्रिययाऽन्योन्यकारणम् ।

वस्तुद्वयं यदाऽन्योन्यम् (४३) (ध)—२६५का—

वस्तुद्वयं यदि क्रिययाऽन्योन्यकारणं स्यात्तदाऽन्योन्यमित्युच्यते ।

यथा— राधाभासो मरकतमयीं कुर्वते कृष्णकान्तिं

कृष्णस्याभा अपि च हरितीकुर्वते धाम तस्याः ।

स्थाने स्थाने यदि निवसतस्तौ तदा गौरनीला-

वेकस्थाने यदि वत तदा तुल्यभासौ विभातः ॥ १५५

—प्रश्नस्योन्नयनं यदि ।

उत्तरश्रुतिमात्रेणोत्तरं (४४) स्यात् (ध)—२६६ का—

प्रतिवचनश्रवणादेव पूर्ववचनस्योत्तरस्य यद्युन्नयनं भवति तदोत्तरालङ्कारः ।

यथा—भम कण्ह अण्णघरं विरमदु दे (18) कावि वअणपरिवाडी ।

अच्च सही इध एक्का ण एत्थ तुह ओसरो ठादुं ॥ १५६

अत्र अस्याः प्रतिवचने कृष्णस्य कोऽपि प्रश्नः पूर्वं जात इति बुध्यते । नचैतदनुमानं, व्याप्त्यभावात् । न चापि काव्यलिङ्गं, हेतोः पदवाक्यार्थताऽभावात् ; नतु प्रश्नस्य प्रतिवचनजनको हेतुः—तेनेदमलङ्कारान्तरमेव ।

भम कण्हेति—भ्रम कृष्णान्यगृहं विरमतु ते काऽपि वचनपरिपाटी । अद्य सख्येकैकात्र तवावसरः स्थातुम् । न चात्रानुमानालङ्कारो वक्तव्यः, प्रतिवचनप्रश्नयोः परस्परव्यभिचारेण व्याप्त्यभावात् । नाप्यत्र काव्यलिङ्गालङ्कारो वक्तव्यः, न त्विति—प्रश्नं प्रति प्रतिवचनं न जनको हेतुः, अपि तु ज्ञापक एव हेतुः, काव्यलिङ्गे जनकरूपस्य हेतोरेव ग्रहणात् ।

मिदं कविकर्णपूरकृते चैतन्यचन्द्रोदयनाटके । कारणमालेति—मन्दलामुलिकाऽत्र विच्छित्ति, एवमप्यत्र श्लोकेष्वन्यमोद्दावितेषु वा मालादीपकैकावलीसारप्रभृतिष्वन्तर्गतत्वम् । ननु

(18) "न" इति पद (ख) पुस्तके नास्ति । अत्र तत्, आर्यापादस्यापरिपूरितत्वात् ।

—प्रश्नतोऽपि वा ॥ २९७का—

प्रश्नतः पश्चादुत्तरं वा उत्तरम् । यथा—

किं दुर्लभं ? यन्मनसो न गोचरः, किं प्रार्थनीयं ? क्व च यन्न लभ्यते ।
किं ह्लादकं ? यत्स्मरणेऽपि स स्यात्, तत्त्वञ्च तत् किं ? व्रजराजनन्दनः ॥१५७

अत्र चतुर्विधपरिसंख्यातो विलक्षणता—तत्र तत्र सर्वत्रान्यव्यपोहे तात्पर्यं क्वचिद्वाच्यमुखेन क्वचिद्व्यङ्ग्यमुखेन । इह तु शुद्धप्रश्नस्य शुद्धमुत्तरमिति भेदः ।

आकारेणेङ्गितेनापि सूक्ष्मार्थो यत्र लक्ष्यते ।
प्रकाश्यते वाऽन्यस्मै च स सूक्ष्मः(४५)कीर्त्यते द्विधा(ध)॥२९८का-

क्रमेणोदाहरणे—राधायाः करकमले शिखण्डदलपद्म लग्नमालोक्य ।
प्रातः सखी विदग्धा लिलेख तत्रैव कार्मुकं सशरम् ॥ १५८

अत्र हि विपरीतरते कृष्णकेशाकर्षणविगलिततद्बर्हावतंसदर्शनेन पुरुषायितं तवेदं मयाऽवगतमिति सख्या स्ववैदग्ध्यं प्रकटयितुं पुरुषस्यैव धनुर्धरत्वं सङ्गच्छत इति सशरकार्मुकं लिखितमिति सूक्ष्मम् ।

भवनप्राङ्गणसङ्गतमनङ्गरसमङ्गलं कृष्णम् ।
सकृदवलोक्य सनीलं राधा पिदधेऽवगुण्ठनेन मुखम् ॥ १५९

अत्र चन्द्रास्तसमये समागन्तव्यमिति कृष्णं प्रति सङ्केतोऽनया प्रकटितः, स च सूक्ष्मः ।

सारः (४६)सावधिकोत्कर्षो यद्भवेदुत्तरोत्तरम् (न) ॥२९९का—

सारोऽलङ्कारः । यथा—वर्षेषु भारताभिधमिह सारो भारते च तीर्थानि ।
तीर्थेषु च मथुरैका वृन्दारण्यं मथुरायाम् ॥ १६०

---

सङ्गमेनैवेत्यादि—अत्र कथितपदत्वं न दोषः, परं शोभाऽऽधायकमेव । अन्योन्यमिति—पश्चाल्लक्षितात् समालङ्कारादस्य भेदः सहज इति हरिप्रियस्य एव प्रमाणम् । उत्तरम्—अत्र प्रकाशकृतां लक्षणे 'असकृत् यदसम्भाव्य'मिति 'असकृत्'पदं वैचित्र्यबोधकमिति परमत तन्निर्देशः । इह प्रश्नोत्तरसुखे तात्पर्यं नेति प्रथमभेदादेवावगम्यते, यत्र तथा तत्राप्युत्तरांशे न परन्तु प्रश्नोन्नयन एव परं लक्ष्यमिति । प्रश्नोत्तराख्योऽलङ्कारः कैश्चिद्वाग्भटादिभिरुपदर्शितः प्रहेलिकाभेद एवेति महाकवीनां वाणभट्टादीनां सूचनम् । 'किमेभं स्वाध्यमाख्याति पक्षिणं कः कृतो यशः । गरुड़ः कीदृशो नित्यं दानवारिविराजितः ॥'

यथोत्तरं पूर्वपूर्वहेतुकस्य तु हेतुता ।

तदा कारणमाला (४२) स्यात् (ध)—२६४ का—

पूर्वपूर्वहेतुकार्थयोरुत्तरोत्तरपदार्थस्य यदि हेतुता, तदा तदैवेत्यर्थः ।

यथा—सत्सङ्गमेनैव भवेद्विरागो विरागतः स्यान्मनसो विशुद्धिः ।

मनोविशुद्धैव हरेः प्रकाशो हरेः प्रकाशेन कृतार्थता स्यात् ॥ १५४

—क्रिययाऽन्योन्यकारणम् ।

वस्तुद्वयं यदाऽन्योन्यम् (४३) (ध)—२६५ का—

वस्तुद्वयं यदि क्रिययाऽन्योन्यकारणं स्यात्तदाऽन्योन्यमित्युच्यते ।

यथा— राधाभासो मरकतमयीं कुर्वते कृष्णकान्तिं

कृष्णस्याभा अपि च हरितीकुर्वते धाम तस्याः ।

स्थाने स्थाने यदि निवसतस्तौ तदा गौरनीला-

वेकस्थाने यदि वत तदा तुल्यभासौ विभातः ॥ १५५

—प्रश्नस्योन्नयनं यदि ।

उत्तरश्रुतिमात्रेणोत्तरं (४४) स्यात् (ध)—२६६ का—

प्रतिवचनश्रवणादेव पूर्ववचसोत्तरस्य यद्युन्नयनं भवति तदोत्तरालङ्कारः ।

यथा—भम कण्ह अण्णघरं विरमदु दे (18) कावि वअणपरिवाडी ।

अह्म सही इध एक्का ण एत्थ तुह ओसरो ठादुं ॥ १५६

अत्र सख्याः प्रतिवचने कृष्णस्य कोऽपि प्रश्नः पूर्वं जात इति बुध्यते ।

नचैतदनुमानं, व्याप्त्यभावात् । न चापि काव्यलिङ्गं, हेतोः पदवाक्यार्थता-ऽभावात्; नतु प्रश्नस्य प्रतिवचनजनको हेतुः—तेनेदमलङ्कारान्तरमेव ।

भम कण्हेति—भ्रम कृष्णान्यगृहं विरमतु ते काऽपि वचनपरिपाटी । मम सख्येका नात्र तवावसरः स्थातुम् । न चात्रानुमानालङ्कारो वक्तव्यः, प्रतिवचनप्रश्नयोः परस्परव्यभिचारित्व व्याप्त्यभावात् । नाप्यत्र काव्यलिङ्गालङ्कारो वक्तव्यः, न त्विति—प्रश्नं प्रति प्रतिवचनं न जनको हेतुः, अपि तु ज्ञापक एव हेतुः, काव्यलिङ्गे जनकरूपस्य हेतोरेव ग्रहणात् ।

मिदं कविकर्णपूरकृते चैतन्यचन्द्रोदयनाटके । कारणमालेति—प्रकृतमनुसृत्य विविच्य तत्र तत्र मतोऽन्योन्यमिहापि [illegible] मालादीपकं कारणमालाप्रभृतिष्वप्युपलभ्यते । अत्र

(18) "ते" इति क० (ख) पुस्तके नास्ति । तत्र पुन काऽपि वचनपरिपाटी इत्यस्ति ।

## —प्रश्नतोऽपि वा ॥ २९७का—

प्रश्नतः पश्चादुत्तरं वा उत्तरम्। यथा—

किं दुर्लभं? यन्मनसो न गोचरः, किं प्रार्थनीयं? क्व च यत्र लभ्यते।
किं ह्लादकं? यत्स्मरणेऽपि स स्यात्, तत्तच्च तत् किं? व्रजराजनन्दनः ॥१५७

अत्र चतुर्विधपरिसंख्यातो विलक्षणता—तत्र तत्र सर्वत्रान्यव्यपोहे तात्पर्यं क्वचिद्वाच्यमुखेन क्वचिद्व्यङ्ग्यमुखेन। इह तु शुद्धप्रश्नस्य शुद्धमुत्तरमिति भेदः।

आकारेणेङ्गितेनापि सूक्ष्मार्थो यत् लक्ष्यते।
प्रकाश्यते वाऽन्यस्मै च स सूक्ष्मः(४५)कोर्त्त्यते द्विधा(ध)॥२९८का-

क्रमेणोदाहरणे—राधायाः करकमले शिखण्डदलपक्ष्म लग्नमालोक्य।
प्रातः सखी विदग्धा लिलेख तत्रैव कार्मुकं सशरम् ॥ १५८

अत्र हि विपरीतरते कृष्णकेशाकर्षणविलग्नतद्बर्हावतंसदर्शनेन पुरुषायितं तवेदं मयाऽवगतमिति सख्या स्ववैदग्ध्यं प्रकटयितुं पुरुषस्यैव धनुर्द्धरत्वं सङ्गच्छत इति सशरकार्मुकं लिखितमिति सूक्ष्मम्।

भवनप्राङ्गनसङ्गतमनङ्गरसमङ्गलं कृष्णम्।
सङ्कटवलोक्य सनीलं राधा पिदधेऽवगुण्ठनेन मुखम् ॥ १५९

अत्र चन्द्रास्तसमये समागन्तव्यमिति कृष्णं प्रति सङ्केतोऽनया प्रकटितः, स च सूक्ष्मः।

सारः (४६)सावधिकत्कर्षो यद्भवेदुत्तरोत्तरम् (न) ॥२९९का—

सारोऽलङ्कारः। यथा—वर्षेषु भारताभिधमिह सारो भारते च तीर्थानि।
तीर्थेषु च मधुरैका वृन्दाऽरण्यं मथुरायाम् ॥ १६०

---

सङ्गमेनेवेत्यादि—अत्र कथितपदत्व न दोषः, परं शोभाऽधायकमेव। अन्योन्यमिति—पश्चाल्लक्षितात् समालङ्कारादस्य भेदः सहज इति वृत्तिग्रन्थ एव प्रमाणम्। उत्तरम्—अत्र प्रकाशकृतां लक्षणे'असकृत् यदसम्भाव्य'मिति 'असकृत्'पदं वैचित्र्यबोधकमिति परमत्र तन्निर्देशः। इह प्रश्नोत्तरमुखे तात्पर्यं नेति प्रथमभेदादेवावगम्यते, यत्र तथा तत्राप्युत्तरांशे न परन्तु प्रश्नोन्नयन एव परं लक्ष्यमिति। प्रश्नोत्तराख्योऽलङ्कारः केचिद्वाग्भटादिभिरुपदर्शितः प्रहेलिकाभेद एवेति महाकवीनां वाग्भट्टादीनां सूचनम्। 'किमैभं श्राघ्यमाख्याति पक्षिषां कः कुतो यशः। गरुडः कीदृशो नित्यं दानवारिविराजितः॥'

अत्यन्तभिन्नाधारत्वे युगपद्भापणं यदि ।
धर्मयोर्हेतुफलयोस्तदा सा स्यादसङ्गतिः(४७) (न) ॥२००का—

यदाधारो हेतुस्तदाधारं फलमिति, यथा पापपुण्यफले एकाधारे एव दुःखसुखे, तदन्यथाभावादसङ्गतिः । तथापि युगपदेव हेतुः फलञ्च, नतु पापादिफलदुःखवत् कालान्तरव्यवधानम् । यथा—

तवाधरोष्ठे व्रतमञ्जनस्य मम व्यथाऽक्ष्णं मलिनश्च चेतः ।
पीतस्त्वया मे वदनासवस्त्वं मत्त. कुतोऽनर्थपरम्परेयम् ॥ १६१

नायं विरोध', न त्वेकाश्रयः ।

कारणान्तरसाहाय्यात् कार्य्यं यत् सुकरं भवेत् ।
कर्त्तुर्विना प्रयत्नेन स(४८) समाधिरितीर्य्यते(प) ॥ (२०१)का—

यथा— मयि व्यग्रे तस्या प्रणयकलहम्लानमनसः
प्रसादे राधायाः पदपतनमारिप्सितवति ।

यदाधार इति—यस्मिन्नेवाधिकरणे हेतुस्तस्मिन्नेवाधिकरणे फलोत्पत्तिरिति सर्वथा नियमः, तस्यान्यथाभावः कारणस्याधिकरणभेदे कार्योत्पत्तेरपरमित्यन्यथाभावः । यथा पापपुण्यजन्ये सुखदुःखे एकस्मिन्नेवात्मनि भवतः । तथापि असङ्गतावप्यसङ्गत्यलङ्कार— युगपदिति । एकस्मिन्नेव काले हेतुः फलञ्च भवति । खण्डिताविभो प्रातःकाले मान- भङ्गार्थमागतं श्रीकृष्णं तस्याधरे सम्भोगचिह्नं सुरादिकं वीक्ष्याह—तवेति । यस्मिन्नेव क्षणे तवाधरे तया घनं कृतं तदेव तस्य कारणात्मम ममपि व्यथा जाता, नतु कालव्यवधानम् । त्वं मत्तः सम्भोगचिह्नं धृत्वा मानभङ्गार्थमागतः, इदमेव मत्ततायिह्नमिति भावः । एवं महाप्यतिगोत्रं यदुदाहरणं तत्तद्दृष्यासम्बन्धराहित्येन विगीतत्वात् ग्रन्थकारेण परिहृतम् ।

---

इत्यादि तत्त्वतस्तत् गम्यते । इच्छा इति—'निपुण'मिति प्राचीनानां संज्ञाऽन्तरमस्येति कश्चित् । नास्य विवर्त्तं उत्तरकाले कथमप्यासीदित्यप्रधानत्वेऽप्यस्य प्रथमत्वख्यापनं कृतवित् । विदग्धानामिव काव्यवर्त्म जीवतीत्येवं प्रायादलङ्कारादुद्धाने, परं वैदग्ध्यमेतदास्फोटनप्रायम् । अत्र वक्रोक्तिविरहान्नालङ्कारतेति भामहानुसारिणः कुन्तकादयः ।

(न) सावधिरिति—'परावधि'रिति प्रकाशलक्षणे—'तेन पर्यन्तभागो यत्र सर्वोत्कृष्ट इत्यर्थः, धारावाहिकतया तत्रैवोत्कर्षविश्रान्ते'रिति गोविन्दव्याख्यानम् । उत्तरोत्तर- मश्लाघ्यानां समावेशोऽप्ययमिति । अस्य न केवलं धर्मधर्मिरूपेण व्यतिरेकाङ्गेदः परं माला- रूपेण धाराऽविरोधित्वयैवेति ज्ञेयम् । सर्वत्र त्वस्यैवोदार इत्याख्या । प्रतीच्यानां Climax Anticlimax—व्याख्यावलङ्कारावेतत्प्रसङ्गावपि प्रायः कश्चिद्भिन्नार्थौ । असङ्गतिरिति—

अकस्मादन्योऽन्यव्यतिकरकृतः स्फूर्जथुरभूत्
सखे ! त्रासादेषा सपदि मम कण्ठं धृतवती ॥ १६२

**श्लाघ्यत्वेन भवेद्योग्यो यदि योगस्तदा समम्(४९)(न)॥२०२का—**

सममित्यलङ्कारः । यथा—ललामं नारीणामियमहह पुंसामयमहो
वयोऽस्या अस्यापि प्रकृतिनवकैशोरकमिदम् ।
प्रसूनेषोर्भाग्यान्मिलितमिव रत्नद्वयमिदं
न राधाकृष्णाख्यं भजतु कथमाद्योऽपि च रसः॥१६३

एवमश्लाघ्यत्वेऽप्यूह्यमुदाहरणम् ।

**अत्यन्तवैसादृश्येन योगो यदतिदुर्घटः ।**
**कर्त्तुः क्रियाफलाभावः प्रत्युतानर्थसम्भवः ॥**
**गुणक्रियाभ्यां ते एव कार्य्यकारणयोश्च यत् ।**
**परस्परं विरुध्येते विषमः(५०) स चतुर्विधः(न)॥२९३का—**

ते गुणक्रिये एव । क्रमेणोदाहरणानि—
शिरीषकुसुमादपि प्रकृतिकोमलन्तद्वपुः
कुकूलविषशूलयोर्व्यतिकरोऽनुरागज्वरः ।
तथापि सहतेतरां तमसुनैव राधा चिरं
न वाङ्मनसगोचरः सहजभावबन्धक्रमः ॥ १२४ अत्र गुणो गुणेन ।

संसारदावक्लपितं मनो मे शिश्राय तापप्रशमाय कृष्णम् ।
स निर्घृणस्तद्धत लब्धमात्रं समूलमुन्मूलितमेव चक्रे ॥ १६५ अत्र क्रिया क्रियया

शिरीषेति—कुकूलविषशूलयोस्तुषाग्निविषास्त्रशूलयोः सम्बन्धरूपः श्रीकृष्णविषयकानुरागज्वरः । सहजभावः स्वभावसिद्धप्रेमा । अत्र कोमलत्वस्पर्शगुणेनानुरागज्वररूपगुणो विरुध्यते । संसारेति—निर्घृणः कृपारहितः । तथा श्रीकृष्णचरणारविन्दाश्रयणमात्रेण संसारज्वालया म्लानभूतस्य मनोघटितलिङ्गदेहस्य नाशं चकारेत्यहो तस्य कृपालुतेति

---

अस्य तथा प्रत्यनीकाधिकविषमादलङ्काराणां विरोधभेदेन परिगणना प्राचां ग्रन्थेषु । चित्रहेतुरत्नालङ्कार इति राजानुमारः । अप्रमतिशयोक्तिरपञ्च इत्यपि केचित् । चतुर्थभेदातिशयोक्तिसामान्ये कार्य्यकारणयोः पौर्वापर्य्यविपर्ययः इह तु तयोरेव वैयधिकरण्यमितीया-

पीयूषवीरुधो बीजमेकमेव ममान्तरे।

अङ्कुराः किममी तस्मादहवो विषवीरुधाम् ॥ १६६

अत्र कार्यभूतानामङ्कुराणां बहुत्वेन गुणेन कारणभूतस्य बीजस्यैकत्वं गुणो बाध्यते। पीयूषविषयोश्च कार्यकारणरूपत्वादैधर्म्यम्।

प्रेमबीजं परानन्दस्यन्दि रोपितमन्तरे।

तस्याङ्कुराः कुकूलस्य स्फुलिङ्गा इव दाहकाः ॥ १६७

अत्र कार्यस्य दहनक्रियया कारणस्य परमानन्दस्यन्दनक्रिया विरुध्यते।

**आधाराधेययोर्भूम्नोर्मिथस्तत्प्रतियोगिनो।**
**ततोऽप्यधिकभूमानो स्यातां तदधिकं(५१) भवेत् (न)॥३०४का-**

अधिकनामाऽलङ्कारः। क्रमेणोदाहरणे—

अहो ते मनसः सुभ्रु। विशालत्वमिदं महत्।

त्रिलोक्यां यो न मात्येष यत्र माति रमापतिः ॥ १६८

अत्राधेयस्य भूयस्त्वेऽप्याधारस्य ततोऽपि भूयस्त्वम्।

यां वेद्मि यस्याः प्रतिरोमकूपं ब्रह्माण्डभाण्डानि समुल्लसन्ति।

तस्यां तनौ ते न ममौ मुकुन्द। तस्याः समालोकमहोत्सवोऽयम् ॥१६९

अत्राधारभूयस्त्वेऽप्याधेयस्य भूयस्त्वम्।

**अपकार्य्यापकारार्थमसमर्थेन तत्प्रियम्।**
**हिनस्ति यत्तदोयोक्तिः प्रत्यनीकं(५२) स्तवो यदि (न)॥३०५का-**

व्याजस्तुतिरपि ज्ञेया। अत्राङ्कुरक्रिययोः स्रवनक्रिया विरुध्यते। बीजं प्रेम, तत्तु एकमेव, तस्याङ्कुरा विरहजन्यज्वालाः बहवः—एकस्य बीजस्य बहवोऽङ्कुरा न सम्भवन्तीति विरोध, पीयूषविषयोरपि विरोधश्च।

भूम्नोः व्यापकयोः। ननु वोति—आधारस्य प्रतियोग्याधेयः, आधेयस्य प्रतियोग्याधार इति। तथा चाधेयापेक्षया यदाधारो व्यापको भवति अथवाऽऽधारापेक्षया यदाधेयो व्यापको भवति तदाऽधिकालङ्कारः। अत्राधेयस्य श्रीकृष्णस्य, आधारस्य राधिकामनसः।

---

मेव भेदः। विरोधोऽयमिति नवीनो मतिद्वारकारः। समाधिरिति—समाहितमिति संज्ञा वा, यत्र कार्यमन्येन समाधीयते स समाधिः। अत्राकस्मिककार्यागमस्य प्रधानत्वेन विवक्षा, इतरेषां तु गौणत्वेन। सममिति—अस्य त्रयो भेदा रसगङ्गाधरे सूचिताः। विषम इति—अस्म-

अपकारिणोऽपकारासामर्थ्येन तत्प्रियस्य योऽपकारस्तदुक्तिः स्तवरूपा यदि भवति तदा प्रत्यनीकम् । यथा—

माधुर्य्यमादाय तवाननेन कलङ्कधारी विहितः शशाङ्कः ।
तेनैष राधे ! तव वल्लभत्वादसन्निधाने तव मां हिनस्ति ॥ १७०

**तुल्येन लक्ष्मणा स्तोकेनान्यद्यदि निगूह्यते ।**
**सहजेनेतरेणापि त-(५३)न्मीलितमपि द्विधा(प)॥ २०६का—**

एकेन वस्तुना अन्यद्वस्तु यदि तुल्येनाल्पेकेन चिह्नेन निगूह्यते सहजेन स्वाभाविकेनेतरेणागन्तुकेन वा स मीलितनामाऽलङ्कारः । क्रमेणोदाहरणे—

स्वतश्चपललोहिते सुमुखि ! राधिके ! ते दृशौ
गतं सहजमालसं प्रकृतिमन्दमन्दं स्मितम् ।
स्वभावमृदुवक्रता ललितमर्द्धमर्द्धं वचो
मदश्च मदनोऽथवा मधुमदश्च कैर्लक्ष्यताम् ॥ १७१

सञ्जातकम्पोत्पुलकां हिमागमे स्नानोत्थितां कृष्णादृगन्तपातिनीम् ।
शीतार्दितां भाववतीं नु वेत्ति तां विज्ञाऽपि न ज्ञातवतो सखीं सखी ॥ १७२

पूर्वं च जहजं, उत्तरत्वागन्तुकम् ।

**स्थाप्यते खण्ड्यते वाऽपि पूर्वं पूर्वं परेण यत् ।**
**विशेषणतया वस्तु सा द्विधेकावली(५४) भवेत् (प)॥ २०७का—**

माधुर्य्यमिति—हिनस्ति, विच्छेदे चन्द्रस्योद्दीपकत्वेन पीडाकरत्वं ज्ञेयमिति भावः । स्वत इति—अत्र च स्वभावसिद्धेन महता नेत्रस्य चाञ्चल्येनारुण्येन च यौवनमत्तताऽपिहिन्यतयं

---

दैर्घ्यं मंधा । एतदतिरिक्ता अलङ्कारा अलङ्काराः प्रपञ्चायितानीति बहुभिर्न गण्यन्ते । अधिक इति—अतिशयोक्तिद्वितीयभेदाः विशेषत्वात्तदन्तर्भुक्तोऽयमिति केचिदाधुनिकाः—परमाधाराधेययोः विच्छिन्नशोभाऽऽपादकत्वादस्य विशेष इति सर्वं स्वस्थम् । अल्पमित्यलङ्कारः 'अल्पन्तु सूक्ष्मादाधेयादाधारस्यातिसूक्ष्मते'ति लक्षितः केचित् स्वीक्रियते । प्रत्यनीकमिति लौकिकन्यायमूलोऽलङ्कारनिर्देशो वैचित्र्यात । 'यथाऽनीकेऽभियोक्ते तत्प्रतिनिधिभूतमपरं मृदुतया कश्चिदभियुज्यते तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयते इत्यर्थ' इति संज्ञाऽन्वर्थता मम्मटभट्टैः प्रतिपादिता । यदस्य पञ्च भेदाः केचिद्दर्शितास्तत्प्रदर्शनमात्रम् ।

(प) मीलितम्—यत्र निगूहनन्तु बलीयस्तया—तेन सामान्यालङ्कारतो भेदः सूचकः । एका-

यथा वा—

पृष्ठे मणीन्द्रमहसि प्रतिबिम्बमेव केशस्य केशपरिशेष इति भ्रमेण।
उल्लासयत्यसकृदङ्गुलिपल्लवेन सा व्यवधीरजनि केशव केशबन्धे ॥ १७७

**उपमानस्य धिक्कार उपमेयस्तुतौ यदि।**
**(५७)प्रतीपमुपमानस्य धिकृत्यै चोपमेयता (प) ॥ २१०का-**

उपमेयस्तुत्यर्थमुपमानधिक्कारो यदि तदा प्रतीपं, यदि वा धिक्कारायैव उपमानस्यैवोपमेयता तदा चेति द्विविधम्। क्रमेणोदाहरणे—

तव जयति जगत्यां राधिके! भ्रूविभङ्गे
किमिति कुसुमचापश्चापमन्यं बिभर्ति।
विलसति मुखबिम्बे वेधसा वा किमर्थं
व्यरचि विधुविधाने निष्फलोऽयं प्रयासः ॥ १७८

वरतनु! ननु कृष्णो हन्त वैदग्ध्यमुग्धः
शिवमशिव भुवि भद्राभद्रभावेऽनभिज्ञः।
तव विगतकलङ्केनाननेनैव योऽयं
शशिनमुपमिमीते नैव लज्जां करोति ॥ १७९

मम वदनमिव नयनानन्दकमिति मा कथाः सुतनु! गर्वम्।
अपरोऽपि कश्चिदेवं राकायां वदति शीतांशुः ॥ १८०
अहमेव दारुणतम इति मा कुरु कालकूट! गुरुगर्वम्।
त्वत्तोऽपि दारुणतमो दुर्लभलोके मनोरागः ॥ १८१

इत्याद्यपि तद्भेदान्तर्गतम्।

पृष्ठ इति—श्रीकृष्णस्य केशबन्धने कर्मणि अवधीरजनि। चपले कारणमाह। मणीन्द्र इन्द्रनीलमणिस्तद्वन्महस्तेजो यस्य तथाभूते पृष्ठे केशस्य प्रतिबिम्बमेव केशस्य परिशेषोऽग्रभाग इति भ्रमेणासकृदुल्लासयन्त्यूर्द्ध्वं नयन्ती। ममेति—शरत्काले राकायां पूर्णिमायां शीतांशुश्चन्द्रः। अतिशयोक्त्या श्रीराधाः प्राह। अहमेवेति। दुर्लभलोके श्रीकृष्णे।

---

(फ) सामान्यमिति—तत्वतो भेदवत्त्वेनोल्लीढमपि कविनिर्मितगौरवेण समानगुणत्वेन निबध्यते चेदस्तु तदाऽयम्। तत्वतो भेदानाघ्रातमपि तेन विशेषेण भेदेन यद्विशिष्यते स विशेषः। तयोरेकत्र ग्रहणेन वैलक्षण्यं स्फुटतरं ज्ञानमिति च ज्ञेयम्। एकत्र वस्तुसामान्य-

प्रस्तुतस्याप्रस्तुतेन गुणैकत्वविवक्षया ।
ऐक्यं निबध्यते योगाद्यत् सामान्यं(५८) तदिष्यते ॥२११ का—

राधे ! तडिद्गौरि ! तवैव गण्डयोः कर्णान्तलम्बी नवकेतकीच्छदः ।
न सौरभेणापि गतो विभिन्नतां मधुव्रतेनैव विविच्य बाधितः ॥ १८२

अथवा—द्विरदरदनक्लृप्ते चारुपर्यङ्कराजे क्षतकमिथुनि तस्मे मल्लिकापत्रिकाभे ।
शशिमहसि निदाघे प्राङ्गणे निर्वितानेजयति निरवलम्बस्वापशालीव कृष्णः ॥

आधारस्य प्रसिद्धस्याभावेऽप्याधेयदर्शनम् ।
एकस्य युगपद्वृत्तिरनेकात्र स्वरूपतः ॥
एकस्यैवातिचित्रस्य वस्तुनः करणेन हि ।
तत्सामान्यान्यवस्तूनां करणं स भवेत्त्रिधा ॥
विशेषः (५९) (फ) —२१२का

येन प्रयत्नेन चित्रवस्तुकरणारम्भस्तेनैव प्रयत्नेन तथाविधाशक्यवस्त्वन्तर-सम्भारभत इति केचित् (फ) । क्रमेणोदाहरणानि—

लोकान्तरान्तः सुहृदां गतानां गिरश्च रूपाणि च चेलयश्च ।
तथैव सन्तीह सुहृज्जनाना मनस्यहो सौहृद ! ते प्रभावः ॥ १८४

अत्र प्रसिद्ध आधारः सुहृदेव, तदभावेऽप्याधेयानां रूपादीनां स्थितिः ।
नायं विरोधः, पूर्वदेशविषयत्वाभावात् । द्वितीयो यथा—

राधे इति—गण्डकेतकीपत्रयोः सुगन्धत्वेन केतकीच्छदो न भिन्नतां प्राप्तः किन्तु भ्रमरेणैव गण्डस्थलात् केतकीपत्रं भिन्नमिति विविच्य बोधितः । तथा च पूर्वानुभूते कर्णस्थोत्पले पतितुमागतो भ्रमरः पश्चात् कर्णस्थकेतकीपत्रगन्धेनान्धः सन् पलायितः, तद्दृष्ट्वा सर्वैरिदं केतकीपत्रमिति ज्ञानं जातमिति भावः । केतकीगन्धो भ्रमरस्यासह्य इति सर्वत्र प्रसिद्धिः । प्रस्तुतस्य गण्डस्याप्रस्तुतेनागन्तुकेन सह योगात् पीतवर्णरूपगुणैकत्वविवक्षयैक्यं वर्णितम् । द्विरदेति—प्राङ्गणस्य शय्यानाम् सर्वेषां श्वेतत्वेनैक्यात् निरवलम्बस्वापशालीव तथा च सर्वेषामेव स्वरूपाणां विभिन्नताभावात् श्रीकृष्णः शून्यप्रदेशे स्वपितीति बुध्यत इत्यर्थः । मल्लिकाया बेलफुले: छदः कलिपुत्तलिका यत्र तथाभूते । येनेति—केनापि प्रयत्नेन प्रत्यक्षादिप्रमाणाक्रान्तत्वाभावो विशेषनामालङ्कारः ।

---

(फ) निमश्राभ मन्नुनन्येनपरत भेदाभावे पश्चिमा दंशिष्टामाश्चमे येयनर्थमा संज्ञायाश्रिया । पक्षोक्तिः

केचित् प्रवीणमतयः—"तत्तद्रसास्पदमयान् विषयान् विहाय सुधश्चिरं श्रयति मोक्ष-महत्स्थलीं यः। तस्यात्मनः कथमिवास्तु गुणो विनाशो भोगाव्ययेऽपि विकला विभुता न यत्ने"ति।

इह रसघनबन्धे कर्णपूरप्रबन्धे विशदपदकदम्बैष्टिप्पणीमादरेण।
अरचयदनुमत्या प्राच्यपाश्चात्यविद्यासरणिसरणसक्तो नास्ततन्द्रो नवीनः ॥ १
कौस्तुभे मणिमये वनमाला मौक्तिकावलिरिसि प्रथमानाः।
उद्धुरं दधति यन्मयि मोक्षाभावं किमपि तत्क्षणु यातु ॥ २
पुरार्थिप्राप्तिसमया धिया या न्यस्तैकदा घूर्णनकेन केन।
प्रत्यग्रपुराप्तिकदर्थितेन साऽन्येन छन्दात् परिनिष्ठिताऽद्य ॥ ३
अप्रकाशानां समुद्धर्तृ ध्रुवं ज्योतिः प्रमाद्यताम्।
अस्तु मे शरणं वस्तु चिदानन्दमयं महत् ॥ ४
भट्टपल्लीनिवासस्य शिव! श्रीशिवशर्मणः।
कल्याणवल्लिसोमे कृतौ प्रीतिरिहास्तु ते ॥ ५

इति शाण्डिल्यान्वयसम्भव श्रीशिवप्रसादभट्टाचार्यकृताया-
मलङ्कारकौस्तुभमौक्तिकावल्या-उत्तरार्द्धमवसितम्।
समाप्तोऽयं ग्रन्थः। शम्।

# परिशिष्टम् ।



छत्रबन्धः ।

मधुरो मधुनां राधानखश्रीचरितद्युति ।
छत्रपाणां सुधासिन्धुधारा सा तु यशो दुध ॥
(२०१ पृ°)



शङ्खबन्धः ।

धेयमाधुर्यमर्यादा राधा माधवसार सा ।
सारमाऽऽधवमाधारा धेयमाधुर्यसौभगा ॥
(२०१ पृ°)




### पताकाबन्धः ।

राम संसरसारब्धे राधा साऽर रमाधवम् ।
बम्भमाररमाधारामेऽरं सारसतमरा ॥
(२०२ पृ)

### गदाबन्धः ।

राम संसरसारब्धे राधा साऽर रमाधवम् ।
बम्भमाररमाधारामेऽरं सारसतमरा ॥
(२०१ पृ)






### पताकाबन्धः ।

राम संसरसारब्धे राधा साऽऽर रमाधवम् ।
ममभाररमाधांसमिरं सारसतंमरा ॥
(२०१ पृ)

### गदाबन्धः ।

राम संसरसारब्धे राधा साऽऽर रमाधवम् ।
ममभाररसाधारसमेऽरं सारसतमरा ॥
(२७१ पृ.)



आराध्यते सत्प्रतिपत्तिमद्भि-
धर्मो यदायं भवने वने वा ।
श्रीमन्ति हित्वा भवनान्यतस्त्वं
कस्मादरण्येषु मतिं करोषि ॥ ५ ॥

परप्रसादार्जितभैक्षवृत्ति-
रगण्यमानः खलसज्जनेन ।
कुचेलभृद्बन्धुसुहृद्विहीनो
वनान्तभूमावपविद्धकाय. ॥ ६ ॥

मूर्तं दरिद्रत्वमिवोपगुह्य
कथं नु शोकस्य वशं प्रयासि ।
इमामवस्थां हि तवेक्षमाणा
द्विषोऽपि बाष्पापिहितेक्षणाः स्युः ॥ ७ ॥

तदेहि पित्र्यं भवनं तवेदं
श्रुतार्थसारं भवतापि नूनम् ।
संपादयेथा निर्वसंस्तमत्र
धर्मं च सत्पुत्रमनोरथं च ॥ ८ ॥

लोकप्रवादः खल्वपि चैष.—

परकर्मकरस्यापि स्वे निपानसुखा गृहा ।
किं पुन· सुखसप्राप्ताः समृद्धिज्वलितश्रियः ॥ ९ ॥

अथ बोधिसत्त्वः प्रविविक्तसुखामृतरसपरिभावितमतिस्तत्प्रणयहृदय. समुपलब्धविशेषो गृहवनवासयो. कामोपभोगनिमन्त्रणाया तृप्त इव भोजनकथायामसुखायमान उवाच—

इदं स्नेहोद्गतत्वात्ते काममल्पात्यय वचः ।
सुखसञ्ज्ञां तु मा कार्षीः कदाचिद्गृहचारके ॥ १० ॥

गार्हस्थ्यं महदस्वास्थ्यं सधनस्याधनस्य वा ।
एकस्य रक्षणायासादितरस्यार्जनश्रमात् ॥ ११ ॥

यत्र नाम सुखं नैव सधनस्याधनस्य वा ।
तत्राभिरतिसंमोहः पापस्यैव फलोदय ॥ १२ ॥

यदपि चेष्टं गृहस्थेनापि शक्यमयमाराधयितुं धर्म इति काममेवमेतत् । अतिदुष्करं तु मे प्रतिभाति धर्मप्रतिपक्षसंबाधत्वाच्छ्रमबाहुल्याच्च गृहस्य । पश्यतु भवान् ।

---

१ Mss. तवेक्ष्यमाणा. २ Mss निरसस्त्व°.